# संस्कारतत्त्वसमीक्षा

2.4


डॉ० रमागोविन्द त्रिपाठी

धर्मशास्त्र पुराणेतिहासाचार्य—साहित्यरत्न-चक्रवर्ती

(पी०एच०डी०) पुराणेतिहासविभागाध्यक्षः

श्री मायानन्दगिरिसंस्कृतमहाविद्यालय

वाराणसी



विश्व वाणी प्रकाशन

बी २७/८०, दुर्गाकुण्ड—वाराणसी

सम्वत २०३६ दीपावली मूल्य ८०/

# संस्कारतत्त्वसमीक्षा

डॉ० रमागोविन्द त्रिपाठी
धर्मशास्त्रपुराणेतिहासाचार्य—साहित्यरत्न-चक्रवर्ती
( पी०एच०डी० ) पुराणेतिहासविभागाध्यक्षः
श्री मायानन्दगिरिसंस्कृतमहाविद्यालय
वाराणसी

विश्व वाणी प्रकाशन
बी २७।८०, दुर्गाकुण्ड—वाराणसी

सम्वत् २०३८ दीपावली मूल्य ८०/

प्रकाशक :–विश्व वाणी प्रकाशन
बी २७/८० दुर्गाकुण्ड–
वाराणसी



प्रथम संस्करण :–१९८१ (दीपावली)

मुद्रक :–जयन्ती प्रेस एण्ड प्रकाशन
भदैनी–वाराणसी

मूल्य : ८०/



देवी स्वरूपश्रद्धामयी, माता, श्रीमती शारदादेव्याः सश्रद्धयाः

॥ समर्पणम् ॥

रमागोविन्द त्रिपाठिनः

श्रीगणेशाय नमः

# प्राक्कथन

संस्काराः कस्मिंश्चिदपि वस्तुन्युत्कर्षाधायका इति नास्त्यविदितं विद्यैकवित्तानां विदुषाम्। एते च संस्कारा द्विजत्वप्रापकास्त्रैवर्णिकानाम्। बीजसंस्काराभ्यां जातोत्पत्तिकत्वादेव त्रैवर्णिका द्विजा इत्युच्यन्ते। अत एव द्वाभ्यां जायत इति द्विज इत्येव व्युत्पत्तिः द्विजशब्दस्य। द्विर्जायत इति द्विज इति व्युत्पत्तौ तु द्विशब्दस्य सुजर्थे लक्षणायां गौरवं स्यात्। संस्कारा षोडशसंख्याका वैदिकपरम्परायां प्रसिद्धाः। एतैश्च षोडशसंख्याकैः (यथाविधि) संस्क्रियमाणाः पुरुषाः षोडशकलत्वं प्राप्नुवन्तः पूर्णतां प्रापुरित्यत्र इतिहासपुराणादयः प्रमाणम्।

यद्यपीयं विचिकित्सा जायते षोडश संस्काराः त्रैवर्णिकस्य गृहस्थस्यैवाधिकारितां ग्राहयन्तः मोक्षैककामान् अन्त्याश्रमिणः शूद्रनिष्ट्यादींश्च पर्युदस्यन्तः न सर्वस्य पूर्णत्वप्रापकाः। अपि च धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु परमपुरुषार्थस्य मोक्षस्य संस्क्रियमाणाः कर्मिणो नाऽधिकारिणः सततं मोक्षपरिपन्थियागादिक्रियाशीलत्वात् मोक्षे च उपरतस्यैवाधिकारित्वात्। तदुक्तम्—

> अर्थस्य मूलं निकृतिः क्षमा च, कामस्य चित्तं च वपुर्वयश्च।
> धर्मस्य यागादि दया दमश्च, मोक्षस्य चैवोपरमः क्रियाभ्यः॥

ऋते ज्ञानान्न मुक्तिः, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय इत्यादि श्रुतिभ्यश्च मोक्षस्य ज्ञानैकसाध्यत्वादुपशमशीलस्य च श्रवणमनननिदिध्यासनादिना तत्त्वज्ञानवत्त्वाद् विरागवन्त उपरता एव मोक्षाधिकारिणः। किन्तु निषेधाश्च बलीयांसः इति न्यायेन 'नाऽतप्ततनुः पश्यति', 'नाऽयमात्मा बलहीनेन लभ्यः' इत्यादीनां प्राबल्यात् तपसः परमावश्यकत्वं गम्यमानम् ज्ञानसाधनतायां पर्यवस्यति।

शास्त्रविहितं विध्यनुरोधि च तपः ज्ञानसाधनम्, अन्यथा क्रियमाणं तु निषिद्धाचरणत्वादधर्महेतुः। कायिकं वाचिकं मानसञ्चेति त्रिविधं तपउपार्जितैनोनिर्वहणद्वारा ज्ञानाधिकारितां जीवस्य सम्पादयति प्रतिबन्धकाभावस्य कार्यमात्रहेतुत्वात्। शास्त्रप्रमाणेषु तपःसु सर्वत्र सर्वस्य नाधिकारः।

केवलं गतानुगतिकतायां क्रियमाणं तपो निःश्रेयसविरोधि स्यात् अतः कस्य कुत्र कर्मात्मके तपस्यधिकार इति विचार्यमाणे संस्कारा अधिकारिणः क्रियमाणत्वेन सद्य एव पुरतः स्फुरन्ति। श्रूयते हि संस्कृतस्यैव त्रैवर्णिकस्य गायत्र्यादि जपेऽधिकारः नाऽसंस्कृतस्य। 'अर्थी समर्थोऽपर्युदस्तश्चाधिकारी' इति न्यायेन कामनाभेदादधिकारिभेदात् सामर्थ्यभेदाच्च विभिन्नेषु कर्मसु पुरुषा अधिकृता।

वयोभेदेन विभिन्नेषु आश्रमेषु तत्कालोचितं कर्म कुर्वन्तः संस्कृता पुरुषा चित्तशुद्धिचित्तैकाग्र्यसम्पादनद्वारा ज्ञानाधिकारिणो भवन्तीत्यत्र नाऽस्ति विवादः। तदुक्तं कविभिः –

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धक्ये मुनिवृत्तीनाम् योगेनान्ते तनुत्यजाम्॥

अयं चाश्रमविभागः तत्तत्संस्कारैः संस्कृतस्य पुरुषस्य मोक्षप्राप्त्यर्थं आवश्यकानां कृत्यानां निर्वाहार्थम्, यतः चित्तशुद्ध्यर्थं कर्मणाम्, ऐकाग्र्य-सम्पादनार्थमुपासनायाः, तत्वज्ञानार्थञ्च विचारस्य परमावश्यकार्थकत्वम्। तदुक्तम्—

कर्माणि चित्तशुद्ध्यर्थम्, ऐकाग्र्यार्थमुपासना।
वस्तुसिद्धिविचारेण, न किञ्चित्, कर्मकोटिभिः॥

अतः संस्कृतो द्विजः ब्रह्मचर्यगार्हस्थ्ययोर्विहितकर्माणि कुर्वन् चित्तशुद्धिं सम्पादयति, वानप्रस्थे च दूरे वसन् उपासनया रागादीन् नाशयन् मोहपाशं छित्त्वा इहामुष्मिकफलभोगे विरक्तः त्यक्तसमस्तकर्मबन्धः मोक्षार्थं यतते अन्त्याश्रमे। अतः प्रत्याश्रमं संस्काराणां वर्तते आवश्यकता अधिकारिता सम्पादनाय।

कर्मिणो गृहस्थस्य मोक्षो न स्यात् मोक्षसाधकोपरतेरभावदिति त्रिचिकित्सा याज्ञवल्कीयं वचनं स्मरतो हृदयादपसरति। तदुक्तं महर्षिभि.—

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपीह मुच्यते॥ (या० व०-२०५)

मिताक्षरायां च--सत्प्रतिग्रहादिन्यायेनोपार्जितधनः अतिथिपूजातत्परः नित्यनैमित्तिकश्राद्धानुष्ठाननिरतः सत्यवदनशीलः सन्नात्मतत्त्वध्याननिरतो गृहस्थोऽपि हि यस्मात् मुक्तिमवाप्नोति तस्मान्न केवलमैहिक पारिव्रज्य-

परिग्रह एव मुक्तिसाधनम् इत्येवं श्लोकार्थो वर्णितस्तेनेदं निश्चप्रचम् यत् उपर्युक्त विशेषणविशिष्टा गृहस्था अपि यथोक्तेन विधिना मुच्यन्ते, अतो न संस्कारनिरतत्वं आरुरुक्षोर्बाधकम् । अपि च संस्कारैर्विना आश्रमित्वसम्पत्तेर्गर्भवासादिजनितैतोनिवृत्तेश्चाभावात् संस्काराणां काल-निर्णयस्य अतीवावश्यकत्वात् तदर्थम् उपलभ्यमानानां परस्परविरुद्धवचसां तात्पर्यार्थनिर्णयस्यापेक्षितत्वात् अनेके धर्मशास्त्रप्रबन्धाः प्रख्यातयशोभिर्विद्वद्भिः पूर्वं प्रथिता अद्यत्वे संशयपङ्कनिमग्नानाम् मादृशाम् निर्णयपथप्रदर्शनेन मनोमोदं तन्वन्ति ।

कालवेगेन एते निबन्धा अपि दुरूहतां भजन्तः सर्वजनबुद्ध्यसंवेद्याः पुनः परिशीलनीयतां संजाताः अतोऽधुनातना अपि विद्वांसो संस्काराणां कालादिनिर्णयार्थम् पूर्वप्रथितधर्मशास्त्रनिबन्धानाम् आर्षवचनानाञ्च समन्वयपूर्वकम् नूतनप्रबन्धान् रचयन्ति । एतादृश एव कश्चन प्रयासः डा० रमागोविन्द त्रिपाठिभिर्विहितः नूनं सहृदयानां चेतांसि आवर्जयिस्यतीति विश्वसिमि ।

अत्र ग्रन्थे षोडशसंस्काराणां कालनिर्णयः अधिकारिनिर्णयः प्रतीयमान-विरुद्धवचसां समन्वयः स्वकीयं हार्दञ्च यत्र तत्रोपलभ्यमानम् ग्रन्थकृतो ग्रन्थ-निबन्धनप्रयासं सफलयति । अयं संस्कारतत्त्वसमीक्षा नाम ग्रन्थः संस्कारान् तत्त्वतः समीक्षमाणो विदुषां मनोमोदं तन्वन् संस्कारतत्त्वनिर्णयाय प्रभविष्यतीति आशासे ।

:

पं० रघुनाथ शर्मा
व्याकरणाचार्यः, भूतपूर्व विभागाध्यक्षः
वाराणसेय सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी ।

# पूर्वकथनम्

रमागोविन्द त्रिपाठी

संस्कृतवाङ्मये धर्मशास्त्रस्य महत्त्वं विदुषां नाविदितम्। तत्र संस्काराणां तत्प्रतिपादकशास्त्रप्राणायमाणानामावश्यकताऽपि सर्वैर्विद्वद्भिर्मुक्तकण्ठेन स्वीकृता। षोडश संस्काराणां भारतीयसंस्कृतौ प्राधान्यमङ्गत्वञ्च स्वीकृतमेवास्ति एतेषां व्यापकता भारतीयसमाजे सर्वेषां मनुष्याणां जन्मनः पूर्वस्मादेवारभ्य न केवलं मरणान्तमपितु ततोऽपि पश्चाद्यावत् वरीवर्ति। वस्तुतो भारतीयाचारविचारयोर्जीवनस्य च विशालः प्रासादः संस्काराणां दृष्टास्विस्विकास्वेव समुत्थापितो वर्तते। संस्कारा एव भारतीयत्वस्य तादृशः कोऽप्यपूर्वो विशिष्टः कर्मप्ररोहो यः खलु समस्ते जगति सर्वेभ्यः धर्मेभ्यः संस्कृतिभ्यश्चास्य गौरवान्वितां संस्कृतिं पृथक्कुर्वन्ति। अस्य देशस्य सर्वं जीवनस्रोतस्तत एवं समुत्पन्नं तत्रैवोद्भूतं चान्ते समाहितं भवति। अतः प्राचीनकालादारभ्याद्यावधि यावत् संस्काराणां वर्णने तेषां महत्व प्रतिपादने तेषां सार्वजनीनत्व समुद्घोषणे च वेदाङ्गभूतानि गृह्यसूत्राणि पुराणानि स्मृतयश्च विशिष्टतयोल्लेखनीयाः।

संस्कारत्वन्नाम परिस्कारत्वम्। यथा हीरकादयो मणयः निघर्षणादिसस्कारसंस्कृताः कस्मैचिद् वैशिष्ट्याय कल्प्यन्ते यथा वा गुडो विशिष्टद्रव्यसंयोगसंस्कृतः शर्करात्वमापद्यते तथैव उत्पन्नो बलकोऽपि उपनयनादिसंस्कारसंस्कृतो द्विजत्वमाप्नोति, अन्यथा तस्य शूद्रत्वमेव तिष्ठति।

यदुक्तम्—जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते। ब्रह्मत्वसंम्पादका इमे संस्कारा एव। येषां प्रभावेण मृत्पिण्डस्वरूपो मनुष्यो मणीयते। यदुक्तम्—

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानापमृज्यते॥ २७॥
स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥ २८॥

अतो भारतीयसंस्कृतौ संस्काराणां महत्त्वं सर्वोपरि वर्तते। (मनु०—२)



डॉ० रमागोविन्द त्रिपाठी

लेखकपरिचय :—जन्मस्थानम् ग्रा० रिमारी, जनपदम् सतना (म० प्र०), मातुर्नाम सुखरानी देवी पितुर्नाम श्री पं. रघुनन्दनप्रसाद त्रिपाठी प्राथमिक शिक्षा सतनामण्डलान्तर्गतबैरहना ग्रामे उच्च शिक्षा—श्रीमती शारदादेवी संरक्षकत्वे—सम्पूर्णानन्द संस्कृतविश्वविद्यालय-काशी हिन्दू विश्वविद्यालययोः। शैक्षणिकी योग्यता पुराणेतिहासाचार्यः धर्मशास्त्राचार्यः, साहित्यरत्न, पी०एच०डी० (चक्रवर्ती), अध्यापनम्—सम्प्रति विभागाध्यक्षः पुराणेतिहासविभागस्य, श्री मायानन्दगिरि संस्कृत महाविद्यालये वाराणसीस्थ लक्ष्मणपुरे। ग्रन्थ :—सनत्सुजातीयस्य व्याख्या (हिन्दी-संस्कृतयोः) सम्पादनम्—अभिमन्यु चरितम् कर्मकाण्डप्रदीपिका, गुरुवास्तवराजः इत्यादीनाम्। मन्त्री—धर्मसंघ शिक्षामण्डलस्य तथा न्यासां संस्थानाम्।

'संस्कारतत्त्वसमीक्षा' ग्रन्थोऽयं धर्मशास्त्रविषयकः। सम्पन्ने च तस्मिन् तं दृष्ट्वा संस्काराणां च महत्त्वमाकलयतां केषांचिद् गुरुवर्याणां बहूनाञ्च मित्राणामपि तस्य निबन्धस्य पुस्तकरूपेण प्रकाशनायानेकशो निर्बन्ध आग्रहो जातः। एतेषां मुहुर्मुहुः प्रेरणया मदीयेऽपि मनसि सम्पादनसमीहा समुत्पन्ना। परञ्च तत्संपादन-कर्मकाठिन्यं द्रव्यस्यावश्यकता च तन्मदीयं संकल्पं शिथिलीचकार। वर्षेऽस्मिन् पुनरपि मित्राणामाग्रहेणास्य सम्पादननिरतोऽभवम्।

भगवतो विश्वनाथस्य दयया सत्स्वपि बहुषु विघ्नेषु ग्रन्थोऽयं परिपूर्णतां गतः। ग्रन्थोऽयं यदि एतद्विषयजिज्ञासूनां स्वल्पमपि संतोषावहो भविष्यति तर्हचस्य ग्रन्थस्य प्रकाशनसाफल्यमात्मनश्च श्रमं सार्थकमवधारयिष्यामि।

अस्य प्रकाशणे प्रोफेसर राजेन्द्रप्रसाद पाण्डेयमहोदयानां का० हि० वि० विद्यालये धर्मशास्त्रविभागाध्यक्षाणां तत्रैव पालीसंस्कृत-विभागाध्यक्षानां श्री नारायण मिश्राणां, सम्पूर्णानन्द सं० वि० विद्यालये व्याकरणविभागाध्यक्षाणां श्री कालिकाप्रसाद शुक्लमहोदयानां, पण्डितराज श्री निरीक्षणपति महोदयानां का० हि० वि० विद्यालये भूतपूर्व-व्याकरण-विभागाध्यक्षाणां परमश्रद्धेयानां गुरुवर्याणां येषां सर्वदा मार्गदर्शनं लब्धं तेभ्यः सश्रद्धं प्रणामाञ्जलिं समर्पयामि। सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य भूतपूर्व-व्याकरण,वेदान्त-विभागाध्यक्षाणां श्री रघुनाथ शर्मणां पादयोः सभक्तिकं समादरपुष्पके दीयते यैरस्य भूमिकां विलिख्य जनोऽयं स्वप्रेमभाजनीकृतः। डॉ० शिवदत्त चतुर्वेदि महोदयेभ्यो कैः शब्दैः कृतकृत्यतां ज्ञापयामि यैरस्य ग्रन्थस्य सम्पादनाय वारं-वारं प्रेरणां दत्वाहमुत्साहितः।

अन्ते च श्री भालचन्द्र पाण्डेयाय श्री प्रकाश मिश्राय च मित्रद्वयाय साधु-वाददानं कथं विस्मरामि याभ्यां सततंमस्य सम्पादने सहयोगो विहितः।

:

दीपावली सं० २०३९ रमागोविन्द त्रिपाठी

# विषयसूची

॥ श्री हरिः ॥

# संस्कारतत्त्वसमीक्षा

## आमुखम्

नाथः सृजत्यवति यो जगदेकपुत्र-
प्रीत्या ततः परमनिर्वृतिमातनोति ।
तस्मै नमः सहजदीर्घकृपानुबन्ध-
लब्धत्रितत्त्वतनवे पुरुषोत्तमाय ॥

इह सकलचराचरमये जगति भगवता परमेश्वरेण प्राण्यनुग्रहार्थं सृष्टेः चराचरयोः चरः श्रेयान्, चरेष्वपि विकसितः विवेकातिशयो मानवः श्रेष्ठ इति निर्विवादम् । तत्रापि गुणकर्मविभागः[1] मुखबाहूरुपादेभ्यः[2] चातुर्वर्ण्यं सृष्टम् । नात्रेश्वरस्य कश्चन स्नेहो विद्वेषो वा, 'ममैवांशो जीवलोके जीवभूतः सनातनः[3]' इत्यादिना सर्वं प्रति समत्वप्रतिपादनात् । तत्राद्यास्त्रयो वर्णाः ब्राह्मणक्षत्रियवैश्याः येषु येषु कार्येषु नियोक्तव्यास्तेषु तेषु तत्तदधिकारपरिनिष्पत्यर्थं काचन योग्यताऽपि निर्धारितैव वर्त्तते । तत्र प्रथमं कर्तव्यान्येव द्रष्टव्यानि सर्ववर्णानाम्—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्म कर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥
कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्[4] ॥ इति गीतायाम् ।

श्रीमद्भागवतेपि—

शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
ज्ञानं दयाच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम् ॥

---

(१) चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ॥ गीता ४ १३

(२) ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्र अजायत ॥ ऋ० वे० १० ९० १२

(३) गीता १५ ७

(४) गीता १८ ४२-४४

शौर्यं वीर्यं धृतिस्तेजः त्यागश्चात्मजयः क्षमा ।
ब्रह्मण्यता प्रसादश्च सत्यञ्च क्षत्रलक्षणम् ॥
देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥
शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया ।
अमन्त्रयज्ञो ह्यस्तेयं सत्यं गं विप्ररक्षणम्[१] ॥ इति

मन्वादिभिः स्मृतिकारैरपि समर्थितोऽयमर्थः ।

एतानि च कर्माणि शास्त्रोपदिष्टानि शरीरेन्द्रियादिसाध्यान्येवेत्यत्र न किमपि वक्तव्यम् । शरीरं पुनः परमशुद्धम् । अत एवाहुः—

स्थानाद् बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिताः ह्यशुचिं विदुः[२] ॥ इति ।

स्थानम् मूत्राद्युपहतं मातुरुदरम् । बीजं पित्रोर्लोहितरेतसी । उपष्टम्भः अशितपीतादिरसादिभावः, तेन हि शरीरं धार्यते । निःष्यन्दः प्रस्वेदः । निधनं मृत्युः, स च श्रोत्रियशरीरमपि अपवित्रयति, अतएव तत्स्पर्शे स्नानविधिः । आधेयशौचत्वम् स्नानादिना संशोधनम् । एतावता शरीरस्यात्यन्ताशुचित्वम् प्रतिपादितम् । अत एव श्रीमद्भागवतमाहात्म्येऽपि कथितम्—

अस्थिस्तम्भं स्नायुबद्धं मांसशोणितलेपितम् ।
चर्मावनद्धं दुर्गन्धं पात्रं मूत्रपुरीषयोः ॥
जराशोकविपाकार्त्तं रोगमन्दिरमातुरम् ।
दुष्पूरं दुर्धरं दुष्टं सदोषं क्षणभङ्गुरम् ॥
कृमिविड्भस्मसंज्ञान्तं शरीरमिति वर्णितम्[३] ॥ इति ।

अतो यावत् शुद्धिः शरीरस्यास्य न क्रियते तावदत्र कर्मसाधनता नागच्छति । अकुर्वन् स्वकीयं कर्म नरः प्रायश्चित्तीयते[४] । तत्रापि कामत उपेक्षायां सत्यां प्रायश्चित्तेनापि पापनाशो भवेन्न वा भवेदित्यत्रापि संशय एव । अतः प्रायश्चित्तीयत्वपरिहारार्थः भविष्यति जन्मनि सत्कुलावाप्त्यर्थं, वर्तमाने साधु

(१) श्री० भा० ७/११/२१-२४
(२) यो० सू० व्या० भा० २/५
(३) श्रीमद्भागवतमाहात्म्यम्—५ ५८-६० ।
(४) अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥ म० स्मृ० ११ ४५

जीवननिर्वाहार्थमपेक्षमाणाय कर्माचरणायात्मानं योग्यं विधातुं मानवः स्वशरीरं शोधयेदेव। एतदेव शोधनं शरीरस्य संस्कारार्थः। अत एवाह मनुः—

गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः
वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते[1] ॥ इति।

अपि च—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ इति।
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः[2] ॥ इति च।

शङ्खलिखितावप्याहतुः—

संस्कारः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः।
नित्यमष्टगुणैर्युक्तो ब्रह्मणो ब्राह्मलौकिकः ॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः।
नाकपृष्ठं यशो धर्मस्त्रिरीजानस्त्रिविष्टपम्[3] ॥ इति।

अङ्गिरसा तु ब्राह्मण्यव्यञ्जकत्वं संस्काराणामुक्तम्—

चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः[4] ॥ इति।

इदं चोपलक्षणं क्षत्रियत्वादेरपि। याज्ञवल्क्योऽप्याह—

एवमेनः शमं याति बीजगर्भसमुद्भवम्[5] ॥ इति।

हारीतोऽपि ऋषिसामान्यतादिफलं संस्कारणाम् वर्णयन्वि—

"ब्राह्मसंस्कारसंस्कृतः ऋषीणां समानतां सामान्यतां समानलोकतां सायोज्यतां गच्छति। दैवेनोत्तरेणसंस्कारेणानुसंस्कृतो देवानां समानतां सामान्यतां समानलोकतां सायोज्यतां च गच्छति[6]"। इति। समानो

---

(१) म० स्मृ० २/२७
(२) म० स्मृ० २/२६
(३) सं० प्र० पृ० १४०
(४) सं० प्र० पृ० १३६
(५) या० स्मृ० १/१३
(६) सं० प्र० पृ० १३९-४०

मानः पूजा यस्य स समानः, तस्य भावः समानता। सम्मान्यशब्दः समान-पर्यायः, तेन तुल्यरूपता लभ्यते। समानलोकता एकलोकनिवासः। समानमायोज्यं शरीरं यस्य स सायोज्यः, तस्य भावः सायोज्यता सर्वं चैतत् असतिशरीरादिसंस्कारे सम्भवतीति शरीरादिशुद्धिरर्थाल्लभ्यते।

अत्रेदमपि बोध्यम्—यद्यपि संस्काराः कतिपये क्षेत्रस्यैवेति वक्ष्यते तथापि तेषामपि जातस्य जनिष्यमाणस्य वा संस्कारकत्वं सिद्धमेव। यथाह देवलः—

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता।
यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत्[1] ॥ इति।

इदमपि चावधातव्यम्—शरीरादिसंस्कारकाणामेतेषां कर्मणां करणेन परम्परया आत्मशुद्धिः चित्तशुद्धिरपि वा भवत्येव। अत एव 'ब्राह्मीयं क्रियते तनुः' इत्यपि संगच्छते। अन्यथा सशरीरस्य ब्रह्मप्राप्त्यभावात्तदसंगतिः स्पष्टैव। अत्र संस्कारमधिकृत्य यदुक्तं स्मृतिसंग्रहे तदुपस्थाप्यते विषयस्फोरणाय—

निषेकाद् बैजिकं चैनो गार्भिकं चापमृज्यते।
क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम् ॥
गर्भे भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम्।
निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः ॥
गर्भाम्बुपानजो दोषो जातात् सर्वोऽपि नश्यति।
आयुर्वर्चोभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ॥

नामकर्मफलं चैतत्समुद्दिष्टं मनीषिभिः।
सूर्यविलोकनादायुरभिवृद्धिर्भवेद्ध्रुवा ॥
निष्क्रमादायुः श्रीवृद्धिरप्युद्दिष्टा मनीषिभिः
अन्नाशनान्मातृगर्भमलाशादपि शुध्यति ॥
बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम्।
उपनीतेः फलं त्वेतद्द्विजतासिद्धिपूर्विका ॥
वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरिता।
देवपित्रर्णापगमो विवाहस्य फलं स्मृतम्[2] ॥ इति।

एतेषां च फलानां न सामान्यफलप्रतिपादकेन मन्वादिवचनेन कश्चन विरोधः,

(१) मिताक्षरा-१/११
(२) सं० र० मा० पृ० ६

सामान्यविशेषत्वादेव। तत्र च गुणोपसंहारन्यायेन यथायथं समुच्चयो बोद्धव्य एव।

येऽपि स्त्रीशूद्रादयः सन्ति तेषामपि संस्कार्यत्वम् विद्यत एवेति तेषामपि शरीरादिशुद्धिरस्त्येव फलम्। किन्तु तेषां संस्कारोऽमन्त्रक एवेति विशेषः। अत एवाह मनुः—

"अमन्त्रिका तु कार्येयम् स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्[1] ॥"

केवलं विवाहः स्त्रियाः समन्त्रक एव स्यात्। यथाह मनुरेव—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः[2] ॥ इति।

याज्ञवल्क्योप्यनुवदत्येनमेवार्थम्—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः[3] ॥ इति।

शूद्रस्याप्येते संस्कारा यथासम्भवं कार्या एवामन्त्रकाः। अत एव संस्कारानुक्त्वा यम आह—

शूद्रोप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः[4] ॥ इति।

न चात्र भ्रमितव्यम् यदमन्त्रकत्वात्स्त्रीशूद्रसंस्काराणां तेषां शरीरादिशुद्धिर्नास्तीति, शास्त्रमेव हि प्रमाणम्। शास्त्रं चामन्त्रकमेवैतेषां संस्कारमभिधत्ते, न पुनः संस्काराणां विना मन्त्रेण कृतानामफलत्वमपि, असति विशेषानुशासने 'एवमेनः शमं याति बीजगर्भसमुद्भवम्'[5], इत्यस्य संकोचासम्भवात्।

यद्यपि 'वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते[6]' इति मनुवचने द्विजानामित्युपात्तम् तस्यापि उपलक्षणत्वमेव, न तु तस्यार्थः संकोचयितव्यः, प्रमाणाभावात्। अन्यथा वैदिकेऽपि बहुत्र 'द्विस्तूष्णीम्' इत्याद्युक्तेस्तत्तद्विधेरफलत्वमेवापद्येत। तस्मात् समन्त्रकोस्तु संस्कारोऽमन्त्रक एव वा, फलं तु तस्य यथाशास्त्रं प्राप्तव्यमेव। विशेषस्तु तत्र तत्र प्रसंगे वक्ष्यत एव।

---

(१) म० स्मृ० २/६६
(२) म० स्मृ० २/६७
(३) या० स्मृ० १/१३
(४) सं० र० मा० पृ० ५/सं० म० पृ० १२
(५) या० स्मृ० १/१३
(६) म० स्मृ० २/२७

स चायं संस्कार आत्मनो नवेत्यत्र यथादर्शनं व्यवस्था ज्ञेया। ब्रह्मवादिनां हि नात्मसंस्कारः, किन्तु शरीरान्तःकरणादीनामेव। अन्येषां पुनर्दर्शने आत्मन्यपि संस्काराधानं भवत्येव। तदत्रं न वयं विवदामहे, संस्काराणां साक्षात्परम्परया वोत्कर्षाधायकत्वे सर्वेषामविरोधेनैव अस्माकमिष्टसिद्धेः। तस्मादविचारणीयमेवैतत्-आत्मा संस्कार्यो न वेति।

तदेवं संस्कारस्यात्यावश्यकत्वे सिद्धे तेषां विशेषावधारणाय शब्दार्थो विविच्यते—

## संस्कारशब्दार्थः

सर्वशब्दानां धातुज[1]त्वात् संस्कारशब्दस्यापि धातुजत्वमिति प्रथमतो व्युत्पत्तिमस्य शब्दस्य विवेचयामः। समुपसर्गविशिष्टात् 'कृ' धातोः 'घञ्'[2] प्रत्यये सति "सम्परिभ्यां करोतौ[3] भूषणे", "समवाये[4] च" इति पाणिन्यनुशासनबलेन सुडागमे सति संस्कारशब्दो निष्पद्यते। तत्र यद्यपि सुड्विधायकसूत्रद्वयप्रामाण्यात् भूषणम्-आभूषणम्-अलङ्करणम्, समवायः, सङ्घातश्चेति द्वावेवार्थौ संस्कारशब्दस्य भगवतः पाणिनेरभिमतावित्यापाततः प्रतीयते तथापि "संस्कृतम्" 'संस्कृतं भक्षा'[5] इति पाणिनिनैवोक्ततया भूषणसमवायाभ्यां भिन्नेऽप्यर्थे संस्कारशब्दस्य साधुत्वं लभ्यत एव[6]। "संस्कृतं भक्षाः" इत्यादौ च संस्कारशब्दः उत्कर्षाधाने-गुणाधाने-वर्त्तत इति वृत्तिकाराः[7]।

यद्वा भोजनादिरूपोपयोगफला क्रियैव प्रकृते संस्कारशब्दार्थः, न गुणाधान[8]मात्रम् इत्यपि वक्तुं शक्यम्। भूषणसमवायाभ्यां भिन्नेऽप्यर्थे संस्कार-

---

(१) नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। यास्कनिरुक्तम्-१/१२ २

(२) द्रष्टव्यम्-पा० सू० ३/३/१८

(३) पा० सू० ६ १/१३७

(४) पा० सू० ६/१/१३८

(५) पा० सू० ४/२/१६

(६) सम्पूर्णस्य क्वचिदभूषणेऽपि सुडिष्यते-संस्कृतमन्नमिति संस्कृतं भक्षा इति निर्देशाल्लभते-पदमञ्जरी )-काशिकावृत्तिः-६/१/१३७ सम्पूर्णस्य क्वचिदभूषणेऽपि सुट्, संस्कृतं भक्षा इति ज्ञापकात्। सि० कौ०—पा० सू० ६/१/१३७

(७) सत उत्कर्षाधानं संस्कारः। काशिकावृत्तिः-४/२/१६

(८) सिद्धान्तकौमुदी-टिप्पणी-पा० सू० ४/२/१६

शब्दस्य पाणिनिनापि प्रयुक्तत्वादिदमपि सुव्यक्तमेव यत् भूषणसमवायावर्थौ संस्कारशब्दस्य व्युत्पत्तिनिमित्तम्, न तु प्रवृत्तिनिमित्तम्। युक्तं चैतत्, नहि शब्दानां यदेव व्युत्पत्तिनिमित्तं तदेव प्रवृत्तिनिमित्तमपि इत्यस्ति नियमः, तथा सति गमनार्थकाद् "गम्" धातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य तिष्ठन्त्यामुपविशन्त्यां च गवि प्रयोगो विरुध्येत[1]। अतएव हि "नित्यानां शब्दानां यथा कथञ्चिदन्वाख्यानं कार्यम्, रूढ्या सर्वदोष परिहारः" इति प्रतिपादितं "नृनरयोर्वृद्धिश्च" इति सूत्रे भाष्ये प्रदीपकृताऽपि[2]।

तत्रेदं विवेचनीयम्-संस्कारशब्दस्य किं प्रवृत्तिनिमित्तम् इति। एतन्निर्णयाय प्रथमं प्रयोगे केऽर्थाः प्रसिद्धाः संस्कारशब्दस्येत्यपि विचारणीयमेव। तत्र च मेदिनीकोशे—

"संस्कारः प्रतियत्नेऽनुभवे मानसकर्मणि[3]" इत्यर्थत्रये संस्कारशब्दो वृत्तिमान् इति प्रतिपादितम्। अमरकोशे तु विशिष्य संस्कारशब्दार्थो नोक्तः। 'संस्कृत' शब्दार्थप्रसंगे तु कथितम्-'अथ संस्कृतम्। कृत्रिमे लक्षणोपेतेपि'[4] इति। अत्र लक्षणोपेत इत्यस्य पाणिन्यादिसूत्रव्युत्पादित इत्यर्थः प्रोक्तो व्याख्यासुधायां भानुदीक्षितेन। अत्र पुनर्विशेष उक्तो मेदिन्यामेव—

"संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः।
क्लीवं तु लक्षणोपेते"[5] इति॥

एतावता (१) प्रतियत्नः=गुणाधानम्, (२) अनुभवः, (३) मानसं कर्म, (४) कृत्रिमत्वम्-कृतिविषयत्वम्, कृतिः- निर्माणम्, (५) प्रशस्यत्वम्, (६) भूषितत्वम्-भूषणम्, (७) व्याकरणजन्या शुद्धिश्चेति सप्तार्थाः संस्कारशब्दस्येति लभ्यते।

इदानीं 'शिष्टाः शब्देषु प्रमाणम्' इति निर्विचिकित्सव्यवस्थापितरीतिमनुरुध्य शिष्टप्रयोगानपि विमृशामः—

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव[6]॥ इति।

---

(१) सा० द० पृ० ७५
(२) म० भा० प्र० ४/१/७३
(३) मे० को० २२३
(४) अ० को० ३/३/८१
(५) मे० को० १६३-१६५
(६) रघुवंशम् १/२०

अत्र संस्कारः पूर्वकर्मवासना। अन्यत्रापि प्रसङ्गे—

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ॥

इति कालिदासस्य रघुवंशे दृश्यते। अत्र संस्कारशब्दस्य शाणोल्लेखनादिरर्थो व्याख्यातृसम्मतो युक्तश्च।

पुनश्च तत्रैव दृश्यते—

ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम्।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक्॥ इति।

अत्र च संस्कारशब्दो वर्त्तते[1] शास्त्राभ्यासजनितायां वासनायाम्। कुमारसम्भवेऽपि प्रयुक्तोऽयं शब्दः—

प्रभा महत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च॥ इति।

अत्र व्याकरणजन्या शुद्धिरेव संस्कार इति स्पष्टमेव। पुनश्च तत्रैव—

द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन॥ इति।

अत्रापि संस्कारशब्दस्योक्त एवार्थं इति न प्रतिपादनमपेक्षते। शाकुन्तलेऽपि शब्दोऽयं प्रयुक्त एव।

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम्॥ इति।

अत्र संस्कारशब्दो गुणाधानार्थक एव। यद्वाऽलङ्करणमेवार्थोऽत्र, तावतापि नासमञ्जसं वचः। एवमेवान्यत्रापि काव्य एवं विधेऽर्थे प्रयोगो दृश्यते संस्कार-

(१) रघुवंशम् ३/१८
(२) प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य-सञ्जीवनी, ३/१८
(३) रघुवंशम् ३/३५
(४) संस्कारेण=शास्त्राभ्यासजनितवासनया-संजीविनी, ३/३५
(५) कुमारसम्भवम् १/२८
(६) संस्कारो व्याकरणजन्या शुद्धिः-संजीविनी-कु० सं० १/२८ संस्कारवत्या=शब्दानुशासनादिभिः कृतसंस्कारवत्या तात्पर्यदीपिका—कु० सं० १/२८
(७) कुमारसम्भवम्-७/९०

शब्दस्य। शब्दस्य हि नानार्थत्वं नाप्रसिद्धम्। प्रायेण 'सर्वे सर्वार्थवाचकाः' इति पाणिनीयानामभ्युपगमो युक्त एव। अतो हि हेतोः संस्कारशब्दस्याप्यनेकार्थत्वं सम्भवत्येव। तत्र दृष्टिभेदाद् व्याख्याभेदोऽपि भवत्येव। अतएवोक्तश्लोकेऽपि दृश्यत एवार्थभेदः। धर्मशास्त्रे तु संस्कारशब्दस्य शुद्धिरेवार्थो दृश्यते।

यथा मनुस्मृतौ—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिद्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह[1] च॥

इत्यत्र संस्कारशब्दस्य शुद्धिरेवार्थः। 'संस्कारार्थं शरीरस्य यथाकाले यथाक्रमम्'[2] इत्यत्रापि स एवार्थः। 'गर्भाधानादिभिः संस्का. कर्मभिः' इत्यत्र तु संस्कारशब्दः शुद्धिजनककर्मविशेषपरः। 'द्विविधः संस्कारो भवति-ब्राह्मो दैवश्च। गर्भाधानादिः स्मार्तो ब्राह्मः[3] इत्यादिहारीतधर्मसूत्रेऽप्ययमेवार्थोऽभिप्रेतः।

मीमांसाशास्त्रे पुनः संस्कारः कर्मजन्योऽतिशयविशेषः संस्कार्यवस्तुनिष्ठः[4]। वैशेषिकतन्त्रे हि संस्कारत्वाख्यजातिविशेषसमवायिनि गुणविशेषे संस्कारशब्दः परिभाषितः[5]।

एतावता प्रतिफलतीदमेव यत् संस्कारशब्दो नानार्थक एव नैकार्थकः। इदं पुनश्चिन्तनीयम्—उक्ता अर्थाः संस्कारशब्दस्य शक्या एव, अशक्याश्च वेति। तत्रेदमस्माकं मतम्—

सत उत्कर्षाधानं गुणाधानमेव वा मुख्योऽर्थः संस्कारशब्दस्य, नानाशक्तिकल्पने गौरवादनावश्यकत्त्वाच्च। ये पुनः विहितक्रियाजन्योऽतिशयविशेषः तज्जनककर्मादयोऽर्थाः तत्र तत्र प्रतिपादितास्ते सर्वे लाक्षणिका एव संस्कारजनकत्वादिहेतोः। यद्वा विहितक्रियाजन्यस्यातिशयस्यापि न्यायादिशास्त्रे

---

(१) म० स्मृ० २/२६।
(२) म० स्मृ० २/६६।
(३) सं० प्र० पृ० १३५।
(४) एतच्च मतं न्यायकुसुमाञ्जलौ उदयनेन निरस्तम्-

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः।
स्वगुणः परमाणूनां विशेषाः पाकजादयः॥ इति॥
(न्या० कु० १/११)

(५) संस्कार इति। स च वेगस्य भावनायाः स्थितिस्थापकस्य चाभिधनम्। नान्वेवं तर्ह्याधिक्यम्? न; संस्कारत्वजात्यपेक्षया वेगभावनास्थितिस्थापकानामेकत्वात्। (न्यायकन्दली, पृ० २८)

गुणत्वेन परिभाषणात् अतिशय एवास्तु संस्कारशब्दस्य[1] मुख्योऽर्थः, तज्जनकत्वाच्च कर्मण्यपि तत्प्रयोग औपचारिक इति नावश्यकं नानाशक्तिकल्पनम्। अतिशयविशेषश्च कर्मभिन्नतरा पापनिवर्हणमशक्यंयोत्पाद इति संस्कारजनकस्य कर्मणो मन्वादिप्रतिपादितं पापापहारित्वमप्युपपन्नमेवेति[2] सर्वमनवद्यम्।

तदेवमतिशयविशेषस्य संस्कारशब्दशक्यार्थत्वेऽपि प्रकृते प्रबन्धे तज्जनकत्वेनौपचारिकीं संस्कारपदप्रतिपाद्यतां प्राप्तानां कर्मविशेषाणामेव कियतां विवेचनं प्रस्तोतव्यमस्माभिरिति परस्तात्तदुत्तरीकरिष्यते।

## संस्काराणां संख्या, नामानि च—

संस्कारसंख्याविषये[3] शास्त्रकाराणां नैकमत्यमस्ति। क्वचिदेकादशसंस्काराः, क्वचित् त्रयोदश, क्वचित्पुनः षोडशेत्यादिरूपेणोक्तत्वात् स्पष्टप्रतिपत्तयेऽत्र गृह्यसूत्रादिकाराणां केषाञ्चन प्रमुखामतान्युपस्थाप्यन्ते—

---

(१) आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः। ( सं० प्र० पृ० १३२ )

(२) वैदिकैः कर्मभिः पुण्यैर्निषेकादि द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैर्जातकर्मचौलड़मौञ्जीनिबन्धनैः।
वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ ( म० स्मृ० २.२६-२७ )

(३) अत्रेदमवधातव्यम्-'नैको मुनिर्यस्य मतं न भिन्नम्' इति कथने संस्काराधिक्येऽपि सत्यमेव। अत एव परस्परं संख्यागतो विवादः स्वरूपगतश्च। तत्रापि शाखाभेदेन कर्मभेदस्य शास्त्रसिद्धत्वात् एकस्यैव संस्कारस्य प्रयोगः एकत्र गृह्यसूत्रादौ यादृशो दृश्यते न तादृश एवान्यत्र सर्वत्रापि, अपि तु परस्परं भिन्न-भिन्न एव। तत्रैव शाखाविहितस्यान्यत्राविहितत्वे सत्यनुष्ठेयत्वं न मन्यन्ते शास्त्रकाराः। अत एव कात्यायन आह—

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्॥ इति। (सं० प्र० पृ० ५०७)

अतोऽत्र निबन्धे शाखाविशेषमनाश्रित्यैव संग्रथनीये न प्रयोगः प्रदर्शितः यत्तु सर्वेषामविरुद्धं यच्च मुख्यं कृत्यं तदेव यथावसरं दर्शितम्।

आश्वलायनगृह्यसूत्रे एकादशसंस्काराः कथिताः, विवृताश्चैवंक्रमेण-

१-विवाहः, २-गर्भाधानम्, ३-पुंसवनम्, ४-सीमन्तोन्नयनम्, ५-जातकर्म, ६-नामकरणम्, ७-चूडाकर्म, ८-अन्नप्राशनम् ९-उपनयनम्, १०-समावर्तनम्, ११-अन्त्येष्टिः ( मरणनिमित्तं श्राद्धादिकर्म )।

पारस्करे तु गृह्यसूत्रे त्रयोदशसंस्कारा अधोनिर्दिष्टक्रमेण प्रतिपादिताः

१-विवाहः, २-गर्भाधानम्, ३-पुंसवनम्, ४-सीमन्तोन्नयनम्, ५-जातकर्म, ६-नामकरणम्, ७-निष्क्रमणम्, ८-अन्नप्राशनम्, ९-चूडाकर्म, १०-उपनयनम्, ११-केशान्तः, १२-समावर्तनम्, १३-अन्त्येष्टिः।

बौधायनगृह्यसूत्रे पुनस्त्रयोदशैव संस्काराः यद्यपि विवृतास्तथापि तत्र केशान्तकर्म नास्ति निर्दिष्टम्, तत्स्थाने गृह्यशेषापरपर्यायः कर्णवेध एव दृश्यते। विवाहादयः संस्काराः पुनरत्रापीति नात्रांशे कश्चन विशेषः।

वाराहगृह्यसूत्रेऽपि त्रयोदशैव संस्काराः कथिताः—

१-जातकर्म, २-नामकरणम्, ३-दन्तोद्गमनम्, ४-अन्नप्राशनम्, ५-चूडाकर्म, ६-उपनयनम्, ७-वेदव्रतानि, ८-गोदानम्[1], ९-समावर्तनम्, १०-विवाहः, ११-गर्भाधानम्, १२-पुंसवनम्, १३-सीमन्तोन्नयनम्,

वैखानसगृह्यसूत्रे तु अष्टादशसंस्कारा उक्ताः—

१-ऋतुसंगमनम्, २-गर्भाधानम्, ३-सीमन्तः, ४-विष्णुबलिः, ५-जातकर्म, ६-उत्थानम्, ७-नामकरणम्, ८-अन्नप्राशनम्, ९-प्रसवागमनम्, १०-पिण्डवर्धनम्, ११-चोलकम्, १२-उपनयनम्, १३-पारायणम्, १४-व्रतबन्धविसर्गः, १५-उपाकर्म, १६-उत्सर्जनम्, १७-समावर्तनम्, १८-पाणिग्रहणम् चेति।

गौतमधर्मसूत्रे पुनश्चत्वारिंशत् संस्कारा निर्दिष्टाः।

१ गर्भाधानम्, २ पुंसवनम्, ३ सीमन्तोन्नयनम्, ४ जातकर्म, ५ नामकरणम्, ६ अन्नप्राशनम्, ७ चौलम्, ८ उपनयनम्, ९-१२ वेदव्रतानि[2]

---

(१) अत्र गोदानस्य वेदव्रतान्तर्गतत्वेऽपि पृथगुपन्यासोऽत्र गृह्यसूत्रे ब्राह्मणवसिष्ठन्यायेन गोदानस्य महत्वातिशयख्यापनार्थः॥

(२) आश्वलायनः—

प्रथमं स्यान्महानाम्नो द्वितीयं स्यान्महाव्रतम्।
तृतीयं स्यादुपनिषद् गोदानाख्यं ततः परम्॥ इति।

तैत्तिरीयाणां नामभेदः—

प्राजापत्यं सौम्यम् आग्नेयम् वैश्वदेवम् इति।
( सं० म० पृ० ६३ )

१३ स्नानम्, १४ सहधर्मचारिणीसंयोगः १५-१९ पञ्च महायज्ञाः, २० अष्टका, २१ पार्वणम्, २२ श्राद्धम्, २३ श्रावणी, २४ आग्रहायणी २५ चैत्री २६ आश्वयुजी (एते सप्तपाकयज्ञ-संस्थाः)। २७ अग्न्याधेयम्, २८ अग्निहोत्रम् २९ दर्शपौर्णमास्ययागद्वयम्, ३० चातुर्मास्यम्, ३१ आग्रयायणेष्टिः, ३२ निरूढपशुबन्धः, ३३ सौत्रामणिः, (एते सप्तहविर्यज्ञाः) ३४ अग्निष्टोमः, ३५ अत्यग्निष्टोमः, ३६ उक्थः, ३७ षोडशी ३८ वाजपेयम्, ३९ अतिरात्रम्, ४० आप्तयाम (एते सप्तसोमयज्ञ-संस्थाः)

सम्प्रति स्मृतिषु संस्काराः कियत इति प्रतिपाद्यते। तत्रापि प्रधानत्वान्मनोः स्मृतित एव संस्काराः प्रथमत उल्लिख्यन्ते। तत्रापि प्राथम्यान्मनुसंहिताया एवानुसारेण संस्कारा निर्दिश्यन्ते। यतो हि मनुसंहितायां यदुक्तं तत्र सर्वत्रैवान्येषां स्मृतिकाराणां स्पष्टं सम्प्रतिपत्तिः वर्तते। अत एवोक्तम्—

"मन्वर्थविपरीतातु या स्मृतिः सा विनश्यति[1]" इति।

१ गर्भाधानम्, २ पुंसवनम्, ३ सीमन्तोन्नयनम्, ४ जातकर्म, ५ नामधेयम्, ६ निष्क्रमणम्, ७ अन्नप्राशनम्, ८ चूडाकर्म, ९ उपनयनम्, १० केशान्तः ११ समावर्त्तनम्, १२ विवाहः, १३ श्मशानम्[2]।

एते मनूक्तास्त्रयोदशसंस्कारा गर्भाधानाद्याः। याज्ञवल्क्येन पुनः केशान्तातिरिक्ताः द्वादश मनूक्ताः संस्कारा निर्दिष्टाः।

लोगाक्षिस्मृतौ तु—

१ गर्भाधानम्, २ पुंसवनम्, ३ सीमन्तोन्नयनम्, ४ जातकर्म, ५ नामकरणम्, ६ अन्नाशनम्, ७ चौलम्, ८ मौञ्जीक्रिया, ९ उपाकर्म, १० उत्सर्जनम्, ११ पितृमेधः[3] इति एकादशसंस्काराणां विवरणम् पाकयज्ञादिविवरणसहितमुपलभ्यते।

मार्कण्डेयस्मृतौ तु—

१ गर्भाधानम्, २ पुंसवनम्, ३ सीमन्तः, ४ जातकर्म, ५ नाम,

(१) सं० म० पृ० १
(२) एतच्चान्त्येष्टिसंस्कारस्यैव नामान्तरम्। अस्मिन्नेवार्थे—'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः' (म० स्मृ० २/१६) इति मनुवचने, 'निषेकादिश्मशानान्ताः तेषां वै मन्त्रतः क्रिया' (या० स्मृ० १/१०) इति याज्ञवल्क्यस्मृतौ च प्रयोगः।
(३) अस्याप्यन्त्येष्टिरेवार्थः।

६ अन्नप्राशनम्, ७ चौलम्, ८ मौञ्जीव्रतम्, ९ गोदानिकम्, १० स्नानम्, ११ विवाहः, १२ पैतृमेधिकः,

इति द्वादशसंस्काराः वेदोक्ता नित्या एकविंशतियज्ञाश्च वर्णिताः[1]। व्यासस्मृतौ तु षोडशसंस्काराः विवृताः—

१ गर्भाधानम्, २ पुंसवनम्, ३ सीमन्तः, ४ जातकर्म, ५ नामक्रिया, ६ निष्क्रमणम्, ७ अन्नप्राशनम्, ८ वपनक्रिया ९ कर्णवेधः, १० व्रतादेशः, ११ वेदारम्भः १२ केशान्तः १३ स्नानम्, १४ उद्वाहः, १५ विवाहाग्निपरिग्रहः, १६ मन्त्रेनाग्निसंग्रहश्च।

अङ्गिरसा तु पञ्चविंशतिसंस्कारा उक्ताः[2]—

१ गर्भाधानम् २ पुंसवनम् ३ सीमन्तः ४ बलिः ( विष्णुबलिरित्यर्थः ) ५ जातकृत्यम् ६ नामकर्म ७ निष्क्रमः ८ अन्नाशनम् ९ चौलकर्म १० उपनयनम् ११ तद्व्रतानां चतुष्टयम् ( =वेदव्रतानां महानाम्नी महाव्रतोपनिषद् गोदानानि ) १२ स्नानम् ( =समावर्त्तनम् ) १३ उद्वाहः (=विवाहः ) १४ आग्रयणमम् (=नवान्नेष्टिः) १५ अष्टकाः (=हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीषु श्राद्धम् ) १६ सवणाकर्म (=श्रावण्यां क्रियमाणं कर्म ) १७ प्रत्यवरोहणम् (=मार्गशीर्ष्यां क्रियमाणं कर्म ) १८ आश्वयुजीकर्म १९ उत्सर्गः (=वेदानामुत्सर्जनम् ) २० उपाकर्म (=वेदारम्भः ) २१ ब्रह्मयज्ञः २२ पितृयज्ञः २३ देवयज्ञः २४ भूतयज्ञः २५ नृयज्ञः।

जातूकर्ण्यस्तु षोडशसंस्कारानाचष्टे[3]—

१ आधानम् (=गर्भाधानम्=निषेकः ) २ पुंसवनम् ३ सीमन्तोन्नयनम् ४ जातकर्म ५ नामकर्म ६ अन्नप्राशनम् ७ चौलकर्म ८ मौञ्जी (=उपनयनम् ) ९ प्राजापत्यम् १० साम्यम् ११ आग्नेयम् ( एतानि चत्वारि वेदव्रतानि तैत्ति-

---

(१) गर्भाधानं पुंसवनं सीमन्तो जातकर्म च।
नामान्नप्राशनं चौलं मौञ्जीव्रतचतुष्टयम्॥
गोदानिकं तथा स्नानं विवाहः पैतृमेधिकः।
एकविंशतियज्ञास्तु नित्या ये वेदचोदिताः॥
( मा० स्मृ० पृ० २५ )

(२) सं० म० पृ० ११; सं० प्र० पृ० १३५-३६।

(३) सं० प्र० पृ० १३५; स० दी० पृ० १ ( भा० २ )

रीयाणाम् ) १२ वैश्वदेवम् १३ गोदानम् (-केशान्तः) १४ समावर्त्तनम् १५ विवाहः १६ अन्त्येष्टिः।

एत एव षोडशसंस्कारा हारीतेन ब्राह्मसंस्काराः उक्ताः। एतदतिरिक्ताश्च दैवसंस्काराः पाकयज्ञा हविर्यज्ञाः सौम्याश्च[1] तदित्थं हारीतस्य संस्काराणां ब्राह्मदैवभेदाभ्यां द्वैविध्यमभिमतम्[2]।

एतावता प्रबन्धेनैदमेवावगम्यते यत्संस्कारविषयेऽपि "नैको मुनिर्यस्य मतं न भिन्नम्" इत्युक्तिरेव संघटते। परन्त्वेतेषां मध्ये षोडशैव संस्काराः सर्वत्रप्रसिद्धाः व्यवहारे दृश्यन्ते, पद्धतिकृद्भिरप्यनुमोदिताः। अतो वयमत्र प्रबन्धे तानेव निरूपयामः। ते च षोडश संस्काराः—

(१) गर्भाधानम्, (२) पुंसवनम्, (३) सीमन्तोन्नयनम्, (४) जातकर्म (५) नामकर्म, (६) निष्क्रमणम्, (७) अन्नप्राशनम्, (८) चूडाकरणम्, (९) कर्णवेधः, (१०) विद्यारम्भः, (११) उपनयनम्, (१२) वेदारम्भः, (१३) केशान्तः, (१४) समावर्त्तनम्, (१५) विवाहः, (१६) अन्त्येष्टिः।

तत्रैतेषु प्रतिपाद्येषु षोडशसंस्कारेषु श्रीवात्मनो गर्भाधानमारभ्यान्त्येष्टिपर्यन्तमेकशरीरसम्बन्धात् संस्काराणाञ्च प्रायेण शरीरशुद्धिकरत्वात् प्रथमं गर्भाधानाख्यः संस्कार एव विवेचितो दृश्यते शास्त्रे। अत एव मनुनाप्युक्तम्—

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्[3]॥

इति। अत्र निषेकशब्दो निषिच्यते रेतोऽत्र कर्मणि इति व्युत्पत्तेर्गर्भाधानमेवार्थः[4]। अत एव याज्ञवल्क्येनापि—

निषेकादिश्मशानान्तास्तेषां वै मन्त्रतः क्रिया[5]॥

(१) गौतमोक्तसंस्कारप्रसङ्गे स्पष्टीकृता एते।
(२) सं० प्र० पृ० १३५।
(३) म० स्मृ० २/१६।
(४) मन्वर्थमु० २/१६ ; मिताक्षरा-१/१०।
(५) या० स्मृ० १/१०।

इत्यभिहितम्। स्पष्टीकृतश्चायमर्थो मिताक्षरायामपि-'निषेकाद्याः = निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः। श्मशानं पितृवनम्, तत्सम्बन्धि कर्म अन्तो यासां ताः क्रिया मन्त्रैर्भवन्ति'[1] इति प्रकारेण। अत एव च प्रायेण गृह्यसूत्रादौ निबन्धेषु च संस्कारनिरूपणं गर्भाधानमारभ्यैव कृतं दृश्यते। आश्वलायन-पारस्कर-बौधायन-गृह्यसूत्रेषु पुनः स्त्रीसम्बन्धमन्तरा गर्भाधानस्यासम्भवत्वं निरूप्य विवाहाद्या एव संस्काराः प्रख्यापिताः। वाराहगृह्यसूत्रे तु जन्मत एवात्मनः संस्क्रियमाणशरीरसम्बन्धोपलम्भात् जातकर्मसंस्कारस्यैव प्राथम्यमुक्तम्। अन्यत्र तु प्रायेण गर्भाधानस्यैवाद्यसंस्कारतयोल्लेखाद्वयमप्यत्र प्रबन्धे गर्भाधानमेव प्रथमं विमृशामः।



(१) मिताक्षरा १/१०

# ( १ ) गर्भाधानम्

येन कर्मणा गर्भः सन्धार्यते तदेव गर्भाधानमिति यौगिकोऽयं शब्दः समाख्याबलादेव स्वार्थं प्रतिपादयति[१]। एष एवार्थोऽस्य कर्मनामधेयभूतस्य शब्दस्योक्तः शौनकेनापि—

निषिक्तो यत्प्रयोगेण गर्भः सन्धार्यते स्त्रिया।
तद्गर्भालम्बनं नाम कर्म प्रोक्तं मनीषिभिः[२] ॥ इति।

इदमेव च कर्ममनु[३]-याज्ञवल्क्यप्रमुखैः[४] स्मृतिकर्तृभिः 'निषेकः' इति कथितम्।

## गर्भाधानस्यैतिहासिकत्वम्

गर्भाधानसंस्कारो वेदादारभ्य निबन्धपर्यन्तं प्रसिद्ध एव। परमत्रायं विशेषो यत् प्रारम्भेऽस्य स्पष्टं रूपं सम्पादनविधिश्च न विवृत उपलभ्यते। क्रमेणायमपि वर्तमानं स्वरूपमाप्तवानिति शास्त्रावलोकनेन स्पष्टमेव ज्ञायते। तथाहि—

तैत्तिरीयसंहितायां श्रूयते[५]-"जायमानो वै ब्राह्मणः त्रिभिर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः। एष वा अनृणो यः पुत्रो यज्वा ब्रह्मचारी वा स्यात्" इति। अयमेवार्थः प्रतीयते मन्वर्थमुक्तावल्युद्धृतश्रुत्यापि[६]-"जायमानो वै ब्राह्मणः त्रिभिर्ऋणैर्ऋणवाञ्जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्यः" इति। मनुनापि समर्थित एवायमर्थः—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥

---

( १ ) गर्भः सन्धार्यते येन कर्मणा तद् गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्। ( पूर्वमीमांसा १/४/२ अधिकरणम् )
( २ ) सं० प्र० पृ० १४१
( ३ ) म० स्मृ० २/१६
( ४ ) या० स्मृ० १/१०
( ५ ) तै० सं० ६/३/१०/५
( ६ ) म० मु० ६/३५

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः[१] ॥ इति।

तथा च पितॄणां ऋणापाकरणाय पुत्रोत्पादनमत्यावश्यकमिति प्रतीयते। अत एव ऋग्वेदेऽपि पुत्रस्य 'ऋणच्युतः[२]' इति नामधेयमुपलभ्यते। प्रजां च धत्तम् द्रविणं च धत्तम्[३]" इत्यादौ प्रजाधारणप्रार्थनापि परिदृश्यत एव। अत्र प्रजाशब्दः सन्तानार्थकः पुत्रार्थक एव वेति प्रसिद्धमेव व्याख्यातृषु।

सहवासचर्चाऽपि ऋग्वेदे[४] स्पष्टमुपलभ्यते। उपनिषत्सु प्राचीनतमायां बृहदारण्यकोपनिषद्यपि[५] प्रतिपादितोऽयमर्थः स्पष्टतरम्। गर्भाशयनिर्माणाय विष्णोः, पत्नीरूपसम्वर्धनाय त्वष्टुः, बीजाधानाय प्रजापतेः, भ्रूणसंस्थापनाय धातुः, सरस्वत्याश्च नीलाम्बुजस्रजं बिभ्रतोरश्विनोश्च पत्न्यां भ्रूणप्रतिष्ठापनायाभ्यर्थनमपि ऋग्वेदे विद्यते[६]। एतावता गर्भाधानस्य वैदिकत्वमुक्तमेव भवति।

अथर्ववेदेऽपि गर्भाधानविषयकः प्रसङ्गो विद्यते। तत्र हि गर्भाधानाय पत्नीमामन्त्रयन्[७] परिदृश्यते। पत्नीसमीपं कथं गन्तव्यम् इत्यर्थमुपस्थापयन्त्यो बह्व्य उपमा अपि प्रदर्शिता[८] अथर्ववेदे। पुत्रस्वरूपादिविषयेऽपि तत्र स्फुटतरं

---

(१) म० स्मृ० ६/३५-३७।
(३) ऋ० वे० ८/३५/१०।
(४) तां पूषन् शिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति।
या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहराम शेपम् ॥ (ऋ० वे० १०/८५/३७)
(५) अथ यामिच्छेत् गर्भं दधीतेति तस्यामथ निष्ठाप्य ॥ (बृहदारण्यके)
(६) विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ इत्यादिः। (ऋ० वे० १०/१८४/१)
(७) अ० वे० १४/२/२।
(८) शमीमश्वत्थमारूढस्तत्र पुंसवनं कृतम्।
तद्वै पुत्रस्य वेदनं तत् स्त्रीष्वाभरामसि ॥ अ० वे० ६/९

वर्णनं समुपलभ्यते। अनेनेदं वक्तुं शक्यते यत् अथर्ववेदयुगे गर्भाधानविषयको विचारः ऋग्वेदयुगापेक्षया स्पष्टतरं स्वरूपमवाप्तवानिति[1]।

गृह्यसूत्रयुगे तु गर्भाधानस्य पूर्णं स्पष्टं स्वरूपं समुपलभ्यते। संस्कारत्वमस्य गृह्यसूत्रयुग एवोपपन्नमिति निस्संशयमेव वक्तुं शक्यम्। ऋतुस्नाताया भार्यायाः सविधेः पत्युरभिगमनं गृह्यसूत्रे स्पष्टं वर्णितमस्ति। अन्यान्यपि तदङ्गभूतविषयकविचारणानि गृह्यसूत्रादौ प्राप्यन्ते। अतो गृह्यकालेऽस्य स्वरूपं पूर्णं प्रतिष्ठितमिति वक्तुमुचितम्।

---

(१) अत्रायमयं सूक्तो द्रष्टव्यः—

पर्वताद्दिवो योनेरङ्गादङ्गात् समाहृतम्।
शेपो गर्भस्य रेतोधाः सरौ पर्णमिवादधत्॥
यथेयं पृथिवी मही भूतानां गर्भमादधे।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति।
गर्भं ते अश्विनोभा धत्तां पुष्करस्रजा॥
गर्भं ते मित्रावरुणौ गर्भं देवो बृहस्पतिः।
गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते॥
विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥
यद्वेद राजा वरुणो यद्वा देवी सरस्वती।
यदिन्द्रो वृत्रहा वेद तद् गर्भकरणं पिब॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्।
गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धाः॥
अधिस्कन्द वीरयस्व गर्भमाधेहि योन्याम्।
वृषासि वृष्ण्यावन् प्रजायै त्वा नयामसि॥
विजिहीष्व बार्हत्सामे गर्भस्ते योनिमा शयाम्।
अदुष्टे देवाः पुत्रं सोमपा उभयाविनम्॥
धातः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः।
पुमांसं पुत्रमाधेहि दशमे मासि सूतवे॥
त्वष्टः श्रेष्ठेन.................................।
.................................................॥
सवितः श्रेष्ठेन...............................।
.................................................॥
प्रजापते श्रेष्ठेन रूपेणास्या नार्याः गवीन्योः।
पुमांसं पुत्रमाधेहि दशमे मासि सूतवे॥ (अ० वे० ५/२५/१-१३)

## गर्भाधानकालः

तत्र ऋतुकाले दाराभिगमनं कार्यम्[1] इति शास्त्रसिद्धान्तः। ऋतुकालश्च षोडश रात्रय एव[2]। आरम्भश्च ऋतोः नाभिकमलीयशोणितप्रत्यक्षतादिनादेव। तत्र षोडश रात्रीणामेव शास्त्रे ऋतुत्वाभिधानात् ऋतुकाले च दारागमनविधानात् असति विशेषानुशासने दिवा न दारगमनमिति[3] लभ्यते। यदि तु प्रवासादागतः[4] पतिर्भवेत् पत्नी वा कामातुरा[5] स्यात्तदा दिनादावपि गमनं ऋतुकालेऽपि रजोदर्शनादारभ्य त्रिरात्रं[6] परिवर्जयेत्। चतुर्थ्यां आरभ्य

---

(१) तामुदुह्य यथर्तु प्रवेशनम्। पा० गृ० १/११/७ संविशेदार्त्तवे स्त्रियम्- (म० स्मृ० ३ ४८) ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा॥ (म० ३/४५) विष्णुपुराणे-ऋतावभिगमः शस्तः स्वपत्न्यामवनीपते॥ (पा० गृ० हृ० भा० १.११) यदर्तुमतीभवत्युपरतशोणिता तदासम्भवकालः॥ गो० गृ० २,५ ८

(२) ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः॥ (म० स्मृ० ३/४६) "ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि." इति शिवगीता॥ (सं० र० मा० पृ० ६८)। षोडशर्तु निशा स्त्रीणाम् (या० स्मृ० १/७९)

(३) निशाग्रहणं दिवसनिषेधार्थम्। तथा च श्रुतिः—"प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते, ब्रह्मचर्यमेव तत् यद् रात्रौ संयुज्यते" इति। शङ्खलिखितावपि-'नार्तवेऽपि दिवा व्रजेत्' इति। (सं० म० पृ० १५)

अत्र आर्तवे इति विशेषोपादानादनृतौ दिवागमने न निषेध इति यत् तन्न, "गत्वा चैव दिवा स्त्रियम्" इति याज्ञवल्क्येन सामान्यतः प्रायश्चित्ताभिधानात्॥ (सं० प्र० पृ० १५४)

(४) प्रवासादागतस्य दिवाऽपि गमनमभ्यनुजानाति व्यासः–
अनृतावृतुकाले दिवा रात्रावथापि वा।
प्रोषितस्तु स्त्रियं गच्छेत् प्रायश्चित्ती भवेन्न तु॥ (सं० प्र० पृ० १५४)

(५) तथा सकामायामपि दिवागमनमुक्तम् अग्निस्मृतौ-
कामान्धां मनुजोऽनिच्छन्नपि पत्नीं बहुप्रजाम्।
प्रशस्तेऽह्न्यशस्ते वा रात्रौ वा मतिमान् व्रजेत्॥
(सं० प्र० पृ० १५४)

(६) देवलः-तस्मात्त्रिरात्रं दारान् वै पुष्पितान् परिवर्जयेत्॥
(सं० म० पृ० १५)

षोडशीं रात्रिं यावत् गमनं प्रशस्तम्[1]। तत्र चतुर्थ्यां गमनं रजोनिवृत्तौ सत्यां तदभावे तु नेति व्यवस्था विज्ञेया[2]। अतएव आद्याश्चतस्रः[3] वर्जयेत् इत्यादि शास्त्रानुशासनं चतुर्थदिने रजसो निवृत्तत्वाभावेति सर्वं समञ्जसम्[4]।

ऋतुकालेऽपि युग्मायामेव रात्र्यां संगमनं कार्यम् पुत्रार्थिभिः, अयुग्मायां तु कन्यार्थिभिरिति विशेषः[5]। तत्रापि विशेषो व्यासेनोक्तः—

---

(१) पैठीनसिः—
न प्रथमे न द्वितीये न तृतीये न चतुर्थं आह्वयेत्। इति।
(अत्र दिने इत्यस्य विशेष्यतया चतुर्थ्यां रात्रौ गमननिषेधः एव मन्तव्यः) (सं० प्र० पृ० १५६)
आपस्तम्बः—चतुर्थीं प्रभृत्याषोडशीमुत्तरां युग्मां प्रजानिश्रेयसमृतुगमनमित्युपदिशन्ति। (सं० र० मा० पृ० ६८२)
हारीतः—चतुर्थेऽह्नि स्नातायां युग्मासु च गर्भाधानम् तदुपेतं ब्रह्मगर्भं सन्दधाति॥ (सं० र० मा० पृ० ६८२; सं० प्र० पृ० १५६)
हिरण्यकेशिसूत्रम्—चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसम्भाषामाचर्य्योपह्वयते॥ (सं० भ० पृ० १५)
महाभारते—स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः॥ (नि० सि० पृ० ४८६)

(२) स्नानं रजस्वलायास्तु चतुर्थेऽह्नि शस्यते।
गम्या निवृत्ते रजसि नानिवृत्ते कथञ्चन॥ आपस्तम्बः।
(नि० सि० पृ० ४८६; सं० र० मा० पृ० ६८२; सं० म० पृ० १६)
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला॥ (म० स्म०)
यदर्तुमती भवत्यपगतशोणिता तदा सम्भवकालः॥ (गो० गृ० २/५/८)

(३) तासामाद्याश्चतस्रस्तु निन्द्याः-(म० स्मृ० ३/४७)
आद्याश्चतस्रस्तु वर्जयेत्॥ (या० स्मृ० १/७९)

(४) सं० प्र० पृ० १५६; सं० म० पृ० १५; सं० र० मा० पृ० ६८२ परन्त्वत्रापि शास्त्रकाराणां न सम्प्रतिपत्तिः। कृतेऽपि बहुप्रयासे कतिपयैर्निबन्धकारैरत्र मतभेदो यथावद्वर्त्तित एवेति तत्तन्निबन्धावलोकननिपुणानां विदुषां नातिरोहितम्।

(५) युग्मासु पुत्रा जायन्ते स्त्रियो युग्मासु रात्रिषु॥
तस्माद् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥ (म० स्मृ० ३/४८)

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥
सप्तम्यामप्रजा योषित् अष्टम्यामीश्वरः पुमान्।
नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः॥
एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः।
त्रयोदश्यां सुता पापा वर्णसङ्करकारिणी॥
धर्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः।
प्रजायन्ते चतुर्दश्यां पञ्चदश्यां पतिव्रता॥
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान्[1]॥ इति।

अत एव युग्मासु[2] संविशेदिति बहुवचनबलात् प्रतियुग्मरात्रि ऋतुकाले दाराभिगमनं युक्तमिति यदभिप्रेतं याज्ञवल्क्यादेस्तत्रापि फलानुरोधेनैव व्यवस्था विज्ञेया। अर्थात् यस्यां युग्मायां रात्रौ गमनेऽनिष्टसुतोत्पत्तिसम्भावनं तस्यां नैव गच्छेदिति[3]। एवमेव युग्मास्वपि निषिद्धां तिथिं वर्जयित्वैव गमनं कार्यम्। निषिद्धास्तिथयश्च-अष्टमी, चतुर्दशी, अमावश्या पूर्णिमा[4] च। विष्णुपुराणे तु–रविसंक्रान्तिरपि[5] वर्जनीयत्वेनोक्ता। ऋतुकाले विहितायां निशायामपि मध्यरात्रान्ते गमनं प्रशस्तमित्याश्वलायनाचार्यमतम्[6]।

ऋतुकालाभिगमनं अन्येऽपि केचन विशेषाः शास्त्रोक्ताः–"तत्र प्रथमं चतुर्थदिने स्नायात् कवोष्णेन वारिणा। ततो रविमीक्षयेत्, ततश्च भर्त्ता

---

(१) नि० सि० पृ० ४८६, सं० प्र० पृ० १५५, पा० गृ० ग० भा० १/११
(२) या० स्मृ० १/७९
(३) अत एव मनुना एकादश्यां त्रयोदश्यां च रात्रौ ऋतुकालापेक्षया गमनं प्रतिषिद्धम्-तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा।
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः॥ (म० स्मृ० ३/४७)
(४) अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥ (म० स्मृ० ४/१२८)
(५) विष्णुपुराणे—चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
पर्वण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥
तैलस्त्रीमांससम्भोगी पर्वस्वेतेषु यः पुमान्।
विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते॥ (सं० प्र० पृ० १५६)
(६) पत्नीमृतुमतीं स्निग्धां तृप्तां भोगविवर्जिताम्।
उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः॥ (सं० प्र० पृ० १५४)

प्रेक्षितव्यः[१]। ततश्च मध्यरात्रान्ते शुद्धवस्त्रां गन्धालङ्कारभूषिताम् अकुटिल-ब्राह्मणेन सम्भाषणं कुर्वन्तीं स्त्रियमाह्वयेत्[२] पतिः सम्भोगार्थम्। तत्रापि प्रथमं ताम्बूलचर्वणम्[३] आवश्यकम्। ततश्च स्त्रिया दीपप्रज्वालनम् कर्तव्यम्[४] दीपं विना सङ्गे दोषोक्तेः[५]। तदपि शलाकादिना न तु दीपान्तरेण, तथा सति[६] दारिद्र्यश्रवणात्। पुनश्चैकस्यां रात्रौ सकृदेव[७] कर्तव्यम् संगमनं नासकृत्।

इदं च संगमनं गुप्ते स्थाने[८] कार्यम्। तत्र सत्यपि ऋतु सम्पाते देवाश्रमादिषु संगमनं नैव विधेयम्,[९] तदविधानेऽपि प्रायश्चित्ताभावः शास्त्रप्रामा-

(१) स्मृतिसंग्रहे—कोष्णेन वारिणा स्नायात् स्नानादौ रविमीक्षयेत्।
ततो भर्त्ता प्रेक्षितव्यः कुर्यात्तेनैव भाषणम्॥ (सं० र० म० पृ० ६९०)
(२) चतुर्थ्यां स्नातां प्रयतवस्त्रामलङ्कृतां ब्राह्मणसंभाषामाचरन्त्याह्वयते॥
(सं० र० म० पृ० ६९०)
(३) ताम्बूलमादौ चर्वित्वा भार्यासङ्गं समाचरेत्॥ (सं० र० म० पृ० ६९०)
(४) भार्यैव दीपं प्रज्वाल्य पत्युश्चित्तानुवर्त्तिनी।
नमस्कृत्य तु भर्त्तारं रमयेत्सह तेन तु॥
सं० र० मा० पृ० ६९०
(५) रतिप्रकाशे—'दीपसमीपे रतिं कुर्यात्' इति।
ज्योतिर्निबन्धे—
दीपेऽप्रदीप्ते यः सङ्गं करोति मनुजो यदि।
यावज्जन्म दरिद्रत्वं लभते नात्र संशयः॥
(सं० र० मा० पृ० ६९०)
(६) लिङ्गपुराणे—दीपेन दीपं प्रज्ज्वाल्य दरिद्रो व्याधिमान् भवेत्॥
(सं० र० मा० पृ० ६९०)
परन्त्वेतत् न सर्वसम्मतम्, दीपेन हि दीपप्रज्वालितो भवत्येव अतएव 'प्रवर्त्तितो दीप इव प्रदीपात्' इति कालिदासोक्तमपि संगच्छते। कर्मविशेषाभिप्रायेण तु कथञ्चित्संगतिरपि नातितमां मोदाय धीधनानाम्।
(७) एवं गच्छन् स्त्रियं क्षामां मूलं च वर्जयेत्।
सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्॥ (या० स्मृ० १।८०)
(८) पैठीनसिः— संवृत्ते देशे मैथुनायाह्वयीत॥ (सं० र० मा० पृ० ६८८)
(९) विष्णुपुराणे—देवद्विजगुरूणां च व्यवायी नाश्रमे भवेत्।
चैत्यचत्वरसीरेषु न चैव च चतुष्पथे॥ (सं० र० मा०)
पृ० ६८८

ण्यादेवासंगमनकाले यज्ञोपवीतं पृष्ठभागतो निवीतं कुर्यात्। अन्येऽपि[1] केचन विशेषा रत्नमालायामुक्ताः सरलतया यथावत् पद्यबद्धा एवोपस्थाप्यन्ते—

पादो नग्नतनुश्चैव उच्छिष्टं ताडनं तथा।
कोपो रोषश्च निर्भर्त्स. संयोगे च न दोषभाक्॥
कञ्चुकेन समं नारी भर्तुः सङ्गं समाचरेत्।
त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम्॥
ताडपत्रमिलत् कर्णा यदि मैथुनमाचरेत्।
पञ्चमे सप्तमे वर्ष वैधव्यमिह जायते॥
कामातुरेण पतिना संयोगे यदि याचिता।
निवारयति तं नारी बालरण्डाभवेत् सदा॥
कुङ्कुमं चाञ्जनं चैव ताम्बूलं सिन्दूरं तथा।
धौतवस्त्रं च कुसुमं संयोगे च शुभावहम्॥
नमस्कृत्वा भर्तृपादौ पश्चाच्छय्यां समाविशेत्।
नारी सुखमवाप्नोति न चेद् दुःखस्य भागिनी॥
गलत्ताम्बूलवदनां नग्नामाक्रन्दरोदनाम्।
दुर्मुखीं च क्षुधायुक्तां संयोगे परिवर्जयेत्॥
भर्तुरुच्छिष्टं सदा भोज्यमन्नं ताम्बूलमेव च।
उच्छिष्टं न तु भुञ्जीत गृहस्थो ह्यधरं विना॥
दीपेनात्मतनुच्छायां भर्तुश्चोपरि चेत्त्यजेत्।
तौ दम्पती दरिद्रत्वमाप्नुवीतां विनिश्चितम्[2]॥ इति।

## अनेकस्त्रीणां युगपदेव ऋतुकालप्रसक्तौ व्यवस्था

यदि एकदैव एकाधिकानां स्त्रीणां सम्भवति ऋतुकालस्तदाऽनेकजातीयासु स्त्रीषु जात्युत्कर्षक्रमेण गमनम्, विवाहक्रमेण वा। इयमेव व्यवस्था देवलेनोक्ता[3]। अत्रायं संशयः प्राप्नोति—यदा विवाहोपि वर्णक्रमेणैव विहित-

---

(१) भरद्वाजः—भार्यासंभोगसमये पुष्पकालं विनाऽन्यदा।
ब्रह्मसूत्रं द्विजः कुर्यान्निवीतं पृष्ठभागतः॥ सं० प्र० पृ० १५४

(२) सं० र० मा० पृ० ६८९-९०

(३) देवलः—यौगपद्ये तु तीर्थानां विप्रादक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमतोऽपि वा॥
सं० र० मा० पृ० ६८५; सं० प्र० पृ० १६२;
सं० म० पृ० १६

स्तदा विवाहक्रमेण गमनस्य वर्णोत्कर्षक्रमेण क्रियमाणाद् गमनादभिन्नतथा वैकल्पिकत्वमनयोः कथम् इति। अस्य निराकरणं द्विधा कर्तुं शक्यम्—(क) प्रथमतः स्ववर्णादिक्रमेणोढदारस्य दैवादन्यतरवर्णदारनाशेऽन्तरितस्य पुनस्तद्वर्णकन्यकां परिणीतवतः ऋतुकालयौगपद्ये प्राप्ते न जात्युत्कर्षक्रमेण गमनमपि तु विवाहक्रमेणैव। (ख) यद्वा सवर्णास्वेव ऋतुयौगपद्ये प्राप्ते विवाहक्रमेण गमनमिति पृथक् विवाहक्रमाभिधानं न निरर्थकम् इति। कश्यपोप्येवमेवाह[1]।

## ऋतुकाले श्राद्धादिसम्पाते गमनागमनविचारः—

अत्र "षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्[2] ॥" इति याज्ञवल्क्यवचनव्याख्यानावसरे विज्ञानेश्वरः—"युग्मासु इति बहुवचनं समुच्चयार्थम्। अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत्। एवं गच्छन् ब्रह्मचार्येव भवति। अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषोऽस्ति" इति। यत्तु हेमाद्रौ[3] श्राद्धदिनादौ गमननिषेधः स त्वनृतु-विषय एवास्मिन् मते द्रष्टव्यः।

इदं च न युक्तं रोचयामहे। अत एव 'ऋतावुपेयात्, सर्वत्र वा प्रतिषिद्धवर्जम्[4]' इत्युक्तं गौतमेन। अत एवाश्वलायनेनोदितमेवमेव[5]। वृद्धमनुरप्येवमाह[6]। आश्वलायनेन तु इदमप्युक्तम्-पित्रोर्मरणे यावत्संवत्सरं

---

(१) यौगपद्ये तु तीर्थस्य विवाहक्रमशो व्रजेत् ॥ सं० र० मा० पृ० ६८५
(२) या० स्मृ० १/७९
(३) यत्तु हेमाद्रौ शिवरहस्ये—दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती।
श्राद्धं दत्वा च भुक्त्वा च श्रेयोर्थी न च पर्वसु ॥ इति।
तदनृतुविषयम्-नि० सि० पृ० ४८७; सं० र० मा० पृ० ६८१।
(४) गौ० ध० १/५/१-२
(५) भोक्ष्यन् करिष्यन् वा श्राद्धं पूर्वरात्रौ प्रयत्नतः।
व्यवायं भोजनं चैव ऋतावपि विवर्जयेत् ॥
श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वापि निमन्त्रितः।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ सं० प्र० पृ० २५२
(६) श्राद्धप्रकरणे वृद्धमनुः—
ऋतुकाले नियुक्तोपि नैव गच्छेत् स्त्रियं क्वचित्।
तत्र गच्छन् समाप्नोति ह्यनिष्टं फलमेव तु ॥ नि० सि० पृ० ४०७,
सं० प्र० पृ० २५२-२५३; सं० र० मा० ६८१

ऋतावपि न पेयादिति[१] । अत एव माधवेनापि तथैवावेदितम्[२] । पृथ्वीचन्द्रोदयस्वरसोऽप्येवमेव[३] । शिवगीताव्याख्याने व्यङ्कटदीक्षितेऽपि[४] माधवाभिमतमनुमोदयामास । तस्मात् श्राद्धादिपाते सति सत्यपि ऋतौ नोपेयादेवेति युक्तम् ।

## ऋतुकालीनरात्रिष्वपि प्रशस्ताप्रशस्तत्वविचारः—

ऋतुकाले चतुर्थ्यां रात्रेरारभ्य षोडशीं यावद् युग्मासु पुत्रार्थी संविशेत् इत्युक्तमेव पूर्वम् । तत्रापि उत्तरोत्तरा रात्रिः प्रशस्तेति मन्यन्ते धर्मशास्त्रकाराः । तत्रापि विभिन्नप्रकारपुत्रप्राप्त्यर्थं विविधप्रकारेण व्रतानुष्ठानं कार्यम् । पुत्राश्च ब्राह्मणश्रौत्रियानूचानऋषिकल्पभ्रूण-ऋषिदेवाख्याः । एषु "उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्यायी अनूचानः, कल्पाध्यायी ऋषिकल्पः, सूत्रप्रवचनाध्यायी, भ्रूणः, चतुर्वेदादृषिः, तदूर्ध्वं देवः" इति तेषां परिभाषा । तत्र च यदि पतिः कामयेत श्रोत्रियं पुत्रं तर्हि अरुन्धत्युपासनां कृत्वा त्रिरात्रमक्षारलवणाशिनौ अधश्शायिनौ ब्रह्मचारिणौ स्याताम्, अहते वाससी परिधाप्ये, सायंप्रातश्चालङ्करणमिषु प्रतोदयोश्च धारणमग्निपरिचर्या च कर्तव्या। चतुर्थ्यां च रात्रौ पक्वहोमं कृत्वा पश्चादुपवेशनं कुर्यात् । अथ चेत् अनूचानं जनयितुकामः स्यात्तर्हि द्वादशरात्रमेतद् व्रतं चरेत्, ततो व्रतान्ते पक्वहोमः उपसंवेशनं च । ऋषिकल्पजननेच्छायामेतदेव व्रतं मासं यावत्, भ्रूणजननेच्छायां चतुरो मासान्, ऋषिजननेच्छायां षण्मासान्, देवजननेच्छायां च

---

(१) दीक्षितस्तु महायज्ञैः पित्रोः साम्वत्सरात् द्विजः ।
नेयाद् भार्यां प्रयत्नेन ऋतावप्यर्थतो द्विजः ॥ (सं० प्र० पृ० २५३)

(२) माधवीये तु 'ऋतुकाले नियुक्तोऽपि नैव गच्छेत् स्त्रियं क्वचित्" इति वृद्धमनूक्तेः श्राद्धे ब्रह्मचर्यं नियतमित्युक्तम् । (नि० सि० पृ० ४८७)

(३) नि० सि० पृ० ४८७

(४) यत्तु ऋतौ गच्छेदेवेति नियमस्य श्राद्धादौ ब्रह्मचर्यविधानस्य च परस्परपरिहारेण लब्धावकाशस्य···· ···· ····गच्छतोऽपि न ब्रह्मचर्यभङ्ग···· ···· ····इति विज्ञानेश्वरेण व्याख्यातम् । तच्चिन्त्यम्; "ऋतुकालनियुक्तोऽपि नैव गच्छेत् स्त्रियं क्वचित्" इति श्राद्धप्रकरणस्थवृद्धमनुवचनविरोधात् । तस्मात्·······याज्ञवल्क्यस्मृतौ ब्रह्मचर्योक्तिरर्थवादरूपेति माधवाचार्यप्रभृतीनां ग्रन्था एव प्रबलाः ॥ (सं० र० मा० पृ० ६८ ।)

सम्वत्सरं यावदेतद्व्रतमनुतिष्ठेत्। व्रतान्ते पक्वान्नेन होमं ततश्चोपवेशनं कुर्यात्, इति बोधायनोक्ता[1] व्यवस्था। अत एवोत्तरोत्तरायां रात्रौ गमनं प्रशस्तमाहापस्तम्बोऽपि[2]।

एतच्च ऋत्वभिगमनं गुरुशुक्रास्तादावपि[3] कार्यमेव। अत एवात्र[4] मलमासादिरपि न दुष्यति।

## ऋतुगमनस्य विधित्वं नियमत्वम्, परिसंख्यात्वं वेति विचारः—

तत्र ऋतुगमनस्य रागप्राप्तत्वेन नायमपूर्वविधिः। नापि नियमः, गृह्य-स्मृतिविरोधात्। तथा हि—कृतदारसंग्रहो नरो ब्रह्मचारी स्यात् त्रिरात्रं द्वादशरात्रं सम्वत्सरं वेति गृह्ये आम्नातम्। तत्र द्वादशरात्रात् सम्वत्सराद्वा पूर्वमेव ऋतुसम्भवे ऋतौ गच्छेदेवेति नियमात् ब्रह्मचर्यस्मरणं बाध्येत। अपि चेच्छयैव ऋतौ भार्यागमनं प्राप्तमिति यदि गच्छेदृतावेवेति नियमोऽनर्थक एव स्यात्। किं च नैयमिकात् पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यप्राप्तमेवेति पुनरपि ऋतौ गच्छेत् एवेति नियमोऽनर्थकः स्यात्। किञ्च नियमे अदृष्टं कल्पनीयम् इत्यपि गौरवम्। अपि ऋतौ गन्तव्यमेवेति नियमे असन्निहितस्य व्याध्यादिना समर्थस्यानिच्छतश्च अशक्योऽर्थ उपदिष्टः स्यात्। विध्यनुवाद-विरोधश्च नियमे। तथा हि-एकः शब्दः सकृदुच्चरितः तमेवार्थं पक्षेऽनुवदति, पक्षे विधत्ते चेति। तस्मादृतावेव गच्छेन्न अन्यत्रेति परिसंख्यैवमुक्ता। अत एव महाभारतेऽपि—

ऋतौ गच्छति यो भार्यामनृतौ नोपगच्छति।
यावज्जीवं ब्रह्मचारी मुनिभिः परिकीर्तितः[5]॥ इति।

---

(१) बौ० गृ० १/७/१–२।

(२) चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजा निःश्रेयसमृतुगमनमुप-दिशन्ति इत्यापस्तम्बः॥ (सं० प्र० पृ०।५५)

(३) उत्सवेषु च सर्वेषु सीमन्तऋतुजन्मनोः।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते॥ इति भृगुः ( सं० र० मा० पृ० ६८५ )

(४) "गर्भाधानादिकर्माणि नाधिमासे विवर्जयेत्" इति गर्गः। (सं० र० मा० पृ० ६८५)

(५) सं० प्र० पृ० १५३

तदेतत्परिसंख्यापक्षं विश्वरूपादयो नानुमन्यन्ते। अगमने दोषश्रवणादेते[1] नियममेव मन्यते। न च विध्यनुवादविरोधः, अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य। तत्रैव हि विध्यनुवादविरोधी यत्र विधेयावधितया तदेवानुवदितव्यम्, अप्राप्ततया अन्योद्देशेन विधातव्यं च। यथा वाजपेयाधिकरणे पूर्वपक्षे "वाजपेयेन स्वाराज्यकामो यजेत" इति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवेदितव्यः, स एव स्वाराज्यलक्षणफलोद्देश्येन विधातव्यश्चेति। न चानुवादेनेह किञ्चित् कृत्यमस्ति। यदपि नियमे दृष्टं कल्प्यमित्युक्तम्, तदप्ययुक्तम् परिसंख्यायामपि समानत्वात्तस्य; अनृतौ गमने दोषकल्पनात्। नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इत्यप्ययुक्तम्, स एवायं नैयमिकपुत्रोत्पादनविधिः। न चासन्निहितादेरशक्यार्थविधिप्रसङ्गः, सन्निहितशक्तयोरेवोपदेशात्। अत एव देवलवाक्येन चैवमेव प्रतिपादितम्। अनिच्छानिवृत्तिस्तु नियमविधानादेव नापि गृह्यस्मृतिविरोधः, सम्वत्सरात्पूर्वमेव ऋतुसन्दर्शने संविशतो न ब्रह्मचर्यस्खलनदोषः यथा श्राद्धादिषु। तस्मात् स्वार्थहानाश्रुतार्थप्रकल्पनप्राप्तावेति दोषत्रयोपेता परिसंख्या न युक्ता। अत एव च नियमे सति ऋतौ ऋतौ एवेति वीप्सापि लभ्यते। "निमित्तावृत्तौ नैमित्तिकस्याप्यावृत्तिः" इति न्यायात्। तस्मात् ऋतावुपेयादेवेति नियमपरमेव सर्वं तथाविधं वचनमिति स्वीकरणमेव सयुक्तिकं पश्यामः।

अत्र मतमेतत् कस्यचित्–

"ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति"[2]

"ऋतुकालाभिगामी स्याद् यावत्पुत्रोऽभिजायते"[3]

इति कूर्मपुराणवचनेन पुत्रोत्पादे च जाते आनृण्यस्यापि सम्भवात् न पुत्रान्तरोत्पादापेक्षेति न सपुत्रस्य गमनं युक्तमिति, तदेतन्मतं वयं न शास्त्रानुमोदितमुत्पश्यामः। वहुपुत्रावाप्तेः

---

(१) ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥ पराशरः॥
(सं०र०मा०पृ०६८६; सं०प्र०पृ०१५३, सं०म०पृ०१६)

(२) देवलः–ऋतुस्नातां च यो भार्यां स्वस्थः सन्नोपगच्छति।
भ्रूणहत्यामवाप्नोति प्रजा प्राप्ता विनश्यति॥
(सं०र०मा०पृ० ६८६)

(३) सं० र० मा० पृ० ६८६, सं० म० पृ० १७

पुरुषार्थत्वस्य[1] शास्त्रेषु प्रसिद्धत्वात्।

ऋतावगमने दोष :—

ऋतौ गच्छेदेवेति नियम उक्तः। अत एव ऋतुगमनाभावे पराशरा-[2] दिभिर्दोष उक्तः। यदि तु अकामतो गमनं न क्रियते तर्हि प्राणायाममनशनात्मकं प्रायश्चित्तं संवर्तोक्तम्,[3] कामतो गमने तु कृच्छार्धं प्रायश्चित्तं वृहस्पत्युक्तं[4] वेदितव्यम्। एतदपि पत्युर्योग्यतायां सत्यामेवेति मन्तव्यम्, तदभावे गमनाभावेऽपि दोषाभावेन प्रायश्चित्ताभावात्। एवमेव यदि स्त्री ऋतुस्नाता सत्यपि

---

(१) भारते— अपत्यं तु ममैवैकं कुले महति भारत।
अपुत्रतैकपुत्रत्वमित्याहुर्धर्मवादिनः॥
चक्षुरेकं च पुत्रश्च अस्तिनैव च भारत।
चक्षुर्नाशे तयोर्नाशः पुत्रनाशे कुलक्षयः॥

अर्थवादोऽपि—एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥ (सं०म०पृ०१७)

(२) ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥ पराशरः॥ (सं० र० मा० पृ० ६८६, सं० म० पृ० १६, सं० प्र० पृ० १५३)

यः स्वदारान् ऋतुस्नातान् स्वस्थः सन्नोपगच्छति।
भ्रूणहत्यामवाप्नोति प्रजाप्राप्ता विनश्यति॥ (सं०र०मा०पृ० ६८६)

(३) संवर्तः—ऋतौ नोपैति यो भार्यां नियतां ब्रह्मचारिणीम्।
नियमातिक्रमात्तस्य प्राणायामशतं स्मृतम्॥
(सं०र०मा०पृ० ६८५)

(४) वृहस्पति :—आहिताग्निरुपस्थानं न कुर्याद् यस्तु पर्वणि।
ऋतौ न गच्छेद यो भार्यां सोऽपि कृच्छार्धमाचरेत्॥
(सं०र०मा०पृ० ६८५)

(५) सूतके बन्धने विप्रो हव्यकव्यादिवर्जितः।
नैना सा लिप्यते तद्वद् ऋतावगमनादपि॥ मनुः॥
(सं०र०मा०पृ० ६८६)

व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु।
ऋतुकालेऽपि नारीणां भ्रूणहत्या न युज्यते। व्यासः।
(सं०प्र०पृ० १६३, सं०र०मा०पृ० ६८६, निसि० पृ० ४८८)

भर्त्रा सह न संगता भवति तर्हि साऽपि दोषार्हा-विवासनार्हा, मरणार्हा; सूकरी-माप्तवती च[1] भवति ।

## अनृतावपि यथाकामं गमनम्—

अत्र श्रुतिरनृतावपि सकामत्वे गमनं समर्थयति[2] । अत एव पारस्करादिभिरप्येवमेवोक्तम्[3] । अत एव सकामत्वे षण्मासपूर्णावधिपर्यन्तं[4] गर्भिणीगमनमपि[5] कार्यमेव भवति । परन्तु पर्वादिगमनप्रतिषेधोऽत्रापि यथासम्भवं ज्ञातव्य एव ।[6]

---

(१) ऋतुस्नाता तु यो नारी भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् ॥यमः॥
(सं०प्र०पृ० १७, सं०र०मा०पृ० ६८६, सं०प्र०पृ० १६३)

संग्रहे— ऋतुस्नाता तु या नारी भर्त्तारं नानुमन्यते ।
सा मृता तु भवेन्नारी सूकरी च पुनः पुनः ॥
(सं०र०मा०पृ० ६८६)

(२) तैत्तिरीयश्रुतौ - स इन्द्रः स्त्रीषंससापमुपासीदन् अस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति वा अब्रुवन् वरं वृणामहै ऋत्वियात् प्रजा विन्दामहै काममाविजनितोः सम्भवामेति तस्मादृत्विमास्त्रियं प्रजा विन्दते । (पा०गृ०ग० भा० १/११)

(३) यथाकामसीवा, काममाविजनितोः सम्भवामेति वचनात् ॥
(पा०गृ०१/११/८)

यथाकामो भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥
(या०स्मृ० १/८१)

(४) अत्रि :—षण्मासान् कामयेन्मर्त्यो गर्भिणी स्त्रियमेव हि ।
आदन्तजननादूर्ध्वमेवं धर्मो न हीयते ॥ (सं०म०पृ० १७)

(५) गर्भिणीगमने निषेधस्तु काममाविजनितोः सम्भवामेति वचनाद् बाध्यते
(पा०गृ०ह०भा० १/११)

(६) निषेधो यथाकामपक्षेऽपि समानः । यतः प्राप्ते निषेधः प्रवर्तते ।
(पा०गृ०ह०भा० १/११)

## गमनायोग्या पत्नी—

तत्र व्यासः

नास्नातां तु स्त्रियं गच्छेत् नातुरां न रजस्वलाम् ।
नानिष्टां न प्रकुपितां ना प्रशस्तां न गर्भिणीम् ॥
वृद्धां वन्ध्यामसद्वृत्तां मृतापत्यामपुष्पिणीम् ।
वहुपुत्रवतीं चैव गमने परिवर्जयेत्[१] ॥ इति ॥

अत्र छद्मवत्वादिदोषयुक्ता अप्रशस्ता। वृद्धा सरजस्कापि गर्भधारणासमर्था पुष्पिणी ऋतुमती। तदन्या अपुष्पिणी-अप्राप्तार्तवा गतार्तवा वा। वहुपुत्रवतीत्यनेन च दशाधिकपुत्रवती ग्राह्या, 'दशास्यां पुत्रानाधेहि' इति लिङ्गात् इति संस्काररत्नमाला[२]। अत इदमपि ज्ञायते यत् अनृतुगमने बौधायनादयुक्तः[३] प्रतिषेधः स्त्रिया अकामनायां सत्यामेव।

## गर्भाधाने प्रशस्ताः निषिद्धाश्च तिथयः—

तत्र षष्ठ्यष्टमीपञ्चदशीचतुर्थीद्वादश्यो[४] वर्जनीयाः, शेषा शुभाः। एतच्च यथासम्भवं ज्ञेयम्।

## शुभदिनानि—

गर्भाधाने सोमवुधगुरुशुक्रवासराणां प्राशस्त्यम् शास्त्रे निर्दिष्टम्[५]।

---

(१) सं०र०मा०पृ० ६८७, पा०गृ०ग०भा० १/११

(२) सं० र० मा० पृ० ६८७

(३) बौधायनः ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति।
तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति ॥
(सं० र० मा० पृ० ६८७, सं० म० पृ० १७)

(४) श्रीधरीये— षष्ठ्यष्टमी पञ्चदर्शी चतुर्थी।
चतुर्दशीमप्युभयत्र हित्वा ॥
शेषाः शुभाः स्युस्तिथयो निषेके—(सं० प्र० पृ० १५९)

(५) वाराः शशाङ्कार्यसितेन्दुजानाम्— (सं० प्र० पृ० १५९;
सं० र० मा० पृ० ६८४)

नक्षत्राणि—

अत्र श्रीधरः—

विष्णुप्रजेशरविमित्रसमीरपौष्ण-
मूलोत्तरा वरुणभानि निषेककार्ये।
पूज्यानि पुष्यवसुशीतकराश्विचित्रा-
दित्याश्च मध्यमफला विफलाः स्युरन्या[1] इति।

अत्र विष्णुः श्रवणम्। प्रजेशो रोहिणी। रविर्हस्तः। मित्रोऽनुराधा। समीरः स्वाती। पौष्णं रेवती। उत्तराशब्देनोत्तरात्रयम्। वरुणः शतभिषा। एतान्येकादश पूज्यानि। वसुर्धनिष्ठा। शीतकरो मृगशिरः। अश्विरश्विनी। आदित्यः पुनर्वसुः। षडेतानि मध्यमफलानि। शेषाणि दश नक्षत्राणि वर्ज्यानीत्यर्थः, परन्तु नारदयाज्ञवल्क्याभ्यां[2] मूलमपि वर्ज्यमित्युक्तम्। तत्र यद्यपि मूलमित्यस्य स्थाने पौष्णमित्येतत् पाठान्तरमपि याज्ञवल्क्ये दृश्यते तथापि मिताक्षरादिप्रामाण्याच्च नारदादिसम्वादाच्च मूलमपि वर्ज्यमेवेति वयं पश्यामः। अत एव 'मूलस्य विहितप्रतिषिद्धत्वाद्विकल्प इति केचित्। वस्तुतस्तु मूलस्य पूज्यत्वं चिन्त्यमेव' इति[3] दीक्षितमहानुभावा अपि प्राहुः। अत एव च—इत्यत्रापि नैर्ऋत्यमित्यनेन मूलस्य प्रतिषेध उक्तः। तस्माद्विकल्पपक्षः प्रकाशोक्तो हेय एवेति युक्तम्।

पित्र्यं पौष्ण्यं नैर्ऋतं वापि धिष्ण्यम्
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम्[4]॥

अत्र च जन्मत्रयमपि वर्ज्यमेवेत्याह वृहस्पतिः[5]। तत्रापि जन्मनक्षत्रं दशमैकोनविंशे च जन्मत इति त्रित्वं निर्वाह्यम्। अथवा जन्मनक्षत्रं तत्पूर्वोत्तरे च नक्षत्रे इत्यनया रीत्या त्रित्वमुपपाद्यम्।

---

(१) सं० र० मा० पृ० ६८४; सं० प्र० पृ० १५९

(२) नारदः—पुत्रार्थी पुरुषस्त्यक्त्वा पर्वमूलाहिपैतृकम्। (सं० र० मा० पृ० ६८३)

एवं गच्छन् स्त्रियं क्षामां मघां मूलं व वर्जयेत्॥
(या० स्मृ० १/८०)

(३) सं० र० मा० पृ० ६८४

(४) सं० प्र० पृ० १६४

(५) श्राद्धं पित्र्यं चिकित्सा च मैथुनाभ्यञ्जने तथा।
चौलोपनयनादीनि वर्जयेत्तु त्रिजन्मसु॥ (सं० र० मा० पृ० ६८४)

**वर्ज्या योगाः—**

अत्र ज्योतिर्वसिष्ठ :—

उपप्लवे वैधृतिपातयोश्च विष्ट्यादिके पारिघपूर्वभागे ।
सन्ध्यासु पर्वस्वपि मातृपित्रोर्मृतेह्नि पत्नीगमनं विवर्ज्यम् ॥ इति

ज्यौतिषेऽपि—

दिनेषु युग्मेषु च वक्ष्यमाणैर्योगैः सुतार्थी स्वसतीमुपेयात् ।
दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा तु गण्डं तिथिलग्नभागान्[1] ॥ इति

तथा च यथासम्भवं शुभवासरादौ चतुर्थ्या आरभ्य षोडशीं यावत् उत्तरासु रात्रिष्वपि च यथाकाममितरास्वपि वर्ज्यभिन्नासु रात्रिषु दिवा वा गर्भाधानं कार्यम् इति व्यवस्थितं भवति ।

यदि च कथञ्चिद्विधिरननुष्ठित एव तथा सति जातस्य दोषपरिहारार्थं गोदानं विधाय[2] पुंसवनादिकं कार्यमित्याश्वलायनः ।

**ऋतुगमनान्तरं स्नानम्—**

ऋतुगमनानन्तरं स्नानं कर्त्तव्यम्,[3] एतच्चाशिरस्कमेवेति वृद्धवशिष्ठः[4] । परन्त्वत्र स्त्रिया स्नानं न[5] विहितम् । तस्यायमाशयः यद्यनिच्छति तदा स्नानं विनापि सा शुद्ध्यति, न तु स्नाने कश्चन दोषः ।

अनृतुगमने तु मूत्रपुरीषवच्छौचमित्याह पराशरः ।[6] अत एव-'लेपान् प्रक्षाल्य पादौ चाचम्य प्रोक्षणमङ्गानाम्' इति धर्मसूत्रमपि[7] संगच्छते ।

---

(१) सं० र० मा० पृ० ६८५
(२) गर्भाधानस्याकरणे तस्यां जातस्तु दुष्यति ।
अकृत्वा गां ततो दत्वा कुर्यात् पुंसवनं व्रती ॥ (सं० प्र० पृ० १६४)
(३) पराशरः-ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् ॥
(सं० र० म० पृ० ६९१, पागृ० ग० भा० १/११, नि० सि० पृ० ४८९)
(४) अशिरस्कमेव मज्जनं कुर्यात्-(सं० र० मा० पृ० ६९१)
(५) वृद्धशातातपः—उभावप्यशुची स्यातां दम्पतीशयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥
(सं० र० म० पृ० ६९२, नि० सि० पृ० ४८९, पा० गृ० ग० भा० १,११)
(६) अनृतौ तु यदा गच्छेत् शौचं मूत्रपुरीषवत् ॥ (सं० र० मा० पृ० ६९२)
(७) ब्रह्मपुराणम्-गर्भाधानादिसंस्कर्त्ता पिता श्रेष्ठतमः स्मृतः ॥(सं०प्र० १६५)

## अथ गर्भाधानसंस्कारकर्तृनिर्णयः

तत्र पितैव (-स्त्रियाः पतिरेव) गर्भाधानं कुर्यादिति प्रथमः[1] कल्पः। अतएव देवलेन पुंसवनादीनां बान्धवादीनामपि कर्तृत्वं वदता गर्भाधाने कर्तृ-नियमोऽभिहितः[2]। अत एव च पैङ्गिनापि एतदेव समर्थितम्। अतश्च संस्कारसामान्ये पितृभिन्नानामप्यधिकार इति प्रतिपादयन्ति वचनानि[3] गर्भाधानातिरिक्तकर्मपरकाण्येव व्याख्येयानि। परन्त्वत्राय विशेषः-यदि पतिः देशान्तरगत-अश्रूयमाणवार्त्तः, अथवा मृतः, तदा देवरेणान्येन वा सपिण्डेन सगोत्रेण वा[4] गर्भाधानं कार्यमिति। सपिण्डाद्यभावे तु गोत्रान्तरजोऽपि[5] ब्राह्मणोऽत्राधिकारी। परमेतत्सर्वं कलौ न कार्यमेव, 'देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्' इति स्मरणात्। यत्रापि विधिस्तत्रापि अनुकल्पस्य पुत्रा-

---

( १ ) ऋतुकालेऽभिगमनं भर्त्रा कार्यं प्रयत्नतः।

( २ ) गर्भाधानं पिता कुर्यात् ऋतुस्नातासु शक्तिमान् ॥ (सं० प्र० पृ० १६४)

( ३ ) वैजवापः-

पिता पुत्रस्य संस्कारं कुर्याद् यदि न शक्नुयात्।
अन्येन गुणयुक्तेन कारयेत् स्वस्वशास्त्रतः॥ (सं०प्र०पृ०१६४)

एतच्च सामान्येन। विशेषेण तु तत्र तदन्येनापि देवरादिना गर्भाधानं विहितं दृश्यते एव। तत्र 'प्रकल्प्य चापवादविषयमुत्सर्गः प्रवर्तते' इति परिभाषया नैकतरस्य नैरर्थक्यम् इति विवेकः।

( ४ ) व्यासः—कृते देशान्तरगते पत्यौ स्त्री यद्यसंस्कृता।
देवरो वा गुर्वापि वंश्यो वापि समाचरेत् ॥ (सं०प्र०पृ०१६४)

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।
सपिण्डो वा सगोत्रो वा घृताभ्यक्तत्रतावियात् ॥
आगर्भसम्भवाद् गच्छेत् पतितस्त्वन्यथा भवेत्।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत् सुतः॥
(या० स्मृ० १/६८-६९)

देवराद् वा सपिण्डाद् वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये। (म०स्मृ०९/५९)

( ५ ) ब्रह्मपुराणम्-अभावे स्वकुलीनः स्याद् बान्धवो वान्यगोत्रजः ॥
भारतम् — बीजार्थं ब्राह्मणः कश्चिद् धनेनोपनिमन्त्र्यताम् ॥
(सं० प्र० पृ० १६५)

त्पादनहेतुकत्वेनैकदेव[1] गर्भाधानं देवरादिना कार्यम् न तु बहुपुत्रत्वस्य काम्यत्वेन भूयो भूयः। तस्य पतिमात्रविषयत्वस्य[2] वाग्व्यवस्थाभिया अवश्यं स्वीकर्त्तव्यत्वात्। अन्ये पुनराचार्या अन्यथैव स्वीकुर्वन्ति। अनयोराद्यं पक्षमेव समर्थयामो वयम्[2]।

मिताक्षरायामाचार्यास्तु[3] 'अपुत्रां गुर्वनुज्ञातः' इति याज्ञवल्क्यवचनं—

यस्या क्रियते कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः[4]॥

इति मनुवचनसामञ्जस्येन वाग्दत्तापरमित्याहुः। एतन्नावगच्छामः, सत्यप्यस्य वचनस्य वाग्दत्ताविषयकत्वे देवराद्वा[5] सपिण्डाद्वेत्यादि मन्वादिवचनानुरोधेन (कलिभिन्नकाले) देवरादिना सुतोत्पत्तेरवश्यं स्वीकार्यतया कथमयमाग्रहो याज्ञवल्क्यवचनस्य स्वारस्यभञ्जकाय व्याख्यानाय।

## अथ गर्भधारणोपायः—

यदि भार्या गर्भं न दधीत तदा तु—'सिह्याः श्वेतपुष्पाया उपोष्य पुष्पेण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति—'इयमोषधी त्रायमाणा[6] ५..............' इति मन्त्रेण। वैजवायेन त्वत्र कश्चिद्विशेष उक्तः—'सा यदि नादधीत सिह्याः श्वेतपुष्पायाः उपोष्य मूलमुत्खाय चतुर्थ्यां स्नातायां निशि प्राजापत्यं स्थालीपाकं प्रजापतये हुत्वा पश्चादग्नेर्वारशयने प्राचीमुत्तानां संवेश्य चैतामोषधीमुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायां न्यस्तां कुर्यात् इयमोषधी[7]..............' इति

(१) विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि।
एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चन॥ (म० स्मृ० ९/५०)
'आगर्भसम्भवाद् गच्छेद्' इति याज्ञवल्क्यवचनेनापि (१/६९) इदमेव प्रमीयते॥

(२) द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः।
अनिवृतं नियोगार्थं पश्यन्तो धर्मतस्तयोः॥ (म० स्मृ० ९/६१)

(३) या० स्मृ० १/६९

(४) म० स्मृ० ९/६९

(५) म० स्मृ० ९/५९

(६) पा० गृ० १/१३

(७) सं० प्र० पृ० १६६

मन्त्रेण । गर्गपद्धतौ तु नासापुटे औषधिसिञ्चनानन्तरं भर्त्रा भोजनं कर्तव्यमित्यधिकमुक्तम्[1] ।

( एवं साङ्गोपाङ्गं गर्भाधानं निरूपितम् । सम्प्रति विचारणीयमेतत्- किमिदं गर्भाधानं स्त्रीसंस्कारो गर्भसंस्कारो भवेति । )

## गर्भाधानस्य क्षेत्रसंस्कारत्वम्—

अत्र प्रथमं तावत्संशयः-किमिदं गर्भसंस्कारो वा क्षेत्रस्य (=भार्यायाः) संस्कारो वेति । वचनं चोभयविधमुपलभ्यते। तथाहि—

'निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः'[2] इति याज्ञवल्क्यवचनेन,

'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः[3]' इति मनुवचनेन च गर्भसंस्कारत्वम् प्रतीयते ।

"स्नातायाः सुकृतायाश्च ऋतुमत्याः समेऽहनि ।
दक्षिणस्यां नासिकायां सिञ्चेद् दूर्वारसं पतिः ॥
जायाया दक्षिणे नासारन्ध्रे सिञ्चेत् तद्रसम्[4] ॥"

इति शौनकवचनेन पुनः जायाया एव संस्कार्यत्वमवगम्यते । अतो युक्तः संशय इति ।

अत्रैकं मतं गर्भसंस्कार इति । तथाहि—यथा पुंसवनादिशब्दे वयवशक्त्यैव गर्भसंस्कारत्वं तथा गर्भस्याधानं यदि वा गर्भे आधानम् अथवा गर्भः आधीयतेऽनेनेति व्युत्पत्त्या सर्वथा गर्भस्यैव संस्कार्यत्वं युक्तम् । अत एव 'गर्भाधानं पुंसवनम्..........' इत्युपक्रम्य 'एते चत्वारिंशत् संस्काराः' इत्यभिधाय 'एतैश्चत्वारिंशता संस्कारैः संस्कृतः' इत्यभिदधता गौतमेनाप्ययमेवार्थः प्रमाणितः । यदि गर्भ आधीयते यस्मिन्नित्यधिकरणवचनतोच्येत तदा कुर्यादिति विध्यनुपपत्तिः, अधिकरणकर्तव्यताया अशक्यत्वेन विधिविषयत्वाभावात् । किञ्च—'अग्निमादधीत' इत्यत्र यथा आधानेनाग्निः संस्क्रियते तथा गर्भोऽप्याधानेन संस्कार्य इति युक्तमस्य गर्भसंस्कारत्वमेव ।

अपरं च मतम्-जायासंस्कार इति । गर्भआधीयते येनेति करणव्युत्पत्त्या, जायाया दक्षिणे नासारन्ध्रे इति पूर्वोद्धृतशौनकवचनस्य शेषेण—

( १ ) पा० गृ० ग० भा० १/१३
( २ ) या० स्मृ० १/१०
( ३ ) म० स्मृ० २/१६
( ४ ) सं० प्र० पृ० १५८

उदरस्थे रसे तस्मिन्नाचान्तसलिलां सतीम्।
उपगच्छेद् वधूमेवं विधिनोपगमे कृते।
गर्भः स्थिरः स्यादित्येवं गर्भलम्भनमूचिरे॥

इति रूपेण अश्वगन्धादिरस-सेचनसंस्कृताया भार्याया गमनस्यैव गर्भाधानत्वेन—

"विष्णुर्योनीं जपेत्सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती"[1] इति द्वितीया-निर्दिष्टयोन्युपगमस्य च तत्त्वेन जायासंस्कारतैवोचिता।

यत्त्वाधानेनाग्नेरिव गर्भस्याधानं संस्कार इति तन्न, दृष्टान्तवैषम्यात्। आधाने हि द्वितीययाऽग्निः संस्कार्यत्वं प्रत्यक्षसिद्धम्। न चात्र तथा। न च भूतभाव्युपयोगाभावात् स्त्रीसंस्कारो निरर्थक इति युक्तम्, असंस्कृतोत्पन्न-पुत्रस्य दोषयुक्तत्वाभिधानात्[2] जातदोषपरिहारस्यैव तदर्थत्वात्। न चैवं मन्वाद्युक्तगर्भसंस्कारकत्वविरोधः, संस्कृतक्षेत्रोत्पत्तिजनितातिशयाभिप्रायेण तदुपपत्तेः। यथा आहरणसंस्कृतारण्युत्पन्नस्याग्नेः। अत क्षेत्रसंस्कारकत्वमेव गर्भाधानस्य युक्तम् न पुनः गर्भसंस्कारकत्वम् इति[3] प्रतीमः।

## (२) पुंसवनम्

पुंसवनं हि गर्भाधानानन्तरकालिकं कर्म। अस्यार्थश्च यौगिक एव ग्राह्यः[4]। तथा च 'पुमान् प्रसूयते येन कर्मणा' तदिति व्युत्पत्त्या[5] गर्भस्य पुंस्वरूपतापादकः संस्कारविशेष एव पुंसवनम् इति फलितम्।

इदं कर्म वेदेऽपि भृशं निर्दिष्टमुपलभ्यते। संस्कारप्रकरणे चेयमृगुद्धृता—

---

(१) सं० प्र० पृ० १५८

(२) गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति।
अकृत्वा गा द्विजे दत्वा कुर्यात् पुंसवनं पतिः॥
इत्याश्वलायनोक्तम्। (सं० र० मा० पृ० ६९३)

(३) सं० प्र० पृ० १५८

(४) गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्। एवं वक्ष्यमाणान्यपि॥ (मिताक्षरा १/११)

(५) शौनकः-पुमान् प्रसूयते येन तत्पुंसवनमीरितम्॥ (सं० प्र० पृ० १६७)

आ ते गर्भो योनिमे तु पुमान् वाण इवेषुधिम्।
आ वीरो जायतां पुत्रस्य दशमास्यः[1] ॥ इति।

अन्यत्रापि ऋग्वेदे पुत्रकामना भूयो भूय उपलभ्यत एव। अथर्ववेदे तु ततोऽपि स्पष्टतरं[2] दृश्यते। अस्मिन्नवसरे प्राजापत्याख्यं कर्मापि[3] समुपदिष्टमस्ति, परमस्य विधिर्न ज्ञायते ततः। किन्तु इत्थमेव संहितासु निर्देशमवलम्ब्य गृह्यधर्मसूत्रकारादिभिः पुंसवनस्वरूपमुद्घाटितम् पूर्णं विवृतं च। तत्र शाखाभेदादवान्तरो भेद आनुष्ठानिको यत्र-तत्रोपलभ्यते। पुंसवनन्तु-पुनः सर्वेषां गृह्यसूत्रकारादीनामभिमतमेव।

## पुंसवनकालः—

पुंसवनाख्यं कर्म गर्भस्पन्दनात्[4] पूर्वं कार्यम्। अतएव व्यक्ते[5] गर्भे पुंसवनं कार्यमित्यस्याप्ययमेवार्थः। गर्भाभिव्यक्तिकालश्च गर्भाधानाद् तृतीयो

(१) सं० प्र० पृ० १६६।
(२) पुमांसं पुत्रं जयन तं पुमाननुजायताम्।
भवासि पुत्राणां माता जातानां जनयाश्च तान्॥
यानि भद्राणि बीजान्यृषभा जनयन्ति च।
तैस्त्वं पुत्रं विन्दस्व सा प्रसूर्धेनुका भव॥ (अ० वे० ३/२३/३-४)
(३) वृणोमि ते प्राजापत्यमा योनिं गर्भं एतु ते।
विन्दस्व त्वं पुत्रं नारि यस्तुभ्यं शमसच्छमु तस्मै त्वं भव॥ (अ० वे० ३/२३/५)
इदं कर्म सर्वप्रायश्चित्तनामको होमो वा स्यात् न वेति न निर्णेतुं शक्यते।
यद्यपि कर्मप्रदीपे–देवतानां विपर्यासे जुहोतिषु कथं भवेत्॥ (कर्मप्रदीपः २६/१६)
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः॥ इत्युक्तम्, तथापि तदेवात्राप्यतिदेष्टुं न निर्विचिकित्सं शक्यते॥
(४) पुरा तु स्पन्दनात् कार्यं सवनन्तु विचक्षणैः॥ शंखः॥ (सं० प्र० पृ० १६७) पुरा स्पन्दते–(पा० गृ०। १/१४/२) पुंसः सवनं स्पन्दनात् पुरा॥ (या० स्मृ० १/११)
(५) व्यक्ते गर्भेऽथवा कार्यं—जातूकर्ण्यः॥ (नि०सि० पृ० ५९२,) (सं०म० पृ० १९ विज्ञाते गर्भतिष्ये पुंसवनम्-(बौ० गृ० १/९/१,) (आप० गृ० ५/१४/९)

ष्ठ चतुर्थो वा मासः[1] स्यात्। पारस्करादिभिस्तु मासनियम उक्तः। तत्र स्पन्दनात् पूर्वमासे द्वितीये तृतीये वेति पारस्करः[2]। तृतीयस्य गर्भमासस्य तृतीये भागे इति गोभिलः[3]। तृतीये मासीति[4] खादिरद्राह्यायणावपि। जैमिन्यादयोप्येवमेवाहुः[5]।

अन्यत्रापि स्मृत्यादौ[6] प्रथममासादारभ्याष्टममासपर्यन्तं पुंसवनं विधेयम् इत्युक्तम्। भूयिष्ठगतेषु गर्भमासेष्वित्यस्याप्यत्र[7] समावेशः॥

---

(१) गर्भो व्यक्तस्तृतीये स्याच्चतुर्थे मासि वा भवेत्॥ बृहस्पतिः॥ (सं० र० मा० पृ० ८११) शारीरके–तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोति॥ (सं० म० पृ० १९) तल्लक्षणं च सुश्रुते–सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योन्याः॥ (सं० प्र० पृ० १६८)

(२) पुरास्पन्दत इति मासे द्वितीये तृतीये वा॥ (पा० गृ० १/१४/२)

(३) तृतीयस्य गर्भमासस्यादिसदेशे पुंसवनस्य कालः॥ (गो० गृ० २/६/१)

(४) प्रथमगर्भ तृतीये मासि पुंसवनम्॥ (पा० गृ० २/२/१७)

(५) पुंसवनं तृतीये मासि–(जै०गृ० १/५) तृतीये गर्भमासे–(वा०गृ० १९/१) वैजवापः–मासि द्वितीये तृतीये वा पुरा स्पन्दत इति॥ (सं० प्र० पृ० १६७) प्रथमगर्भे तृतीये मासि पुंसम्॥ (द्रा० गृ० २/२/१७)
अत्रास्य सूत्रस्य वृत्तिरप्यनुसन्धेया–"सर्वगर्भार्थो यं संस्कार आधार-संस्कारद्वारेण सकृदेव क्रियते। भार्यान्तिरे तु कर्तव्यमेव। प्रथमगर्भे दर्शादूर्ध्वमादशदिको मासः। यत्र कुत्रचिद्दिनेऽप्याहिते गर्भे स एको मासो गमयितव्यः" इति। (द्राह्यायणगृह्यसूत्रस्य रुद्रस्कन्दकृता वृत्तिः)

(६) हेमाद्रौ यमः- प्रथमे मासि द्वितीये वा यदा पुंसनक्षत्रेण चन्द्रमा युक्तः स्यात्॥ (नि० सि० पृ० ४९३)
जातूकर्ण्यः—द्वितीये वा तृतीये वा मासि पुंसवनं भवेत्॥
(सं० प्र० पृ० १६७, सं० म० पृ० १९, नि० सि० ४९२)
चतुर्थे मासि षष्ठे वाप्यष्टमे वा शुभेदिने॥ नारदः॥ (सं० र० मा० पृ० ८११) प्रथमे मासे वा पूर्णे भवति द्वितीये वा तृतीये वेति भर्तृयज्ञः॥ (पा० गृ० ग० भा० १/१४/२) अष्टमे गर्भमासे–(मा० गृ० २/४)
वसिष्ठः–चतुर्थे सावने मासि षष्ठे वाप्यथवाऽष्टमे॥ (सं०र०मा०पृ०८११)

(७) अथ पुंसवनम्। भूयिष्ठगतेषु गर्भमासेषु–(लौ० गृ० ३२/१)

अत्रायं निष्कर्षः—शाखाभेदाद्व्यवस्थेति प्रथमः कल्पः। तत्र च व्यक्ते गर्भे पुंसवनं कार्यमिति सिद्धान्तात् यदि द्वितीये मासि गर्भः स्पष्टो भवेत् तर्हि तदानीमेव, अन्यथा तु तदूर्ध्वमिति निर्णयः[1] सीमन्तेन[2] सहैवैतत् कार्यम्। सीमन्तानन्तरन्त्वेतद्विहितमापस्तम्बलौगाक्षिमानवगृह्यसूत्रेषु[3] [4]प्रागेवेति वृहस्पतिमतम्। तदपि कालातिक्रमे ऐवेत्युक्तं तेनैव। मुख्यःकल्पस्तु वृहस्पतिमतानुसारेणापि तृतीय एवेत्यावेदितं प्राक्।

तत्र यदि दैवात् मानुषाद्वा बाधकात् प्राप्तकाले नानुष्ठितं कर्मतत् तदा सर्वप्रायश्चित्ताख्यं होमं कृत्वा कार्यमेतदिति व्यवस्था[5]।

---

(१) शौनकः—व्यक्ते गर्भे तृतीये तु मासि पुंसवनं भवेत्।
गर्भे व्यक्तस्तृतीये चेच्चतुर्थे मासि वा भवेत्॥ (सं०प्र०पृ०१६८)

(२) जातूकर्ण्यः—द्वितीये वा तृतीये वा मासि पुंसवनं भवेत्।
व्यक्ते गर्भे भवेत् कार्यं सीमन्ते सहाथवा॥ (सं० र० मा० पृ० ८११, सं० म० पृ० १४)

(३) हिरण्यकेशिगृह्यसूत्रेऽप्येवमेवोक्तम्—"अथातः पुंसवनं तृतीये मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे" इति। सीमन्तोत्तरं पुंसवनकथनम्—सं० र० मा० पृ० ८११

(४) कारिकायाम्—

एतदेव पुरा गर्भचलनादकृतं यदि।
सीमन्तात् प्राग्विधातव्यं स्पन्दितेऽपि वृहस्पतिः॥
(पा० गृ० ग० भा० १/४४/२)

(५) देवतानां विपर्यासे जुहोतिषु कथं भवेत्।
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः॥
संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन।
हुत्वैतदेव कर्त्तव्या ये तूपनयनादधः॥ (क० प्र० ३/६/१६-१७)

अत्रोपनयनादध इति वचनात् चूडाकरणपर्यन्तमेव सर्वप्रायहोमे शुद्धिरिति ज्ञापितम् भवति। उपनयने च व्रात्यस्तोमाख्यस्य प्रायश्चित्तस्य—
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥ इति याज्ञवल्क्यस्मृतौ (१,३८) गरुडपुराणे (९४/२३) च दर्शनात्तत्र तदेव प्रायश्चित्तं ज्ञेयम्।

अत्र गुरुशुक्रास्तादिदोषो[1] मलमासादिदोषश्च[2] नैव भवति। पुंसवने पक्षोऽपि शुक्ल[3] एव प्रशस्तः। एतच्च रिक्तापर्वभिन्नायां तिथौ[4] विधेयम्। तत्रापि नवमी सर्वथैव त्याज्या, नृसिंहेन रिक्तां प्रतिषिध्य पुनः पृथक् नवम्याः प्रतिषेधात्[5]। सोमबुधगुरुशुक्रदिनानि चात्र प्रशस्तानि मन्यन्ते केचन[6]। किन्तु ज्योतिर्निबन्धे सोमे पुंसवने कृते तनुहानेः बुधे च तत्करणे मृतप्रजात्वस्योक्तत्वात्, शुक्रे च तत्करणे काकबन्ध्यात्वसम्भवात् रविमंगल-गुरुदिनान्येव[7] प्रशस्तानीत्युक्तम्।

**अथ नक्षत्राणि—**

हस्तः श्रवणः पुनर्वसुमृगशिरः पुष्यः अनुराधा; पूर्वभाद्रपदा अश्विनी इत्येतानि नक्षत्राणि प्रशस्तानि, पुंसंज्ञकेषु पुंसवनोपदेशात्,[8] हस्तादीनामेव

---

(१) मासप्रयुक्तं कार्येषु मूढत्वं गुरुशुक्रयोः
न दोषकृत्तदा मासलक्षणो बलवानिति ॥ बृहस्पतिः ॥
(सं० प्र० पृ० १६६, सं० र० मा० पृ० ६१२)

(२) वृद्धिर्दास्य पुंसवादि प्रेतकर्मानुमासिके ॥
मलमासेऽपि कुर्वीत.......... (सं० र० मा० पृ० ६१३ द्र०सं० प्र० १६९)
यमः—गर्भे वाधुंषिके भृत्ये श्राद्धकर्मणि मासिके।
सपिण्डीकरणे चैव नाधिमासं विवर्जयेत् ॥ (सं० र० मा० पृ० ६१३)

(३) बैजवापः—अथ पुंसवनानवलोभने आपूर्णमाणपक्षे-॥ (सं०प्र०पृ०१६९)

(४) कुर्यात् पुंसवनम्—अरिक्ता तिथौ ॥ (सं० र० मा० पृ० ६११)

(५) नृसिंहः—रिक्ताश्च पर्वनवमीं हित्वा पुंसवने शुभाः ॥ (सं० प्र० पृ० १६९, सं० र० मा० पृ० ६१२, नि० सि० पृ० ४९३)

(६) कालविधाने—शुक्रशशभृद्विन्मन्त्रिणां वासरे ॥ (सं०र०मा० पृ० ६११)
(शशभृच्चन्द्रः, विद्बुधः, मंत्री बृहस्पतिः) बृहस्पतिः—गुरुशुक्रबुधेन्दूनां द्रेष्काणादिवसांशकाः। तेषामुदयहोरा च पुंसवेति शुभावहा ॥ (सं० र० मा० पृ० ६१२, सं० प्र० पृ० १६९)

(७) ज्योतिर्निबन्धे वसिष्ठः—

मृत्युश्च सौरेस्तनुहानिरिन्दोर्मृतप्रजा पुंसवने बुधस्य।
काकी च बन्ध्या भवतीह शुक्रे स्त्रीपुत्रलोभी रविभौमजीवैः ॥
(नि० सि० पृ० ४९३)

(८) गर्गः—
कुर्यात् पुंसवाख्यं तु पुंन्नामर्क्षे शुभे दिने
पुंनाम श्रवणं तिष्यो हस्तश्चैव पुनर्वसू ॥
अभिजित् प्रोष्ठपाच्चैव अनुराधा तथाश्वयुक्। (सं०र०मा० पृ० ६१२)

त्र पुंसंज्ञकत्वात्। निर्णयसिन्धूद्धृतवराहवाक्ये तु मूलमपि विहितम्[1]। संस्कार-प्रकाशस्थगर्गवचनपाठान्तरे तु मूलं स्वाती चोक्ते[2]।

अत्र राशिविषये कर्कमिथुनकन्यानां वर्ज्यत्वमुक्तं बृहस्पतिना[3] परन्तु कर्कमिथुनयोरपि शुभग्रहवीक्षितयोः पुंसवनं विधातुं शक्यमिति च तेनैवोक्तम्, कन्यायां तु शुभग्रहवीक्षितायामपि नेति विशिष्य तन्निषेधात् कन्या सर्वथैव वर्ज्येति विशेषः।[4]

चन्द्रताराबलमपि बोधितव्यम्[5]। नारदादिभिस्तथोक्तत्वात्।

## पुंसवनकर्ता

प्रथमोऽधिकारी तु पतिरेवात्रापि[6] कर्मान्तरवत्। किन्तु तदभावे देवरादिभिरपि कार्यमेव, न त्वेव न कार्यम्[7]।

---

(१) पुन्नामश्रवणं तिष्यः स्वातीहस्तपुनर्वसू।
मूलं प्रौष्ठपदं चानुराधा मृगशिरोऽश्विनी॥ (सं० प्र० पृ० १७०)

(२) वराह :—हस्तो मूलं श्रवणः पुनर्वसुमृगशिरस्तथा पुष्यः।
पुंसज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि॥ (सं०र०मा०पृ० ६१२)

(३) बृहस्पति :—कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः॥
(सं० प्र० पृ० १७०, सं० म० पृ० २०)

(४) अनुक्ते चापि राशौ तु शुभं स्याच्छुभवीक्षिते।
कन्यायां प्रशंसन्ति शुभदृष्टे युतेऽपि च॥
(अनुक्ते-निषिद्धे) (सं० प्र० पृ० १७०)

(५) पुंसवनं प्रकृत्य नारदः-बलोपपन्ने दम्पत्योश्चन्द्रताराबलान्विते॥
(सं० म० पृ० २०, सं० र० मा० पृ० ६१२)

(६) ब्राह्मे—गर्भाधानादिसंस्कर्त्ता पतिः श्रेष्ठतमः स्मृतः।
अभावे स्वकुलीनः स्याद् बान्धवोऽन्यत्र गोत्रजः॥
(नि० सि० पृ० ४९२)

(७) सत्यव्रतः—मृतो देशान्तरगतो भर्त्ता स्त्री यद्यसंस्कृता।
देवरो वा गुरुर्वापि वंश्यो वापि समाचरेत्। (नि०सि०पृ०४९२)
संस्काररत्नमालायां (पृ० ६१३) पाठान्तरं किञ्चित्।
आश्वलायनः—पत्यौ मृते वा संन्यस्ते पतिते वा विदेशगे।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः॥
(सं० र० मा० पृ० ६१३)

**प्रतिगर्भमेतत् कार्यं प्रथमगर्भे एव वा :--**

अत्र विज्ञानेश्वरेण क्षेत्रसंस्कारकत्वमस्योरीकृत्य प्रथमगर्भ एवानुष्ठेयत्वमुक्तम्[1]। कर्कोपाध्यायादयस्तु गर्भसंस्कारकत्वं मन्यमानाः प्रतिगर्भमावर्तयन्ति[2]। अनयोरन्त्यपक्ष एव श्रेयानिति निर्विवादम्। अत एवान्यत्रापरार्कादियाज्ञवल्क्यव्याख्याकारैरपि एवमेवोक्तम्[3]। तथा च विज्ञानेश्वरोक्तं चिन्त्यमेव। समाख्यया पुंसवनशब्दस्य गर्भसंस्कारकत्वावगमात्। अत एव पारस्करादिवचनातिदेशोऽपि न युक्तः[4]।

---

(१) एते च पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारत्वात् सकृदेव कार्ये।
(मिताक्षरा-१/११)

(२) पुंसवनमिति गर्भसंस्कारकर्मणी नामधेयम्॥ (पा० गृ० क० भा १/१४)
हरिहरादयोऽप्येवमाहुः पारस्करभाष्ये।
कात्यायनकारिका-अथ पुंसवनं वक्ष्ये प्राग् गर्भचलनाद् भवेत्।
गर्भसंस्कार एवायमिति कर्कस्य संमतिः॥
अतस्तद् गर्भसंस्काराद् गर्भे गर्भे प्रयुज्यते॥
(पा० गृ० ग० भा० १/१४, सं० प्र० पृ० १७२)

(३) बह्वृचकारिकायाम्-आवर्त्तत इदं कर्मप्रतिगर्भमिति स्थितिः।
(नि० सि० पृ० ४९२)
वृहस्पतिः—तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम्।
गृष्टेश्चतुर्थे मासे तु षष्ठे वाप्यथवाष्टमे॥
(गृष्टिः—सकृत्प्रसूता) (नि० सि० पृ० ४९२, सं० प्र० पृ० १६८)
शौनकेनाप्येवमभिहितम्—

प्रतिगर्भमिदं कार्यं कर्म पुत्रीयताऽखिलम्।
प्राशनस्पर्शकरणात् गर्भस्थः संस्कृतो भवेत्॥
पुंसवे मन्त्रसामर्थ्याद् वेत्ति प्राग्जन्मनः स्मृतिम्।
तस्मात् पुंसवसंस्कारः प्रतिगर्भं प्रवर्त्तते॥
(सं० प्र० पृ० १७१)

(४) यदपि 'अथ सीमन्तोन्नयनं पुंसवनवत् प्रथमगर्भे' (पा० गृ० १/१५) इति पारस्करवचनमत्र प्रमाणतया प्रतीयते तदपि सीमन्तोन्नयनस्य प्रथमगर्भकर्तव्यत्वं प्रतिपादयति, न पुनः पुंसवनस्य। उक्तवचनविरोधापत्तेः। वचनातिदेशस्तु धर्मान्तरोपसंग्रहार्थः। (सं० प्र० पृ० १७२)

## सीमन्तोन्नयनम्

सीमन्तस्योन्नयनम् सीमन्तोन्नयनम्। सीमन्तशब्दश्च केशवेशे[1] प्रसिद्धः। तथा च सीमन्तस्य उन्नयनं यत्र संस्कारे तत् सीमन्तोन्नयनम् इत्यागच्छति[2]।

अयं च संस्कारः प्रायेण ऋते सामवेदमन्त्रब्राह्मणात् अन्यत्र न उपलभ्यते। सामवेदब्राह्मणे त्वस्य सन्ततिदीर्घायुष्यहेतुकमनुष्ठानमुल्लिखितं विद्यते[3]। गृह्यसूत्रादौ पुनः स्पष्टमेव विशदं वर्णित एव।

## सीमन्तोन्नयनं प्रथमगर्भे एव कार्यं प्रतिगर्भं वा

इदं कर्म प्रतिगर्भं कार्यं सकृदेव वेत्यत्र मतद्वयम्। तत्रैतदेव प्रथमतो विवेचनीयं यदिदं स्त्रीसंस्कारो गर्भसंस्कार एव वेति। यदि तु स्त्रीसंस्कारः स्यात्तर्हि सकृदेव कार्यम्, गर्भसंस्कारश्चेत्तर्हि प्रतिगर्भं कार्यमेवेति स्पष्टमेव। अत एव विष्णुवचनम्—

सीमन्तोन्नयनं कार्यं तत्स्त्रीसंस्कार इष्यते।
केचिद्गर्भस्य संस्काराद् गर्भं गर्भं प्रयुञ्जते[4] ॥ इति ॥

पारस्करव्याख्यायां गदाधरेण चैतदेव विष्णुवचनमन्यथा पठितम्-

सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।
केश्चित्तु गर्भसंस्काराद् गर्भ-गर्भं प्रयुज्यते[5] ॥ इति।

गदाधरेण चैतद्वचनं हेमाद्रेः कारिकातश्च संगृहीतम्। वीरमित्रोदयेऽपि एवंपरकमेवेदं विष्णुवचनं पठितम्, केवलं तृतीयचतुर्थयोः शब्दभेदः—

सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।
केचिद् गर्भस्य संस्काराद् गर्भ-गर्भं प्रयुञ्जते[6] ॥ इति।

---

(१) 'सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिः'
इत्युद्धृतं पा० गृ० गदाधरभाष्ये (१/१५)
(२) सीमन्तः उन्नीयते यस्मिन् कर्मणि तत् सीमन्तोन्नयनम् इति कर्मनामधेयम्- (सं० प्र० पृ० १७२)
(३) येनादितिः सीमानं नयति प्रजापतिर्महते सौभगाय।
तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं करोमि ॥
(सामवेदमन्त्रब्राह्मणम्–१/५/२)
(४) सं० म०, पृ० २१
(५) पा० गृ० भा० १।१५
(६) सं० प्र० पृ० १७७

एतावता यद्यपि पूर्वोक्तविष्णुवचनस्य मौलं स्वरूपं दुर्विज्ञेयमेव तथापि स्त्रीसंस्कारपक्षे सकृदेव कार्यम्, गर्भसंस्कारपक्षे तु प्रतिगर्भमित्यत्र न कश्चन भेदः प्रतीयते पाठभेदात्।

तत्रैवं पक्षद्वये सति पारस्करव्याख्याता कर्कोपाध्यायः[1] सति गर्भे सीमन्तोन्नयनसम्भवात् असति च तदभावात् गर्भस्यैवायं संस्कार इति मन्यते। जयरामोऽप्येनमनुसरति[2]। हेमाद्रिवीरमित्रोदयादिनिर्दिष्टमुपर्युद्धृतं विष्णुवचनमप्येतदेव समर्थयति।

विज्ञानेश्वर[3]स्तु गर्भसंस्कारत्वमस्यानभ्युपगच्छन् गर्भिणीसंस्कारत्वमेवाह। तथा चैतन्मते सकृदेवायं संस्कारः कार्यः। पारस्करव्याख्यातारो हरिहर[4]गदाधर[5]विश्वनाथो[6]पाध्याया अपि स्वीचक्रुरिदमेव। केशवभट्टोऽपि संस्काररत्नमालायां प्रत्यपीपदद् सकृत्कर्तव्यत्वमेवास्य कर्मणः। अत्रार्थेऽनेन हारीतवचनमपि प्रमाणतयोपन्यस्तम्—

---

(१) सीमन्तोन्नयनमिति संस्कारः, स च गर्भस्य; तदभावेऽभाव इति। अतश्च प्रतिगर्भं क्रिया।....अपरे तु वर्जयन्ति-सीमन्तोन्नयनं प्रथमगर्भ एवेति। अस्मिन् व्याख्याने द्वितीयादीनां गर्भाणां तत्संस्कारलोपः प्राप्नोति। तस्मान्नैतदिष्यते।—(पा० गृ० क० भा० १।१५)

(२) सीमन्तोन्नयनमिति संस्कारः। स च गर्भस्य, तद्भावे भवति तदभावे चाभाव इति।.......अपरे तु प्रथमगर्भ एवेत्याहुः। नैतत्, द्वितीयादिगर्भाणां तत्संस्कारलोपापत्तेः। (पा० गृ० ज० भा० १।१५)

(३) एते च द्वे पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कार्ये, न प्रतिगर्भम्-मिताक्षरा (या० स्मृ० १।११)

(४) अत्र 'प्रथमगर्भे' इति वचनात् स्त्रीसंस्कारकर्मत्वाच्च न प्रतिगर्भं सीमन्तोन्नयनम्। (पा० गृ० हृ० भा० १।१५)

(५) प्रथमगर्भ आद्यगर्भे भवति।.......ननु प्रथमगर्भ एव सीमन्तोन्नयनसंस्कारे क्रियमाणे द्वितीयादिगर्भाणां तत्संस्कारलोपः स्यादिति चेत्? नैवम्। 'यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्' इति हारीतवचनात् आद्यगर्भे संस्कारे कृते सर्वगर्भाणां संस्कार इति न संस्कारलोपः। (पा० गृ० ग० भा० १।१५)

(६) गर्भिण्याः संस्कार्यत्वान्न प्रतिगर्भं सीमन्तोन्नयनम्। (पा० गृ० वि० भा०। १।१५) अथास्याश्चतुर्थे मासि षष्ठे वा सीमन्तोन्नयनम् (द्रा० गृ० २।२।२४) इति सूत्रं व्याचक्षाणो रुद्रस्कन्दोप्याह–अस्या इति प्रथमगर्भं नियमार्थम्' इति।

सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्[1] ॥ इति ।

एतदेव वचनं संस्कारप्रकाशेऽ[2]प्युद्धृतम् । हरिहर[3]गदाधरा[4]भ्यामपि स्वोक्तसमर्थनाय हारीतवचनमिदमुपन्यस्तम् । मयूखेऽ[5]पि स्त्रीसंस्कारत्वमेवास्योरीकृतम् । अत्र तन्मतं तदक्षरैरेव निर्दिश्यते—"इदं च सकृदेव कार्यम्, प्रथमे गर्भे इति सांख्यायनापस्तम्बोक्तेः । स्त्रीसंस्कारत्वाच्च" सकृत्सुसंस्कृता नारी सर्वगर्भेषु संस्कृता[6]" इति वचनप्रवृत्तेः । यत्तु स्मृतिचन्द्रिकायां विष्णुः—

सीमन्तोन्नयनं कर्म तत्स्त्रीसंस्कार इष्यते ।
केचिद् गर्भस्य संस्काराद् गर्भे गर्भे प्रयुञ्जते ॥ इति ।

तत्र केचिदित्युक्तत्वादनादरः स्पष्टः । हारीतस्तु स्पष्टमेवाह—

सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥ इति ।

तस्मात् सकृदेवेदं कर्म कर्तव्यमित्यपरः पक्षोऽपि सुव्यक्त एव ।

अत्रेदं विचारणीयम्-कतरदनयोर्मतयोर्ज्याय इति । एतन्निर्णयाय गृह्यकाराणां वचनानि प्रथमतोऽवलोकनीयानि यथायथम्—

"सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि" इत्यापस्तम्बः ।
"सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनं" इति सांख्यायनः ।

---

(१) सं० र० मा० पृ० ८२२
(२) सं० प्र० पृ० १७७
(३) पा० गृ० ह० भा० १।१५
(४) पा० गृ० ग० भा० १।१५
(५) सं० म० पृ० २०-२१
(६) इदमेव वचनं पूर्णं विज्ञानेश्वरेणोद्धृतम्—
सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।
यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत् ॥ (मिताक्षरा १।११)
इदं च देवलवचनमिति च तत्रैव, मयूखे (पृ २०), पा० गृ० ह० भाष्ये च (१।१५)

"प्रथमगर्भे मासे षष्ठेऽष्टमे वा" इति पारस्करः[१]।
"प्रथमगर्भायाः चतुर्थे मासि सीमन्तोन्नयनम्" इति बौधायनः[२]।
"अथातः सीमन्तोन्नयनम् प्रथमगर्भायाश्चतुर्थे मासि"[३]

तथा च प्रायेण गृह्यकारैः प्रथमगर्भे एवास्य संस्कारस्य विहितत्वात् सुतरामेतत् सिद्ध्यति गर्भिणीसंस्कारकमेव कर्म, न गर्भ संस्कारकम् इति। अत एव निबन्धकारादिभिरपि व्याख्यातमेव पूर्वप्रतिपादितमेव संस्कारमालाद्युद्धरणेन। अत एव च संस्कारप्रकाशे आश्वलायनवचनमपि तथैव दृश्यते—

पत्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः।
आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः॥
तासां निरसनार्थाय श्रियमावाहयेत् पतिः।
तस्मात् प्रथमगर्भस्य सीमन्ताख्यो विधीयते[४]॥ इति।

अत्र यद्यपि प्रथमगर्भस्य सीमन्ताख्य इति वचनम्, तथापि नैतत् स्त्रीसंस्कारत्वाभावप्रतिपादकम्, तथा हि सति गर्भान्तराणामसंस्कारापत्तेः। अत एव चाश्वलायनगृह्यपरिशिष्टेऽपि "प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भमात्रसंस्कारः[५]" इत्युक्तम्। अत एव च सत्यव्रतवचनमपि संगच्छते—

स्त्री यदा कृतसीमन्ता प्रसूयेत कदाचन।
गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति[६]॥ इति।

अत्र स्पष्टमेव स्त्रियाः संस्कार्यत्वमुक्तम्। यत्तु गार्ग्यवचनम्—

यदि सीमन्ततः पूर्वं प्रसूता चेत्तु भामिनी।
तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत्[७]॥ इति,

तदपि गर्भिणीसंस्कारकत्वमस्य न प्रतिषेद्धुमलम्।

तस्माद् गर्भिणीसंस्काररूपत्वात् सीमन्तोन्नयनम् सकृदेव प्रथमे गर्भे कार्यम् इत्यस्माकं कल्पः।

---

(१) पा० गृ० १/१५
(२) बौ० गृ० १/१०/१
(३) (हि० गृ०) सं० र० मा० पृ०
(४) सं० प्र० पृ० १७२-७३
(५) पा० गृ० ग० भा० १/१५ उद्धृतमिदं वचनम्।
(६) संस्कारमयूखे (पृ० २१), संस्कारप्रकाशे (पृ० १७७), पा० गृ० ग० भाष्ये १/१५ चोद्धृतमिदं वचनम्।
(७) सं० प्र० पृ० १७७, सं० र० मा० पृ० ८२३

सीमन्तोन्नयनकालः—

( क ) मासः—

गर्भधारणात्प्रभृति कस्मिन् मासे सीमन्तोन्नयनं कार्यम् इत्यत्र शास्त्रकाराणां विमतिः। अतस्तेषां मतानि पूर्वमुपस्थाप्यन्ते—

तृतीये गर्भमास इति लौगाक्षिः[1]।
चतुर्थं मासीति आश्वलायना[2]पस्तम्बौ[3]। अर्णवेप्येव[4]मेव!
चतुर्थे पञ्चमे षष्ठे इति वैज[5]वायबौधानौ[6]।
चतुर्थे षष्ठे अष्टमे वेति शौनका[7]दयः।

चतुर्थे सप्तमे षष्ठे अष्टमे वेति ज्योतिर्वसिष्ठः[8]। षष्ठे अष्टमे वेति पारस्क[9]रः।

---

( १ ) तृतीये गर्भमासे सीमन्तोन्नयनं कारयेत् ॥ लौगाक्षिगृह्यसूत्रम् ३१/१

( २ ) चतुर्थे गर्भमासे सीमन्तोन्नयनम्–(आश्व० गृ० १/१४/१)

( ३ ) सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि (आप० गृ० )

( ४ ) सौरे मासि चतुर्थे तु शुभकर्माणि साधयेत्। (सं० प्र० पृ० १७४) उद्धृतम्।

( ५ ) अथ सीमन्तोन्नयनं चतुर्थे मासि पञ्चमे षष्ठे वा–वैजवायः। (सं० र० मा० पृ० ८२० उद्धृतम्।)

( ६ ) प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनम्–बौ० (गृ० १/१०/१,)परन्तु संस्कारप्रकाशे—

स चेत् प्रथमगर्भः स्यात् चतुर्थे मास्युपागते।
पञ्चमे वाथ षष्ठे वा कुर्यान्नान्दीमुखादिकम् ॥ इति दृश्यते।
(सं० प्र० पृ० १७२)

७— चतुर्थे गर्भमासे स्यात् सीमन्तोन्नयनक्रिया।
षष्ठेऽष्टमे वा कुर्वीत सूत्रान्तरविधानतः ॥ (इति सं० प्र० पृ० १७४) शौनकवचनमुद्धृतम् 'सौरेणैव चतुर्थे स्यान्मासे षष्ठाष्टमेऽपि वा' इति सं० प्र० पृ० १७४ बार्हस्पत्यवचनम्। चतुर्थषष्ठाष्टममासमाजिसौरेण गर्भे प्रथमे विधेयम्। सीमन्तकर्मद्विजभामिनीनां मासेऽष्टमे विष्णुर्बलिं च कुर्यात् ॥ इति च सं० प्र० पृ० १७४ कालविधानत उद्धृतम्।

( ८ ) ज्योतिर्वसिष्ठः—चतुर्थे सप्तमे मासि षष्ठे वाऽप्यथवाष्टमे। इति।
(सं० प्र० पृ० १७३)

( ९ ) प्रथमगर्भे मासे छेऽषष्ठे वा—पा० गृ० १/१५

सप्तमे इति सांख्या[1]यनः। याज्ञवल्क्योऽप्यमेवाह[2]। अष्टमे नवमे वेत्य[3]त्रिः। प्रसवात् पूर्वं यदा कदापि ( शुभमुहूर्त्तादौ ) इति तु कार्ष्णाजि[4]निः।

तथा चैतद् सिध्यति—चतुर्थे मासि सीमन्तोन्नयनं कार्यमिति प्रथमः कल्पः, तदभावे[5] तु पञ्चमादावपि। परन्तु स्वस्वशाखोक्तगृह्यानुसारेण मासान्तरेप्युत्तमत्वमेव मन्तव्यमस्यानुष्ठानस्य। चतुर्थे प्राथम्योक्तिस्तु सामान्यत इति।

अपरं चात्र विवेचनीयम्-अयं मासः सौरः सावनो वेति। तत्र सावने मासि सीमन्तोन्नयनमिति वसिष्ठः[6]। सौर एवेति बृहस्पति[7]प्रभृतीनां मतम्। पूर्वोद्धृतं कालविधानवचनमपि सौर एव कृत्यमेतदुदीरयति। तस्मात् सौरमास एव श्रेयान् इत्यस्माकं पक्षः।

**पक्षः—**

तत्र शुक्लः पक्षो ग्राह्य इति मुख्यः कल्पः[8]। अतएव बृहस्पतिवचनमेवं स्वरूपं संगच्छते[9]। कालनिर्णयेप्येव[10]मेव। यदि तु शुक्लपक्षे कथञ्चिद-

(१) सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनम्—सां० गृ०

(२) षष्ठेऽष्टमे वा सीमन्तः— या० स्मृ० १/११

(३) आधानादष्टमे मासि सीमन्तोन्नयनं भवेत्।
नवमे मासि वा कुर्यात् यावद् गर्भविमोचनम्॥ इत्यत्रिः। (सं० र० मा० पृ० ८२१, सं० प्र० पृ० १७४)

(४) गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा॥ इति कार्ष्णाजिनिः। सं० प्र० ( पृ० १७४ ) उद्धृतः।

(५) अभावे पूर्वपूर्वस्य विदधीतोत्तरोत्तरे इति शौनकः। (सं०प्र० पृ० १७४)

(६) सीमन्तः सावने मासि —इति वसिष्ठः। (सं० र० मा० पृ० ८२१)

(७) सौरेणैव चतुर्थे स्यात् मासे षष्ठेऽष्टमेऽपि वा। इति बृहस्पतिः। (सं०र० मा० पृ० ८२१, सं० प्र० पृ० १७४)

अर्णवेप्येवमेव—

सौरे मासि चतुर्थे तु शुभकर्माणि साधयेत्।
ग्रहाणां नायकः सूर्यः तस्मात् सौरे विशिष्यते॥ (सं०प्र०पृ०१७५)

(८) आप्यमाणपक्षे यदा पुंसा नक्षत्रेण·······आश्व० गृ० १/१४/२

(९) शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रयं विना—इति बृहस्पतिः। सं० र० मा० पृ० ८२१, सं० प्र० १७४

(१०) शुभसंस्थे निशीथे····इति कालनिर्णये। सं० प्र० पृ० १७५ अत्र शुभसंस्थे इत्यस्य शुक्लपक्ष इत्यर्थः।

नुष्ठाना-सम्भवस्तदा त्रयोदश्यादितिथित्रयं व्युदस्य कृष्णेऽपि कार्यमित्यपि बोध्यम्। तथा च संस्काररत्नमालायाम्—

"अत्र शुक्लपक्ष एव मुख्यः, आपूर्यमाणपक्ष इति गृह्योक्तत्वात्। असम्भवेऽन्त्यांशं विना कृष्णपक्षो ग्राह्यः। तथा च बृहस्पतिः-"शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना[१]" इति। अत्र अन्ते अवसाने अवगन्तव्यम्। अन्त्यं च तत् त्रिकं चेति त्रयोदश्यादियमित्यर्थोऽन्त्यत्रिकशब्दस्य बोध्यः[२]।

**तिथयः--**

**तत्रोक्तं कालविधाने—**

"पक्षच्छिद्राश्च रिक्ताः पितृतिथिमपहायापराः स्युः प्रशस्ताः[३]" इत्युक्तम्। तत्र पक्षच्छिद्राः चतुर्थी षष्ट्यष्टमी-नवमी-द्वादशी-चतुर्दश्य इति वसिष्ठः[४]। षष्ठ्यष्टमीद्वादश्य इति तु कश्यपः[५]। अत्राद्यं मतं वयं रोचयामहे, वसिष्ठोक्त्यनुसारेणार्थे तु उक्तकालविधानवचने रिक्ताग्रहणमनर्थकं स्यात्, चतुर्थी-नवमी-चतुर्दशीनां पक्षच्छिद्रात्वेनैव संगृहीत्वात्। संस्काररत्नमालाकारस्तु चतुर्थ्यादीनां पक्षच्छिद्रत्वेन निषेधेऽभिमते तु दोषातिशयख्यापनार्थं रिक्तात्वेन कालविधाने पुनर्निषेध[६]वचनं वदति। उक्तकालविधानवचने पितृतिथिरमावस्या। अत एव च 'पक्षच्छिद्रां च रिक्तां च विना पञ्चदशीं शुभाः।' इति बृहस्पति[७]वचने पञ्चदशीत्यस्यामावस्येत्यर्थः। नृसिंहस्तु द्वादशीं न प्रति[८]षेधति। कालनिर्णये तु चतुर्थी-चतुर्दशी-पौर्णमा-

(१) सं० र० मा० पृ० ८२१, सं० प्र० पृ० १७४
(२) सं० प्र० पृ० १७४
(३) सं० र० मा० पृ० ८२१
(४) वसिष्ठः—चतुर्दशी चतुर्थी च अष्टमी नवमी तथा।
षष्ठी च द्वादशी चैव पक्षश्छिद्राह्वयाः इमाः॥
(सं० र० मा० पृ० ८२१)
(५) कश्यपः—अष्टमी द्वादशी षष्ठी पक्षच्छिद्रास्तु तासु च।
(सं० र० मा० पृ० ८२१)
(६) सं० र० मा० पृ० ८२१
(७) पक्षच्छिद्रां च रिक्तां च विना पञ्चदशीं शुभाः। इति बृहस्पतिः।
(सं० प्र० पृ० १७५)
(८) वर्ज्या रिक्ताष्टमी षष्ठी सीमन्तोन्नयने सदा इति नृसिंहः।
(सं० प्र० पृ० १७५)

सीनामपि मतान्त[1]रानुसारेण प्रशस्तत्वमुक्तम्। तत्रैतास्तिथयः शुक्लगामिन्यो ग्राह्याः, कृष्णपक्षे सीमन्तकर्मणि अप्रशस्तत्वात्। पौर्णमास्याः कृष्णे सम्भवात्, तत्साहचर्याच्चेति युक्तम्। यदा तु कृष्णे एव विधेयं तदापि चतुर्थ्यादीन् वर्जयित्वेति प्रथम. पक्षः। तदभावेऽपि तु नियतनाड्यः परित्याज्याः। नियता नाड्यः परित्याज्यत्वेनोक्ता दश कश्यपेन[2]। पञ्च-नव-दश-चतुर्दश-पञ्चविंशति नाड्य इति तु वसि[3]ष्ठः।

तदेवं ग्राह्यास्तिथयोऽपि निरूपिताः। सम्प्रति वासरान् निरूपयामः।

विहितवासराः--

सीमन्तोन्नयनकर्मणि रविभौमगुरुवासरा उत्तमाः, सोमभृगुवासरौ मध्यमौ, शनिबुधवासरौ तु परिहार्यावेव। अतएव संस्काररत्नमालायां वृहस्पतिः।—

पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि।
मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुं[4]सकौ॥ इति।

अत्र पुरुषग्रहाः रविभौमगुरवः, स्त्रीग्रहौ सोमभृगू, नपुंसकौ शनिबु[5]धौ।

एतच्च कर्म दिन एव कार्यं विशेषेण। केचित्तु वैश्यशूद्राणाम्

---

(१) शुभसंस्थे निशानाथे चतुर्थी च चतुर्दशीम्।
पौर्णमासीं प्रशंसन्ति केचित्सीमन्तकर्मणि॥ इति कालनिर्णयः
(सं० र० मा० पृ० ८२२)

(२) अष्टमी द्वादशी षष्ठी पक्षच्छिद्रास्तु तासु च।
मङ्गले सर्वदा त्याज्या न्यूनं हि दशनाडिकाः॥ इति कश्यपवचनंनिर्दिष्टम्। (सं० र० मा० पृ० ८२१)

(३) क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः।
भूताष्टमनुतत्वाङ्क दश शेषास्तु शोभनाः॥ इति संस्काररत्नमालायां वसिष्ठः पृ० ८२१।

(४) सं० र० भा० पृ० ८१२, सं० प्र० पृ० १७५

(५) ज्योतिर्निबन्धे-पुरुषा रविगुरुभौमा नपुंसकाख्यो बुधोऽर्कपुत्रश्च।
नार्यौ भृगुचन्द्रमसौ ग्रहस्वभावस्थितिः कथिता॥ इति।
(सं० र० मा० पृ० ८२२, सं० प्र० पृ० १७५)

रात्रावपि कर्त्तव्यत्वमाहुः[1]। तत्र शूद्राणाम् अमन्त्रकमेवेति विशेषः।

**नक्षत्राणि--**

अत्र 'पुंसवनवत्'[2] इति पारस्करेणातिदेशात् यथा पुंसवनं तस्मिन्नहनि यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत तथैव पुंसा नक्षत्रेण चन्द्रमसा युक्ते सति कार्यं सीमन्तोन्नयनमिति लभ्यते। तत्र पुंन्नक्षत्राणि हस्तमूलश्रवणानि-पुनर्वसुपुष्यमृगशिरोऽनुराधाख्यानि[3]। बृहस्पतिना पुनर्विशेष उक्तः--

रोहिण्यैन्दवमादित्यपुष्यहस्तोत्तरात्रयम्।
पौष्णं वैष्णवभं चैव सीमन्ते दश संस्मृताः[4] ॥ इति।

अत्र ऐन्दवं मृगशिरः, आदित्यं पुनर्वसुः, पौष्णं रेवती, वैष्णवभं श्रवणः। संस्कारप्रकाशेऽपि ज्योतिःशास्त्रवचनम्—

हस्तादित्यश्रवणमभिजित्तिष्यमैत्राश्विनीकम् ।
पुन्नामैवं नवकमथ च प्रौष्ठपादद्वयं च ॥
मूलं मौम्यं शतभिषगिनि त्रीणी नापुंसकानी—
त्यन्यास्ताराstवभिनिगदिता योषितो ज्योतिषज्ञैः[5] ॥ इति।

**राशयः—**

कर्कसिंहकन्यावर्ज्या इति गर्गाचार्याः[6]। कालविधाने तु सिंहवृश्चिकौ

---

(१) नारदः—विप्रक्षत्रिययोः कुर्याद् दिवा सीमन्तकर्म तत्।
वैश्यशूद्रकयोरेतद्दिवा निश्यपि केचन ॥ इति।
(सं०प्र० पृ० १७५, सं० र० मा० पृ० ८२२)

(२) पा० गृ० पृ० १/१५
अत्र भूतानि—पञ्च, मनवश्चतुर्दश, तत्त्वानि पञ्चविंशतिः, अङ्का नवेति विज्ञेयम्।

(३) पुंनक्षत्राणि रत्नकोशे दर्शितानि—
हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरः पुष्यमिति।
अनुराधाऽपि पुंनक्षत्रम्, अनुराधान् हविषा वर्धयन्त इति श्रुतेः।
ज्योतिःशास्त्रेऽप्येवम्। (पा० गृ० ग० भा० १/१५)

(४) सं प्र० पृ० १७६, सं० र० मा० पृ० ८२२

(५) सं० प्र० पृ० १७६

(६) सीमन्तोन्नयनं कार्यं शुभांशे शुभलग्नके।
कुलीरमृगकन्याश्च वर्ज्याः शेषाश्च शोभनाः ॥ इतिगर्गः। (सं० म० पृ० ३१) अत्रकुलीरः कर्कः, मृगः सिंहः।

वर्जयित्वाऽन्यत्र विहितत्वं सीमन्तोन्नयनस्योक्तम्[1]। वृहस्पतिस्तु कर्कमिथुन-कन्या वर्ज्या इत्याह[2]। अतः कर्कसिंहमिथुनवृश्चिककन्या वर्ज्या एवेति युक्तम्।

### सीमन्तोन्नयनात्पूर्वमेव प्रसवे विशेषः—

अत्र गार्ग्याचार्या आहुः—

यदि सीमन्तः पूर्वं प्रसूता चेत्सु भामिनी।
तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत्[3]॥ इति।

सत्यव्रतोप्येवमेवाह—

स्त्री यदाकृतसीमन्ता प्रसूयेत कदाचन।
गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति[4]॥ इति।

अत्र पुनरिति पादपूरणार्थम्, यः संस्कारोऽतिक्रान्त स कर्तव्य इति मयूखः[5]।

### सीमन्तोन्नयनप्रयोजनम्—

शास्त्रे श्रूयते-रुधिराशनतत्पराः काश्चिद्राक्षस्यो नितरामाक्राम्यन्ति प्रथमं गर्भं पत्न्या इति तन्निरासायैव सीमन्तकमति। एतत्सर्वं व्यक्तीकृत-माश्वलायनेन[6]। मार्कण्डेयपुराणेऽपि गर्भिण्या गर्भं रुधिरं च पातुमुल्कानां

---

(१) कालविधाने-सिंहाली वर्जयित्वा शुभफलवहुला राशयोऽप्यंशकानि श्रेष्ठानीति। अलिर्वृश्चिकः। सिंहाली त्यक्त्वाऽन्ये दश राशयस्तदंशाश्च शुभग्रहैर्दृष्टायुक्ताश्च श्रेष्ठाः। (सं० प्र० पृ० १७६)

(२) कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः इति वृहस्पतिवचनम्। (सं० र० मा० पृ० ८२२)

(३) सं० प्र० पृ० १७७, सं० र० मा० पृ० ८२३

(४) पा० गृ० ग० भा० १/१५, सं० प्र० पृ० १७७, सं० म० पृ० २१

(५) सं० म० पृ० २१।

(६) पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः।
आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः॥
तासां निरसनार्थाय श्रियमावाहयेत् पतिः।
सीमन्तकरणी लक्ष्मीस्तामावहति मन्त्रतः॥
श्रिया श्रितशरीरत्वात् तां त्यजन्तीह मोहिताः।
अलक्ष्म्यो दुर्भगाः क्रूराः राक्षस्यः पिशिताशनाः॥
गृष्टयः सम्प्रगृह्यन्ते पीड्यन्ते च विशेषतः॥
कासाञ्चित्तादृशी वृत्तिर्ब्रह्मणा विहिता पुरा॥
तस्मात्प्रथमगर्भस्य सीमन्ताख्यो विधीयते॥ एतान्याश्वलायन वचनानि सं० प्रकाशे समुद्धृतानि, पृ० १७२-७३।

पिशाचिनीनां राक्षसीनां च निवृत्यर्थं सीमन्तकर्मोदितम्[1]। प्रेतपिशाचादीनातङ्कयितुकामेन पत्या पत्न्याः शिरसि रक्ताङ्को निर्मातव्य इति वा०[2] होक्त्यापि समर्थ्यंत एवैतत्सर्वम्। एतच्च बीजगर्भसमुद्भवैनशमनातिरिक्तमेवेति ज्ञेयम्[3]।

## सीमन्तभोजने प्रायश्चित्तम्—

सीमन्तभोजने चान्द्रायणात्मकं प्रायश्चित्तमुक्तं धौम्येन ऋषिणा[4]। तत्र सीमन्तभोजनं नाम सीमन्तकर्मानुष्ठानदिने तद्गृहे भोक्तुः प्रायश्चित्तमिति पारिजातोक्तम्[5]। तच्चायुक्तम्, ब्रह्मौदनाङ्गभोजनमिव सीमन्ताङ्गभोजनस्यैव साहचर्य[6] प्राप्तत्वात्। धौम्यवचने निर्दिष्टं ब्रह्मौदनं हि अग्न्याधानाङ्गभूतमेव ग्राह्यमिति मयूखे। संस्काररत्नमालाकृतस्तु प्राहुः-सीमन्तोन्नयनादिषु यथा केवलभोजनार्थं प्रवृत्तं प्रति प्रायश्चित्तविधानं तत्सदृशं केवल ब्रह्मौदनभोजनार्थं प्रवृत्तं प्रति एवेदमपि प्रायश्चित्तमित्येव वक्तव्यम्, अन्यथा वैरूप्यापत्तेः। अतो ब्रह्मौदनमावश्यलायनोक्तोपनयनसम्बद्धमेव ग्राह्यम्। अग्न्याधानाद्यङ्गभूतब्रह्मौदनं तु न तथेति[7]।

---

(१) गर्भस्त्रीणां तथान्यस्तु कललाशो सुदारुणः।
अस्य रक्षा सदा कार्या नित्यं शौचनिषेवणात्॥ इति (मार्कण्डेय पुराणवाक्यं सं० प्रकाशे, पृ० १८१)

(२) अथास्याः पञ्चमे षष्ठे सप्तमे वा गर्भमासे मांगल्यैः स्नापयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात् स्विष्टकृतः रक्ताङ्कं निधाय सीमन्ते करोति॥ (वा० गृ० ९/४-७)

(३) एवमेनं शमं याति बीजगर्भसमुद्भवम्॥ (या० स्मृ० १/१४)
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ (म० स्मृ० २/२७)

(४) "सीमन्ते च भोक्तुर्दोषमाह धर्मप्रकाशे धौम्यः—
ब्रह्मौदने च सोमे च सीमन्तोन्नयनेऽथवा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्॥ इति।"
(सं० म० पृ० २१)

(५) सं० र० म० पृ० ८२३ (इदम् च रत्नमालायामपि समुद्धृतम्, पृ० ८२३)

(६) सं० म० पृ० २१

(७) सं० र० मा० पृ० ८२३

पूर्वोक्तं चान्द्रायणं हि ज्ञानपूर्वके भोजने एव। अज्ञानात्तु भोजने कृते ऋग्विधानोक्तमेव प्रायश्चित्तमिति रत्नमालायामेव। तद्यथा–

अरा इवेज्जपेन्मन्त्रं शतवारं शिवालये।
सीमन्ते च यदा भुंक्ते मुच्यते किल्विषात्ततः[१] ॥ इति।

उक्तं हि प्रायश्चित्तं कर्माङ्गब्राह्मणभोजनविषयं नत्विष्टकुटुम्बादि-भोजनविषयमिति मुरारिमिश्रा आहुः।

## पतिकर्तव्यम्--

अत्रैव प्रसंगात् पत्युः कर्तव्यमपि किञ्चिदुच्यते यथाशास्त्रम्। तत्र गर्भिण्या यदीप्सितं तद् यथाशक्ति पूरयेत् पूरयितुं वा प्रयतेत पतिः। इतरथा हि गर्भो दुष्यति इति याज्ञवल्क्यादिभिः[२] स्पष्टमेवोक्तम्। सप्तमाच्च मासात् प्रभृति मैथुनमपि न कार्यम्। केशच्छेदनम्, तीर्थयात्रा, श्राद्धं च न कार्यम्[३] एवमेव क्षौरं शवानुगमनं नखनिकृन्तनं युद्धं वास्तुकरणम् अतिदूरयानम् अम्बुधिस्नानमित्याद्यपि नैव कार्यम्[४]। परन्तु अयं निषेधो नैमित्तिके क्षौर-कर्मादौ न प्रसज्यते, स्मृत्यन्तरे तथोक्तेः[५]।

तत्र सुखप्रसवार्थं सोष्यन्तीहोममपि कुर्याद् गर्भिणीपतिः यथाशास्त्रम्।

---

(१) सं० र० मा० पृ० ८२३

(२) दोहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात्।
वैरूप्यं निधनं वापि तस्मात् कार्यं प्रियं स्त्रियाः॥ (या० स्मृ० ३ ८९)

(३) आश्वलायनः--वपनं मैथुनं तीर्थं वर्जयेद् गर्भिणीपतिः।
श्राद्धन्तु सप्तमान्मासादूर्ध्वं चान्यत्तु वेदवित्॥

हारीतः— क्षौरं च तीर्थयात्रां च श्राद्धभोजनमेव च।
मासान्तु सप्तमादूर्ध्वं वर्जयेद् गर्भिणीपतिः॥
(सं० प्र० पृ० १८२-८३)

(४) कालविधाने–

क्षौरं शवानुगमनं नखकृन्तनं च युद्धं च वास्तुकरणन्त्वथ दूरयानम्।
उद्वाहमम्बुधिजलस्पृशनोपयोगमायुः क्षयो भवति गर्भिणिकापतीनाम्॥
(सं० प्र० पृ० १८३)

(५) क्षौरं नैमित्तिकं कुर्यात् निषेधे सत्यपि ध्रुवम्।
पित्रोः प्रेतविधानं च गर्भिणीपतिराचरेत्॥ (सं० प्र० पृ० १८४)

इदं च कर्म गोभिलादिभिर्गृह्यसूत्रकारैः स्पष्टं वर्णितम्। एतेन कर्मणा कृतेन स्त्री सुखेन शिशुं प्रसूते। अत एतत् कर्मावश्यं करणीयम् गर्भिणीपतिना।

## जातकर्म

अस्य शब्दस्यार्थः—जातस्य कर्म संकारो जातकर्म, मुखदर्शनादेः पितृसंस्कारत्वेन जातसंस्कारत्वाभावात्, जातः कर्म संस्कारो यस्मिन्निति वा योगोऽतिप्रसङ्गवारणायादरणीय इति केचित्, तदनादरणीयमेव, यथा हि यजति सामानाधिकरण्यात् खनितात्र्यतिप्रसक्तयोगीऽप्युद्भिच्छब्दः कर्मनामधेयम् तद्वदयमपि कर्मसामानाधिकरण्यादेवाव्यूनानतिप्रसक्तार्थक ऐवेति जाते कर्म इत्येव व्युत्पत्तिरादरणीया[२]। अत एव च याज्ञवल्क्यव्याख्यायां मिताक्षरायां विज्ञानेश्वरेण "मास्येते जातकर्म च" इत्यस्य व्याख्यानान्तरम् 'यद्वा एते आ इते आगते गर्भकोशाज्जाते कुमारे जातकर्म' इत्युपन्यस्तम्[३]।

जातकर्मसंस्कारस्य ऋग्वेदे न चर्चापि दृश्यते। परन्तु अथर्ववेदे सुखप्रसवार्थं प्रार्थना दृश्यते—

वषट् ते पूषन्नस्मिन्त्सूतावर्यमां होता कृणोतु वेधाः।
सिस्रतां नार्यृतप्रजाता विपर्वाणि जिहतां सूतवा उ॥
चतस्रो दिवः प्रदिशश्चतस्रो भूम्या उत।
देवा गर्भं समैरयन् तं व्यूर्णुवन्तु सूतवे॥
सूषा व्यूर्णोतु वि योनिं हापयामसि।
श्रथया सूषणे त्वमव त्वं विष्कले सृज॥
नेव मांसे न पिवसि नेव मज्जस्वाहतम्।
अवैतु पृश्नि शेवलं शुने जयाटवत्तवे व जरायु पद्यताम्।
विते भिनद्मि मेहनं वि योनिं वि गवीनिके।
वि मातरं च पुत्रं च वि कुमारं जरायुणाव जरायु पद्यताम्।
यथावातो यथा मनो यथा पतन्ति पक्षिणः।
एवा त्वं दशमास्य साकं जरायुणा पताव जरायु पद्यताम्[४]॥

---

(१) गो॰ गृ॰ २/७/१३-१४, पा॰ गृ॰ १/१६
एतच्च कर्म तदा कार्यं यदा पत्नी प्रसवशूलवती स्यात्। अतएव पारस्करव्याख्यायामेवमेवाहुः सर्वेपि भाष्यकाराः।

(२) सं॰ प्र॰ पृ॰ १८७

(३) मिताक्षरा १/११

(४) अथर्ववेदः १/११

अस्मिन् अथर्वसूक्ते सुखप्रसवार्थं कामना वर्णिता विद्यते स्पष्टमेव। एतत्सूक्तानुसारेण केचन जातकर्मणः समुल्लेखं मन्यन्ते[1]ऽत्र सूक्ते। परं वयमेतन्मतं न रोचयामहे,

जातकर्मकालः—

इदं च कर्म नाभिच्छेदनात् प्रागेव जन्मदिने कार्यम्, इति मनुः—

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते[3]। इति।

आश्वलायनेऽप्येवमेवाह—

प्राङ् नाभिकर्त्तनात् कार्या जातकर्मक्रिया द्विजैः[3]। इति।

पारस्करादयोप्येवमेवाहुः[4]। केचित्तु स्तनप्राशनात् प्राक् जात कर्मानुष्ठानमनुमन्यन्ते[5]। अपरे पुनराचार्याः गृह्यसूत्रकृतः समाहरन्ति नाभिच्छेदनं

(१) हिन्दू-संस्कार पृ० ५०

(२) म० स्मृ २/२९ वर्धनमत्र छेदनम् इति मेधातिथ्यादयः।

(३) सं० प्र० पृ० १९२

(४) जातस्य कुमारस्याच्छिन्नायां नाड्यां.......करोति। (पा० गृ० १/१६)

प्राङ् नाभिच्छेदनात् संस्कारः-हारीतः। (सं० र० मा० पृ० ८३१)

जातस्य कुमारस्याच्छिन्नायां नाड्यां.........प्राशयति-बैजवापः। (सं० प्र० पृ० १९३) यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।

छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते। इति जैमिनिः। (पा० गृ० ग० भा० १/१६, सं० र० मा० पृ० ८३०)

कुमारप्रसवे नाड्यामच्छिन्नायां गुडतिलहिरण्यवस्त्रगोधान्यप्रतिग्रहेष्वदोषस्तदहस्त्वेके कुर्वते शङ्खः। (पा० गृ० ग० भा० १,१६)

अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः।
संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्तितम्॥ इति विष्णुधर्मोत्तरे।
(पा० गृ० ग० भा० १/१६)

(५) कुमारे जाते जातकर्म प्राक्स्तनपानात्—इति जैमिनिगृह्यसूत्रम् १/८ (इदं च स्तनपानम् प्रथममेव अत्राभिप्रेतम्, अन्यथा एतद्विधेनैरर्थक्यमेव स्यात्। तथा च प्राक् प्रथमस्तनपानात् कृतस्यास्य संस्कारस्य अदृष्टफलकत्वमेव शास्त्रप्रामाण्यादवसीयते, दृष्टफलकत्वासम्भवात्। न हि प्राक् पश्चाद्वा स्तनपानात् कृतस्य जातकर्मसंस्कारस्य दृष्टं किमपि फलमुपलभ्यते। यथा च फलवतो दृष्ट फलाभावे दृष्टं फलं सिध्यत्येव किमपीति विज्ञेयम्।)

स्तनप्राशनं चाभिनिर्वर्त्तयितुमेतत् कर्म पूर्वविधित्वेन[1]। तत्र नाभिच्छेदनात् पश्चात् स्तनप्राशनात् प्राक् जातकर्मणोऽनुष्ठानस्य गौणः काल इति प्रकाशकृतः प्राहुः[2]।

अस्यानुष्ठाने सूतकं नानुष्ठातुः सम्भवति, शास्त्रप्रामाण्यात्। तथा च जैमिनिः—

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते[3]॥ इति।

तथा च नालच्छेदनात् पूर्वं पितुः सूतकाभावः[4]। अत्र च जननिमित्तस्य सूतकस्य केवलमभावः किम्वा सूतकमाशौचोपलक्षणमिति मरणनिमित्ताशौचस्यापीत्यत्र धर्मशास्त्रकाराणां विमतिः। केचनोभयविधाशौचाभावं जातकर्माद्यनुष्ठाने मन्यन्ते,[5] अपरे पुनः केवलं अस्मिन् सूक्ते केवलं सुखप्रसवार्थं गृह्य-

---

(१) यदास्मै कुमारं जातमाचक्षीरन् अथ ब्रूयात् कांक्षत नाकृन्तनेन स्तनप्रतिधानेन चेति। [गौ० गृ० २/७/१६]
प्राङ्नाभिकृन्तनात् स्तनदानाच्च—इति छन्दोग० खादिरद्राह्यायणगृह्यसूत्रेषु। [गोद गृ० टि० पृ० ४००]
जातमात्रकुमारस्य जातकर्म विधीयते।
स्तनप्राशनतः पूर्वं नाभिकर्त्तनतोऽपि वा॥ इति गर्गः। (सं० म० पृ० २३, [सं० प्र० पृ० ११३]

(२) [सं० प्र० पृ० १९३]

(३) [सं० र० मा० पृ० ८३०, सं० प्र० पृ० १९६]

(४) सूतके तु मुखं दृष्ट्वा जातस्य जमकस्ततः।
कृत्वा सचैलं स्नानं तु शुद्धो भवतितत्क्षणात्॥ इति ब्रह्मपुराणम्। [सं० प्र० १९५]

(५) एतच्च जननाशौचे मरणाशौचेऽपि कार्यमित्याह प्रजापतिः—
आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात् कालिकी शुद्धिः पूर्वशौचेन शुध्यति॥ इति। मदनपारिजाते—[पा० ग्र० ग० भा० १/१६]
आशौचान्तरेऽपि पुत्रे जाते तात्कालिकीं शुद्धिमाहेत्युक्त्वा उक्तमेव प्रजापतिवचनं प्रथमपादे आशौचेत्यस्यस्य स्थाने सूतके इति पाठान्तरेण मयुखकृदप्युदाहरति। (सं० म० पृ० २२)

सूत्रादौ[1] निर्दिष्टस्य 'सोष्यन्ती' होमस्य समुल्लेखो मन्तुं शक्यते, जातकर्मसंस्कारश्च लेशतोपि नात्र संकेतित इत्येवास्मभ्यं रोचते। सोष्यन्तीहोमश्च गोभिलेन स्पष्ट एवोक्तः—

"अथ सोष्यन्तीहोमः—प्रतिष्ठिते वस्तौ परिस्तीर्याग्निमाज्याहुती जुहोति या तिरश्चीत्येतयर्चा विपश्चित् पुच्छममरदिति[2] च" इति वाक्येन। "सोष्यन्तीमद्भिरभ्युक्षति"[3] इत्यादिना पारस्करेणापि दर्शितोऽयं विधिः। अत्रैव प्रसंगे अवरापतनार्थं यो मन्त्रो[4] विनियुक्तः पारस्करेण तस्य प्रायेण साम्यमेव उक्तार्थसूक्तस्य चतुर्थमन्त्रेणेति नायमथर्ववेदस्यो भागः कथञ्चिदपि जातकर्मसम्बद्धो मन्तुं शक्यते। जननाशौचमध्ये एवाशुद्ध्यभावमभि-

---

(१) प्रतिष्ठिते वस्तौ सोष्यन्ती होमः। या तिरश्चीति द्वाभ्याम्। असाविति नाम दध्यात्॥ (खा० गृ० २/२/२९-३१)
अथ सोष्यन्तीसवनम्। विजनिष्यमाणाया अद्भिः पाणिं स्रवन्तं शिरस्याधाय आहृदयादभिमृशेत्॥ (का० गृ० ५/१)
क्षिप्रं सुवनम्। अनाभिहितेन शरावेणानुसीतसमुदकमाहृत्य पत्तस्तूयन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेणऽयजुषा भिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत्॥ आपस्तम्बगृह्यसूत्रम् (५/१४/१३-१४)

(२) (गो० गृ० १/७/१२-१४ (अत्र वस्तिर्योनिद्वारमिति नारायणभाष्यम्)

(३) (पा० गृ० १/१५/१)

(४) अवैतु पृश्निशेवलं शुने जराय्वत्तवे। नैव मांसेन पीवरीं न कस्मिंश्चनायतनमव जरायुपद्यताम्॥ (पा० गृ० १/१५/३ तु नेव मांसे न पीवसि नेव मज्जस्वाहतम्। अवैतु पृश्निशेवलं शुने जराय्वत्तवे व जरायु पद्यताम्। (अ० वे० १/११/४)
यदि त्वयं मन्त्रो जातकर्मप्राक्कालीनसोष्यन्तीहोमविनियुक्तत्वात् जातकर्म-सूचकः कथञ्चिदभ्युगम्यते तर्हि नास्माकं विप्रतिपत्तिः, परन्तु साक्षात् त्वत्र जातकर्माङ्गतानास्त्येवेति सुस्पष्टमेव दृश्यतेऽस्माभिः।

प्रयन्ति[1]। अनयोरन्त्य एव पक्षः श्रेयानित्यधिगम एव युक्तः। अत एव संस्कारतत्त्वोद्धृतादित्यपुराणवाक्येऽपि[2] तथैवोक्तं संगच्छते। सूतकशब्दस्य जननाशौचमात्रपरत्वस्यौचित्याच्चायमेव पक्षो युक्ततर इत्येव व्यवस्था-

---

(१) अथ अशौचमध्ये पुत्रजन्मनि जातकर्मनिर्णयः। तत्र प्रजापतिः—

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्तुस्तात्कलिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति॥ इति।

अशौचे तु समुत्पन्ने इत्यस्मिन्नपि पाठे अशौचपदं सूत्याशौचपरमेव व्याख्येयम्। तथा च—
जातूकर्ण्यः

जाताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
जननानन्तरं कुर्याज्जातकर्म यथाविधि॥
जातेष्टिः सूतकान्ते तु कर्त्तव्येति विनिश्चयः।

जननाशौचपदं नाशौचमात्रपरम्।

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
आशौचापगमे कार्यम् जातकर्म यथाविधि॥ इति तस्यैव स्मरणात्। [सं० प्र० पृ० २०१]

एतच्च जातकर्माशौचान्तरमध्येऽपि कार्यम्। यथाह प्रजापतिः—

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन सिध्यति॥ इति। एतच्च जाताशौचापरम्।

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
अशौचापगमे कार्यं जातकर्म यथाविधि॥ इति मृताशौचविषय एवोत्कर्षोक्तेः। एतेन स्मृत्यर्थसारोक्तो विकल्पोऽपि व्यवस्थितो ज्ञेयः इति संस्काररत्नमालाकृतः, [पृ० ८३०] केचित्तु—

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
आशौचापगमे कार्यं जातकर्म यथाविधि॥ इति स्मृतिसंग्रहकारोक्तेराशौचान्ते कार्यमित्याहुः। स्मृत्यर्थसारेऽपि विकल्प उक्त इति च पारस्करभाष्ये गदाधरोप्याह, [पा० गृ० ग० भा० १/१६]

(२) सूतके तु मुख दृष्ट्वा जातस्य जनकस्तवः।
कृत्वा सचैलं स्नानन्तु शुद्धो भवति तत्क्षणात्॥ [सं० त० पृ० ५०७]
इदमेव वचनं सं० प्रकाशे ब्रह्मपुराणस्थत्वेन संगृहीतं, [पृ० १९५]

ऽस्माभ्यो रोचते। अत एव "यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्"[1] इति जैमिनिवाक्यमपि साधूपपन्नं भवति इत्यलमतिनिर्बन्धेन।

यदि तु कथञ्चिन्नालच्छेदनात् पूर्वविरहेऽपि मरणाशौचस्य जातकर्म-संस्कारो नानुष्ठितस्तर्हि पूर्वोक्तजैमिन्यादिवाक्यप्रामाण्येन पितुः सूतकाक्रान्त-तया तदपगमे एव जातकर्मानुष्ठेयमिति[2] व्यवस्था विज्ञेया। सूतकन्तु जन्मप्र-युक्तं पित्रोर्दशाहपर्यन्तमेव। यद्यपि संवर्त्तोक्त्या[3] आदित्यपुराणस्थवाक्येन

---

(१) [पा० गृ० गं० भा० १/१६, सं० र० मा० पृ० ८३०, सं० प्र० १९९, सं० म० पृ० २२]

अत्र मयूखसन्दर्भो द्रष्टव्यः—

संवर्त्तः—माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः।

जैमिनिः—यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।

छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते॥ इति। अस्मा-न्नालच्छेदोत्तरमेवाशौचप्रवृत्तिरिति भाति। प्राञ्चस्तु 'यावन्न छिद्यते नालं तावच्छिशुमृतौ पूर्णं सूतकं नाप्नोति। नालच्छेदोत्तरं तु शिशुमृतौ सम्पूर्णं प्राप्नोति' इति व्याचख्युः। युक्तं चेदम्। अशौचं जननोत्तरमेव प्रवर्त्तते। जातकर्मवृद्धिश्राद्धादौ तु तात्कालिकी शुद्धिर्वचनेन बोध्यते। [सं० म० पृ० २२]

(२) जाबालिबैजवापौ—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि।
दैवादतीतकालं चेदतीते सूतके भवेत्॥ इति।

विष्णुधर्मोत्तरेऽपि—

अच्छिन्ननाभ्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
आशौचोपरमे कार्यमथवा नियतात्मनिः।

वशिष्ठोऽपि—

यस्मिन्मुहूर्ते जनितः कुमारस्तस्मिन् विधेयं खलु जातकर्म।
विनिर्गमे वाऽप्यथ सूतकस्य तस्मिन्दिने तस्य च नामधेयम्॥

[सं० प्र० पृ० २००]

अत्र प्रथमो हेमाद्रितो गदाधरेण (पा० गृ० ग० भा० १/१६ प्रथमद्वितीयौ च सं० र० मा० पृ० ८३१ समुद्धृतौ इति ज्ञेयम्)।

(३) माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥ [सं० प्र० पृ० १९८,] [सं० प्र० पृ० २२]

च पितुः सचैलस्नानमात्रेण शुद्धेरुदिता तथापि सा शुद्धिः [1]जातकर्मवृद्धिश्राद्धाद्युपयोगिनी तात्कालिकी शुद्धिरेव न तु सूतकापगम इति स्पष्टमेव प्रजापति-[2]वचनात् प्रतिपत्तिः भवति, अतएव बौधायनादिभिर्दशाहपर्यन्तमेव[3] मातापित्रोरुभयोरेव आशौचमुक्तम्। तस्मादकृते कथञ्चिज्जातकर्मणि प्राङ्नाभिच्छेदनात् दशाहादूर्ध्वमेव एकादशेऽहनि जातकर्म कार्यमित्येव युक्तः पक्षः। अत एव नामधेयप्रसङ्गे मनुटीकायां[4] दशाहमाशौचं शङ्खवचनोद्धरणेनोक्तम्।

अत्रैके मातुरेवाशौचं[5] कल्पयन्ति, तदसृग्दर्शनात्। अत एव याज्ञवल्क्यः सूतकं मातुरेव हि।

पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनात् ध्रुवम्[6] ॥ इति।

मनुरपि—

सर्वेषां शावमाशौचम् मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः[7] ॥ इति।

---

(१) सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।
कृत्वा सचैलं स्नानन्तु शुद्धो भवति तत्क्षणात् ॥ इत्यादित्यपुराणवाक्यमिति संस्कारतत्वे रघुनन्दनः, इदमेव ब्रह्मपुराणवाक्यतया संस्कारप्रकाशेऽप्युद्धृतम्, [पृ० १८८]

(२) सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ इति मिताक्षरोद्धृत पितामहवचनमिति संस्कारतत्वे रघुनन्दनः। मयूखेऽपि ( पृ० २२ ) तृतीयपादान्तं वचनमिदमुपन्यस्तम् प्रजापतिकृतत्वेन। संस्कारप्रकाशे च यद्यपि 'पूर्वाशौचेन शुध्यति' इति चतुर्थः पाद उपात्तस्तथापि तात्कालिकी शुद्धिरित्यत्राविवाद एव। प्रथमपादे कियता पाठभेदेन इदमेव वचनं समुपन्यस्तं गदाधरेणापि पारस्करभाष्ये।

(३) जनने तावन्मातापित्रोर्दशाहमाशौचम्—[बौ० गृ०]

(४) 'अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते' इति शङ्खवचनाद्दशमेऽहन्यतीते एकादशाह इति व्याख्येयम्।—[मन्वर्थमुक्तावली २/३०]

(५) मातुरित्येके तत्परिहरणात्—( बौ० गृ० सं० प्र० पृ० १६० )

(६) या० स्मृ० [३/१८-१९]

(७) म० स्मृ० [५/६२]

अत एव च वसिष्ठोऽपि—

नाशौचं विद्यते पुंसः संसर्गं चेन्न सूतकम्।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते[1] ॥ इति।

अपरे पुनः पितुरेवाशौचमित्यपि प्रतिपन्नाः, शुक्रस्य प्राधा[2]न्यात्। उभयोराशौचमिति तु युक्तमुत्पश्यामः। अत एव "मातापित्रोरेव तु संसर्गसाम्या" दित्याह बौधायनोऽपि[3]। अत एव मनुनापि—

यथेदं शावमाशौचं सपिण्डेषु विधीयते।
जननेप्येवमेव स्यात् निपुणं शुद्धिमिच्छताम् ॥[4] इति,

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य[5] जन्म च इति च सामान्येनातिदेश उक्तः। याज्ञवल्क्योऽपि—

तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात्[6] ॥ इति वदन् पितुरपि सूतकाशौचभागित्वं स्वीकरोत्यर्थतः। तदहर्मात्रमाशौचाभावस्तु तस्याशौचस्य पुत्रजन्मदिवसे पितुर्दानाद्यधिकाराभावासाधकत्वप्रयुक्त एवौपचारिक इति युक्तम्। अत एव 'यस्मिन्दिवसे कुमारजननं तदहर्न प्रदुष्येत। तन्निमित्तदानाद्यधिकारापहारकृन्न भवतीत्यर्थः' इति मिताक्षरापि[7] संगच्छते। अपरार्कस्तु प्रकृते स्पष्टतर[8] एव। युक्तं चैतत् 'तात्कालिकी शुद्धिः' इत्यादि प्रामा-

(१) व० स्मृ० [२/२३]
(२) पितुरित्यन्ये, शुक्रस्य प्राधान्यात्-( बौ० गृ० सं० प्र० पृ० १९० )
(३) मातापित्रोरेव तु संसर्गसाम्यात्—( बौ० गृ० सं० प्र० पृ० १९०)
(४) म० स्मृ० [५/६१]
(५) म० स्मृ० [५/७७]
(६) [या० स्मृ० ३/१९,] अत्रापरार्के शङ्खलिखितौ—
पिता पितामहश्चैव तथैव प्रपितामहः।
भूयस्तश्चैव जायन्ते तदहर्वंदयन्ति च ॥
तस्मात्स दिवसः पुण्यः पितृणामभिवर्धनः ॥ इति।
(७) मिताक्षरा [३/१९]
(८) अत्र च—सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ इत्येवमादीन्यस्पृश्यतालक्षणाशौचविषयाणि, न पुनरनधिकारलक्षणाशौचविषयाणि, तस्य सर्वसपिण्डविषयत्वेन—दशाहं शावमाशौचं सपिण्डेषु विधीयते।
जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥ इति मनुना ( ५/६१ ) विहितत्वात्। अपरार्कः (३/११)

भयात्। तथा च उभयोरेव सूतकाशौचम्, वचनप्रामाण्यात्पुनः पितुर्दानाद्यधिकारानपहारो जन्मदिने इति स्थितम्॥

तच्च सूतकापगमकालिकं जातकर्म एकादशाहविहितं तदहर्विहितनामकरणात् पूर्वमेवानुष्ठेयम् इति गर्गाचार्याः[1]। अत एव—

एष्वतीतेषु कालेषु शुभयोगे शुभोदये।
जातकर्मक्रियां कुर्यात् पितायुः परिवृद्धये[2] ॥ इति गर्गवचनानुसारेणापिनाभिच्छेदपूर्वकालस्तनप्राशनपूर्वकालाशौचानन्तरकालातिपातेषु सत्सु शुभयोगे विधीयमानं जातकर्म नामकरणात् पूर्वमेव कार्यम्। तथाचैवं जातकर्मानुष्ठाने कर्त्तव्ये सति नामकरणमपि एकादशाहादौ न करणीयमेवापि तु जातकर्मानुष्ठानानन्तरमेव शुभे कालादाविति निष्कर्षोऽपि ज्ञेय एव। अतएव पारस्करभाष्ये गदाधरेणापि बृहस्पतिवचनोद्धरणपुरस्सरं तथैव व्याख्यातम्। अत्र नक्षत्रादीन्याह संस्काररत्नमालायां वसिष्ठः[4]—

मृदुध्रुवाक्षिप्रचरेषु भषु चारिक्तपर्वाख्यदिनेषु कार्यम्।
शुभग्रहाणां दिनवर्गलग्ने तज्जातकर्म त्वथ नामकर्म॥ इति।

अत्र मृद्वादिनक्षत्राण्याह श्रीधरः—

रोहिण्युत्तरभं स्थिरं (ध्रुवं) गिरिशमूलैन्द्रोरगा दारुणम।
क्षिप्रं चाश्विदिनेशपुष्यमनलैन्द्राग्नं तु साधारणम्।
उग्रं पूर्वमथान्तकं मृदु मृगत्वाष्ट्रान्त्यमैत्रं चरं
विष्णुस्वातिशतोडुवस्वदितयः कुर्युः स्वसंज्ञाफलम्॥ इति।

उत्तरशब्देनोत्तरात्रयम्। गिरिशम् आर्द्रा। ऐन्द्रं ज्येष्ठा। उरगमाश्लेषा। अश्विनावश्विनी। दिनेशो हस्तः। अनलः कृत्तिकाः। ऐन्द्राग्नं विशाखे। पूर्वशब्देन पूर्वात्रयम्। अन्तकं भरणी त्वाष्ट्रं चित्रा। अन्त्य रेवती। मैत्रमनुराधाः। शतोडु शततारानक्षत्रम्। वसु धनिष्ठाः। अदितिः पुनर्वसु।

---

(१) जन्मनोऽनन्तरं तु स्याज्जातकर्म यथाविधि।
सूतकानन्तरं कुर्यान्नामनिर्देशनादधः॥ इति गर्गः–(सं० प्र० पृ० २००)

(२) स० प्र० (पृ० २०१)

(३) अत्र जातकर्मनामकर्मादावुक्तकालातिक्रमे नक्षत्रादिकं ज्ञेयम्। तथा
मुख्यालाभे विधिज्ञेन विधिश्चिन्त्यः प्रमाणतः।
नक्षत्रतिथिलग्नानां विचार्यैवं पुनः पुनः॥ इति। [पा० गृ० ग० भा० १/१६]

(४) सं० र० मा० [पृ० ८३३]।

जातकर्मसंस्कारश्चाधिमासेऽपि कार्य एव । अत एव कालादर्शेऽधिमासे कर्तव्यानि प्रकृत्योक्तम् ।

सीमन्ते पुंसवे श्राद्धं द्वावेतौ जातकर्म च ॥ इति अत्र द्वावेताविति सीमन्तपुंसवने उक्ते । एतदेव यमेनाप्युक्तम् । तथा च संस्काररत्नमालायां यमः—

गर्भे वार्धुषिके भृत्के श्राद्धकर्मणि मासिके ।
सपिन्डीकरणे नित्ये जातनामादिकर्मसु ॥
सीमन्ते पुंसवे चैव नाधिमासं विवर्जयेत् ॥ इति ।

गर्भे गर्भाधाने । वार्धुषिके प्रयुक्तद्रव्यादाने । भृत्ये सेवा प्रयुक्तधनग्रहणे । तदेतत् मुख्यकाले जातकर्मानुष्ठाने सति ज्ञेयम् । यदि तु कथञ्चित् मुख्यकालातिक्रमे जाते जातकर्म कर्तव्यं भवेत्तर्हि तु नाधिमासे तदनुष्ठेयम् । तथा च संस्काररत्नमालायां कश्यवचनधर्मशासनम्[1]—

नामकर्म च दर्शोष्टि यथाकालं समाचरेत् ।
अतियाते सति तयोः प्रशस्ते मासि पुष्यभे ॥ इति ।

अत्र च—

उत्सवेषु च सर्वेषु सीमन्तऋतुजन्मनोः ।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ॥ इति ज्योतिनिबन्धे भृगूक्तेगुरु शुक्रास्तदोषोऽपि नेत्यपि तत्रैवोक्तम्[1] ।

## जातकर्म पुत्रमात्रस्यापत्यमात्रस्य वा

इदं च जातकर्म पुत्रमात्रस्य स्त्रीपुंनपुंसकानामविशेषेण वेति विवेचनीयम् । तत्र प्रायेण सर्वत्रैव पुत्रकुमारादिपदप्रयोगात् पुंमात्रस्येत्येकः पक्षः । तथाहि संस्काररत्नमालादौ संवर्त्तः—

पुत्रे जाते पिता सद्यः सचैलं स्नानमाचरेत् ॥ इति । पारस्करभाष्ये हेमाद्रिः[2]—

यावत्कालं सुते जाते न नाडी छिद्यते नृप ॥ इति ।

कृत्यचिन्तामणौ देवलः—

जाते पुत्रे पिताश्रुत्वा ······॥ इति ।

(१) सं० र० मा० [पृ० ८३४]
(२) पा० गृ० ग० भा० [१/१६]

संस्कारतत्वे गर्गः—

श्रुत्वा वालस्य वै जन्म......

संस्कारप्रकाशा[1]दौ प्रजापतिः—

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ॥ इति ।

पारस्करभा[2]ष्ये स्मृतिसंग्रहोक्तिः—

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।
आशौचापगमे कार्यं जातकर्म यथाविधि ॥

संस्काररत्न[3]मालायां वृहन्नारदीये—

जाते पुत्रे पिता स्नात्वा सचैलं जातकर्म तु ॥ इति ।
जातस्य कुमारस्याच्छिन्नायां नाड्याम्[4]....इति पारस्करः ।
यदाऽस्मै कुमारं जातमाचक्षीरन् इति गोभि[5]लः ।
जातस्य कुमारस्याच्छिन्नायां नाड्याम्[6]....इति वैजवापः ।
कुमारं जातमन्यै रालम्भा[7]त्...इत्याश्वलायनः ।
कुमारे जाते जातकर्म [8]इति जैमिनिगृह्यसूत्रम् ।
कुमारप्रसवे नाभ्यामच्छिन्ना[9]यां....इति शंखः ।
पुत्रं जातमन्वक्षं स्नातं न भातोपहन्यात्[10] इति वाराहगृह्यसूत्रम् ।
जातं कुमारमभिमन्त्र[11]यते....इति वौधायनः ।
जातमात्रकुमारस्य मुखमस्या[12]वलोकयेत् इति वसिष्ठः ।

---

(१) सं० प्र० [पृ० २०१]
(२) पा० गृ० ग० भा० [१/१६]
(३) सं० र० मा० [पृ० ८३१]
(४) पा० गृ० [१/१६/३]
(५) गो० गृ० [२/७/१६]
(६) सं० प्र० [पृ० १९३]
(७) आश्व० गृ० [१/१५/१]
(८) जै० गृ० [१/८]
(९) सं० प्र० [पृ० १९९]
(१०) वा० गृ० [१/३]
(११) वौ० गृ० [१/२/२]
(१२) सं० र० मा० [८३१]

जातमात्रकुमारस्य जातकर्म विधीयते[1] इति गर्गः।

तथा च सर्वत्रैव पुंस्त्वविशिष्टापत्यवाचकशब्दोल्लेखात् पुत्रस्यैवायं संस्कार इति युक्तम्। अत एव मनुना—

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्[2]॥

इत्यनेन पुंस एव जातकर्म प्रतिपादितम्। तत्र पुंसः 'स्त्रीनपुंसकव्यावृत्यर्थम्' इति मेधातिथिरपि स्पष्टमेवाह। पारस्करव्याख्याता कर्कोपाध्यायोऽपि[4]।

अन्येस्त्वविवक्षितं पुमर्थं मन्यन्ते।
'गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥'

इत्युपक्रमेण द्विजानामिति सामान्येन त्रैवर्णिकानां संस्कार्यत्वेन प्रकृतत्वात्। संस्कार्यश्च प्रधानमुद्देशो न च प्रधाने लिङ्गसंख्यादिविशेषणं विवक्ष्यते। ग्रहं सम्मार्ष्टीति सत्यप्येकवचने सर्वग्रहाः संमृज्यन्ते। तथा च—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्[6]॥

इति मनूक्तिः, "तूष्णीमेताः क्रियाः स्त्रीणाम्" इति याज्ञवल्क्योक्तिः, "आवृतैव कुमार्या" इत्याश्वलायनोक्तिः, "एतयैवावृता स्त्रियास्तूष्णीम्" इति गोभिलोक्तिश्च संगच्छते। अतएव च संस्कारप्रकाशोद्धृते—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात्[10]॥

---

(१) सं० प्र० (पृ० ११३)
(२) म० स्मृ० (२/२९)
(३) म० मे० भा० (२/२९)
(४) कुमार ग्रहणाच्च स्त्रिया अतः प्रभृति न क्रियते। पा० गृ० क० भा० (१/१६)
(५) म० स्मृ० (२/२७)
(६) म० स्मृ० (२/६६)
(७) या० स्मृ० (१/१३)
(८) आश्व० गृ० (१/१५/१२)
(९) गो० गृ० (२/८/२१)
(१०) सं० प्र० पृ० (१९५)

इति ब्रह्माण्डपुराणवाक्ये आपस्तम्वगृह्यस्थे च "जातं वात्सेप्रेणाभिमृश्ये" त्यादिवाक्ये अपत्यसामान्यार्थकं जातपदं प्रयुक्तम्। तथा च पुरुषवत् स्त्रिया अपि जातकर्म कार्यम् इत्यागतम्। अयमपरः पक्षः।

इतरे पुनः पुंस्त्वाविवक्षयोक्तयुक्तेः नपुंसकस्यापि जातस्य जातकर्माहुः। प्रमाणयन्ति च ते

'अथ षण्डवधिरमूकानां संस्कारं व्याख्यास्यामः'

इति वौधायनं[1]क्तमुपनयनसंस्कारविधायकं वाक्यम्,

यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथंचन।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति[2] ॥

इति मनुवाक्यं च। नहि पूर्वसंस्कारमन्तरोत्तरसंस्कारानुष्ठानमुपपद्यते। तथा च प्रकाशे देवलः–

"प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्ष तूपनयनार्हो भवति"[3] इति। तथा च जातकर्मादिसंस्काराणां क्रमतल्लोपप्रायश्चित्ताभिधानान्यथानुपपत्त्या पूर्वपूर्वसंस्कृतस्यैवोत्तरोत्तरसंस्कारयोग्यतासिध्यतीति स्त्रीपुंसवत् नपुंसकस्यापि जातस्य जातकर्मेति युक्तम्।

अत्रेदं विवेचनीयम्–किं पुंस्त्वं विवक्षयित्वा पुंमात्रस्य जातकर्म, अविवक्षयित्वा स्त्रीपुंसयोः आहोस्वित्सर्वेषामेव स्त्रीपुंनपुंसकानामिति युक्तम् इति।

अत्र पुंस्त्वाविवक्षया स्त्रीपुंसयोरिति वहवो निवन्धकृतः[4]। अत्रार्थे प्रमाणमपि कार्ष्णाजिनिः—

प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः।
स्नात्वाऽनन्तरमात्मीयान् पितृश्राद्धेन तर्पयेत्[5] ॥ इति।

सर्वत्र सूत्रपुराणेषु स्त्रीपुरुषावेव प्रक्रम्य जातकर्माद्यभिधानेन तज्जन्यैनोनिवर्हणस्य तन्मात्रविषयत्वेन सर्वसाधारण्याभावात्। अन्यथा षण्डोऽप्युपक्रम्येत।

---

(१) वौ० गृ० (२/९/१) (अयं पाठोऽभिमतः संस्कारप्रकाशकृतः। सूत्रे तु जडवधिरेतिपाठः)।
(२) म० स्मृ० (९ २०९)
(३) सं० प्र० (पृ० १९५)
(४) सं० र० मा० (पृ० ८३०,) सं० म० (पृ० २३)
(५) पा० गृ० ग० भा० (१/१६,) सं० र० मा० (पृ० ८३१)

यत्तु ब्रह्मपुराणादिवाक्ये जातपदमपत्यसामान्यार्थकम् तद् वाक्यान्तरैकवाक्यतापन्नतया स्त्रीपुरुषद्वयपरमेव व्याख्येयम्। बौधायनमन्वादिवाक्यमपि पूर्वोपात्तं षण्ढस्य विशिष्य तत् तत् कर्म प्रतिपादयति, न सर्वमविशेषेण, तथा सति सामान्यवाक्येनैव तस्यापि तत्तत्कर्मणोऽपि प्राप्ततया विशेषविधानानर्थक्यात्[1]।

मेधातिथिस्तु[2] पुंस्त्वं विवक्षितमेव मन्यते। तथा हि नायं मनुवचने पुंशब्दो मनुष्यजातिवचनो नरशब्दवद् येन विभक्तिवाच्यं लिङ्गं न विवक्ष्येत। एष हि सर्वत्र स्थावरमूर्तामूर्तगतं लिङ्गविशेषं प्रसवरूपमाचष्टे। प्रातिपदिकार्थो ह्यत्र लिङ्गम्। विभक्तिवाच्यस्य ह्यर्थस्य विवक्षाविवक्षे युज्येते। यतो न विभक्तेवचनमेवैकं प्रयोजनम्, कर्माद्यर्थान्तराभिधानेनाप्यर्थवत्वात्। इह त्वविवक्षायाम् आनर्थक्यमेव प्राप्नोति पुंस्पदस्य। यथा 'ग्रहं संमार्ष्टि' इत्यत्रापि ग्रहप्रातिपदिकार्थो विवक्ष्यते वाक्यानर्थक्यपरिहाराय।

अथोच्येत–न प्रत्ययार्थमात्रस्याविवक्षा। कृत्स्नोपि पदार्थं उद्दिश्यमानविशेषणं न विवक्ष्यते। यथा 'यस्योभयं हविः' इति सत्यप्युभयपदश्रवणे दधिपयसोरन्यतरावृत्तावपि। तदेव प्रायश्चित्तम्। न विवक्षित उभयशब्दः' इति।

अत्रैके परिहारमाहुः–नैतेन समानम्। नहि हविरर्थः पञ्चशरावः। हविर्विनाशे हि नैमित्तिकोऽधिकारः। इह तु माणवकार्था एव संस्काराः। एष त्वप्रयोजको विशेषः। वाक्यभेदभयाद्विशेषणविवक्षा नेष्यते। तादर्थ्येऽपि वाक्यभेदो नापैति। तस्मादयं परिहारः–एतदेवोत्पत्तिवाक्यं जातकर्मणो 'वैदिकैः कर्मभिः' इत्येतदुपक्रमम्, यथा तत्रैव हविः पदं तदानर्थक्यभिया विवक्ष्यत एव।

यद्येवं शूद्रस्यापि प्राप्तिः, जातिविशेषानिर्देशात्? न प्राप्स्यति, मन्त्रसाध्यत्वात्। अथवा द्विजन्मनाम् इति वाक्यशेषको भविष्यति। न च तदानीं विधेयार्थविषयत्वेन निर्दिष्टो येन तत एव संस्कार्यावगतौ पुंस इत्येतत् उभय पदवदविवक्षितमाशंक्येत।

स्त्रीणां त्वप्राप्तेऽपि विधानमुपपद्यते। क्लीवस्यापि दारदर्शनम्। वातरेता यः क्लीव उभयव्यञ्जनो प्रवृत्तेन्द्रियो वा। वहुप्रकारव्यावृत्तिकरं जातकर्मादिसंस्कारकाले अपरिच्छेद्यत्वाच्छक्यप्रतीकारत्वाच्च। न च यो न

(१) सं० प्र० (पृ० १९५)
२) म० मे० भा० (२/२९)

नियतो धर्मः सोऽधिकारं व्यावर्त्तयति, यथा द्रव्यत्वम्; न ह्यद्रव्यत्वं नियतं जातिवत्। य एवाद्रव्यः षण्डस्य वधे पलालभारकशुद्धिः। स ह्यसंस्कृतो नुपनीतः शान्त्यै न कस्यचित्तिष्ठति।

अतः स्थितमेतत्-पुंसामेवैते संस्कारा विधीयन्त एभिर्मन्वादिवाक्यैः। 'अमन्त्रिका[1] तु कर्त्तव्या स्त्रीणामावृदशेषतः' इत्यादिवचनबलाच्च स्त्रीणामप्यमन्त्रकाः। नपुंसकस्य तु नैव सन्तीति[2]।

**अथ यमलयोः जातकर्मक्रमः—**

तत्र युग्मयोर्ज्येष्ठकनिष्ठभाव एव जातकर्मसंस्कारस्य पौर्वापर्ये विनिमगक[3] इति तयोर्ज्येष्ठकनिष्ठभाव एव चिन्त्यन्ते। तत्र मनुः—

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।
यमतोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता[4] ॥ इति।

अस्यायमाशयः—ज्योतिष्टोमे इन्द्रस्याह्वानार्थं सुब्रह्मण्याख्यो मन्त्रः प्रयुज्यते। तत्र प्रथमपुत्रेण पितरमुद्दिश्याह्वानं क्रियते—'अमुकपिता यजते' इत्येवमादिभिः स्मृतम्। तथा च यमयोर्गर्भं एककालं निषिक्तयोरपि जन्मक्रमेणैव ज्येष्ठता मन्तव्येति[5]।

श्रीमद्भागवते तु प्रवेशविपर्ययक्रमेण मातृतः प्रसूतिमुरीकृत्य पश्चादुत्पन्नस्यैव श्रेष्ठत्वमुक्तम्—

यदा विशद्विधा बीजभूतपुष्पं परिक्षरत्।
द्वौ तदा भवतो गर्भौ सूनिर्वेशविपर्ययात् ॥ इति स्मरणात्।

तथा चोक्तम् भागवते[6]—

प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत।
तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः ॥

इत्येन पश्चादुत्पन्नस्य ज्येष्ठत्वम्। अयं च श्लोकः श्रीधरेणव्याख्यात इत्यलम्। यन्नयोर्मध्ये यः स्वदेहात् प्रथमम् अजायत तं यथा हिरण्यकशिपुं प्रजा विदुः

---

(१) म० स्मृ० (२/६६)
(२) सं० प्र० (पृ० १९८–९९)
(३) धर्मप्रकाशे यम;—संस्कारास्तत्र कर्त्तव्यास्तत्क्रमेणैव सर्वदा ॥ इति। सं० र० मा० (पृ० ८२९)
(४) म० स्मृ० (९/१२६)
(५) म० मु० (९/१२६)
(६) श्रीमद्भागवतम् सं० र० मा० (पृ० ५१४)

सादितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवान् इत्यर्थः। प्रमाणितं च पूर्वोक्तं पद्यम्। अत्र देशाचाराद् व्यवस्थेति निबन्धकृतः[1]। पूर्वमेव तु विशेषानुल्लेखे युक्तम्[2]।

यदि तु कथंचित् जन्मपौर्वापर्याज्ञानम् तदा यन्मुखं प्रथमं पश्येत्पिता स एव ज्येष्ठ इति देवलः—

यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्।
सन्तानः पितरश्चैव तस्य ज्येष्ठ्यं प्रतिष्ठितम्[3] ॥ इति।

**अत्र स्नानविधिः—**

पुत्रे जाते संवर्तो हि स्नानमाह पितुः—
जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते[4] ॥ इति।

इदं च स्नानं पुत्रमुखदर्शनानन्तरमेव कार्यम्। तथा च ब्रह्मपुराणाश्वलायन-वचने—

सूतके तु मुखं दृष्टवा जातस्य जनकस्ततः।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात्॥
जातं कुमारं मेवं दृष्ट्वा स्नात्वानीय गुरुन् पिता।
नान्दीश्राद्धावसाने तु जातकर्म समाचरेत्[5] ॥ इति।

अत्र च क्त्वाप्रत्येन स्पष्टमेव मुखदर्शनस्नानयोः पौर्वापर्यमुक्तम्। अत एव च वसिष्ठेन—

जातमात्रकुमारस्य मुखमस्यावलोक्येत्।
पिताऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात्[6] ॥ इत्यनेन तथैव समर्थितम्। एतच्च जातकर्मकालीनानुषङ्गिकमुखदर्शनव्यावृत्यर्थं प्रयुक्तात् मात्रशब्दा-दवगम्यते।

अतएव च ज्योतिर्वसिष्ठेन यदुक्तम् —

---

(१) सं० र० मा० (पृ० ८२९,) नि० सि० (पृ० ५१४)
(२) नि० सि० (पृ० ५१४)
(३) सं० र० मा० (पृ० ८२८,) नि० सि० (पृ० ५१४)
(४) सं० म० (पृ० २२,) पा० गृ० ग० भा० (१/१६)
(५) सं० प्र० (पृ० १८८)
(६) सं० म० (पृ० २२,) सं० प्र० (पृ० १८८,) सं० र० मा० (पृ० ८२३)

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत्[1] ॥ इति तद्दशाहानन्तरं पुत्रजन्मश्रवणाभिप्रायमिति न विरोधः । तथा चाह मनुः—

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः[2] ॥ इति ।

तथा चासन्निधौ श्रवणानन्तरं स्नानम्, सन्निधौ तु मूलाद्यजातस्य मुखदर्शनानन्तरमेव स्नानमिति व्यवस्था बोध्या[3] ।

तच्च स्नानं कथं कुत्र च कर्तव्यमित्यत्राह प्रकाशे ज्योतिर्वशिष्ठः—

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।
उत्तराभिमुखो भूत्वा नद्यां वा देवखातके[4] ॥ इति ।

अत्र उत्तराभिमुख इति विशेषणं प्रवाहाभिमुखत्वादिबाधनार्थम् । इदं च स्नानं शीताद्भिरेव कर्तव्यम् । तथा च मयूखे जाबालिः—

कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव[5] च इति ।

एतच्च स्नानं नैमित्तिकत्वात् रात्रावपि कार्यमेव तथा च व्यासः—

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकन्तु कुर्वीत स्नानं दानं च रात्रिषु[6] ॥ इति ।

वसिष्ठोऽपि—

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यदा निशि[7] ॥ इति ।

अत्रापि व्यासः—

ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति[8] ॥ इति ।

---

(१) सं० र० मा० (पृ० ८२९,) सं० प्र० (पृ० १८८)
(२) म० स्मृ० (५/७७)
(३) सं० र० मा० (पृ० ८२९–३०)
(४) सं० प्र० (पृ० १८९.) सं० र० मा० (पृ० ८२९)
(५) सं० म० (पृ० २२,) सं० प्र० (पृ० १९०)
(६) सं० म० (पृ० २२,) पा० गृ० ग० भा० (१/१६,) सं० प्र० (पृ० १८९,)
(७) सं० र० मा० (पृ० ८३०) सं० प्र० (१८९)
(८) पा० गृ० ग० भा० (१/१६,) सं० म० (पृ० २२)

रात्रौ नद्यादिगमनासम्भवे तु—

दिवा यदाहृतं तोयं कृत्वा स्वर्णयुतं च तत्।
रात्रिस्नाने तु सम्प्राप्ते स्नायादनलसन्निधौ[1] ॥ इति सांख्यायनोक्तो विधिर्ज्ञेयः।

## नान्दीश्राद्धम्—

स्नानान्तरं नान्दीश्राद्धमपि कर्तव्यम्[2]। एतच्च यद्यपि न जातकर्माङ्गभूतम्, शास्त्रे स्पष्टतः तस्य तदानीं प्रतिषेधात्,[3] तथापि पुत्रमुखदर्शननिमित्तकत्वेन विहितस्य तस्य कालार्थं सम्बन्धः[4]। छन्दोगपरिशिष्टटीकाकारस्तु पृथगेव जन्ममुखदर्शनयोर्निमित्तत्वमाह[5]। एवमेव संस्काररत्नमालाकृदपि[6] प्राह।

एतच्च श्राद्धमामान्नेनैव कार्यम्,[7] तदभावे तु हेम्नेति व्यासादयः[8]।

---

(१) सां० प्र० (पृ० १९०,) सं० र० मा० (पृ० ८३०)

(२) कार्णाजिनिः—

प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः।
स्नात्वानन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ॥

सं० र० मा० (पृ० ६३१,) निसि (पृ० ४९९,) पा० गृ० ग० भा० (१/१६)
जातं कुमारं एवं दृष्ट्वा स्नात्वानीय गुरून् पिता।
नान्दीश्राद्धावसाने तु जातकर्म समाचरेत् ॥ इति संस्कारप्रकाशे आश्वलायनः, (पृ० १९१)

(३) नाष्टभासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोमन्तीजातकर्मप्रोषितागतकर्मसु ॥ सं० प्र० (पृ० १९६)

(४) सं० प्र० (पृ० १९१)

(५) सं० प्र० (पृ० १९१)

(६) सं० र० मा० (पृ० ८३१)

(७) स्त्रीशूद्रौ श्वपचश्चैव जातकर्मणि चाप्यथ।
आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ॥ इति प्रचेताः। सं० प्र० (पृ० १९१) सं० म० (पृ० २३)

(८) व्यासः—द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥ सं० प्र० [पृ०१९१]

हेमाद्रिस्तु जातकर्माङ्गभूतं श्राद्धं हेम्नैव कर्तव्यमित्याचष्टे[1]। पक्वान्नेनेदं कदापि न कार्यम्[2]। अत्र च नैमित्तिककाम्यत्वेनामहेमव्यवस्थेति मयूखकृत्[3]। पुरुषार्थे जातश्राद्धे—आमहेम्नोर्विकल्पः। जातकर्माङ्गश्राद्धं तु हेम्नैवेत्येवमविरोधेन व्यवस्थेति तु गोपीनाथदीक्षितप्रभृतयः।[4] अत्र च हेमाद्रिनिर्दिष्टसम्वर्त्तवाक्यानुसारेणोत्तरैव व्यवस्थाऽनुकूलेति वयमभ्युपगच्छामः। एतच्च नान्दीश्राद्धं रात्रावपि कर्तव्यम्, नैमित्तिकत्वात्[5]।

अत्र दानान्यपि प्रशस्तानि[6] शास्त्रे निर्दिष्टानि। तत्र सहिरण्यतिलपूर्णपात्राणां[7] भूगवाश्वादिविविधार्थानां[8] च दानं प्रशस्तम्। एतदपि सति

---

(१) हेमाद्रौ संवर्त्तः—पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्।
न पक्वेन न चामेन कल्याणान्यभिकामयन्।
नि० सि० [पृ० ४९९,] पा० गृ० ग० भा० [१/१६,] सं० म० [पृ० २३,] सं० र० मा० क० [८३१]

(२) सं० प्र० [पृ० १९,] नि० सि० [पृ० ४९९,] सं० र० मा० [पृ० ८३१]

(३) सं० म० [पृ० २३]

(४) सं० र० मा० (पृ० ८३१)

(५) एतच्च रात्रावपि कर्तव्यम्, पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् इति तत्रैव व्यासोक्तेः। नि० सि० (पृ० ४९९,) सं० र० मा० (पृ० ८३१)

(६) गदाधरभाष्ये विष्णुधर्मोत्तरवाक्यम्—
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः।
संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्त्तितम्॥
पा० गृ० ग० भा० [१/१६]

हारीतः—'प्राङ्नाभ्याश्छेदात्संस्कारं पुण्यार्थान् कुर्वन्ति छिन्नायामाशौचम्' संस्कारो जातकर्म। पुण्यार्थान् पुण्यप्रयोजनान् दानादीन्॥ सं० प्र० (पृ० १९९)

(७) हारीतः "जाते कुमारे पितृणामामोदात् पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानावाह्य पितृभ्यः स्वधा कुर्यात् प्रजापतये च" सं० र० मा० (पृ० ८३२)

(८) ब्रह्मपुराणे—
देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥
तत्र दद्यात् सुवर्णं च भूमिं गां तुरगं तथा।
छत्रं छागं च माल्यं च शयनं चासनं गृहम्॥
सं० प्र० (पृ० १९९) सं० र० मा० (पृ० ८३२)

निमित्तपाते रात्रावपीति[1] बोध्यम् ।

अत्र प्रतिग्रहविषयेऽपि शास्त्रकाराणामिदमेवमतं यत् पक्वान्नं परित्य-ज्यान्यार्थग्रहणे न दोषः । परन्तु ये सकुल्यास्तेषां पक्वान्नभोजनेऽपि न कश्चन दोष इत्यपि व्यवस्था[2] ।

**जातकर्मानुष्ठाता—**

पिता जातकर्म कुर्यात् इति तु प्रथमः कल्पः । यदि तु पिता रोगादितः मृतो विदेशगतः पतितो वा स्यात्तदाऽश्वलायनोक्ता व्यवस्था—

रोगार्दितस्तु तत्कालं स्पृशन्नन्येन कारयेत् ।
यावत्स्वास्थ्यं भवेत्तावन्नाचरेज्जातकक्रियाम् ॥
पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥
दीक्षान्ते दीक्षितो भर्ता जातकृत्यादिकं चरेत् ।
पुंसवनादिकर्माणि त्रीणि ज्येष्ठो न कारयेत् ॥
अकृतेऽन्यकृते कर्मण्यापत्सु स्वास्थ्यमागतः ।
दानैर्ब्राह्मणवाक्यैश्च पुत्रकर्मोत्तमं चरेत्[3] ॥

श्रेष्ठेनेति तु तादृश एव प्रतिनिधिः । दीक्षितेन तु दीक्षाकाले स्वय-मपि जातकर्म न कार्यम् । नापि तत्प्रतिनिधिनाऽन्येन । किन्त्ववभृथान्ते विसृष्टदीक्षः स्वयमेव कुर्यात् । अत्र त्रीणीत्याश्वलायनानामनुकूलम्, तेषामेवा-नवलोभनरूप तृतीयसंस्कारसत्वात् । अकृत इति निषिद्धप्रतिनिधिना कृत-

---

( १ ) व्यासः—

ग्रहणोद्वाहसंक्रान्तियात्रादौ प्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥ सं० म० (पृ० २२)
पा० गृ० ग० भा० (१/१६)

( २ ) वृद्धयाज्ञवल्क्यः—कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्यभूगवाश्वादिधान्यशय्यासनादिषु ॥
तत्र सर्वं प्रतिग्राह्यं पक्वान्नं तु विवर्जयेत् ।
भक्षयित्वा तु तन्मोहात् द्विजश्चान्द्रायणं चरेत् ॥
सूतके तु सकुल्यानां न दोषो मनुरब्रवीत ॥ सं० र० मा० (पृ० ८३२,)
सं० प्र० ( पृ० २०० )

( ३ ) सं० र० मा० ( पृ० ८३२ )

मित्यक्ततामापन्नं कर्मातिक्रान्तं केनापि निमित्तेन कश्चित् कालं स्वयं कर्तुमसमर्थोऽपि नान्येन कारयेत्। स्वास्थ्योत्तरं दानसहिताभिः ब्राह्मणाशीर्भिः सोत्कर्षं पुत्रसंस्कारं कुर्यात् इत्याश्वलायनार्यः[१]।

## जातकर्मणि मुख्यं कृत्यम्—

तत्र 'मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्[२]' इति मनुवचनात् मन्त्रपूर्वकं हिरण्यमधुसर्पिषां प्राशनमेव जातकर्मसंस्कारे मुख्यं कृत्यम्। आश्वलायनस्यापि मतमेतदेव[३]। सर्वेषामप्यत्र शास्त्रकाराणां[४] सम्प्रतिपत्तिरेव। क्रमे तु शाखाभेदात्स्वल्पो भेदः तत्तद्गृह्योक्तप्रकारेण स्वीकरणीय एव। इदमेव कर्म हिरण्यशलाकया घृतप्राशनात्मकं मधुप्राशनात्मकं वा गृह्यकारैः 'मेधाजननम्[५]' इत्युक्तम्। तत्र घृतस्य मधुनश्च मेधाद्याधायकत्वं चिकित्साशास्त्रे प्रसिद्धमेव।[६]

अपरं चात्र प्रसिद्धं कृत्यमायुष्यम्[७]। एतदर्थं शिशोः कर्णे दीर्घायुष्यप्रयोजकानां मन्त्राणां जपनं क्रियते येन स दीर्घायुषा सम्पन्नः स्यात्। एवमेव स्तनाद्यभिमन्त्रणमपि[८] स्वस्वगृह्यानुसारेण विधीयते। तत्र शाखाभेदात् कर्मभेदो[९] मन्त्रभेदश्च[१०] यथायथं भवत्येव। यत्र चाविरोधस्तदतिदिश्यते च

---

(१) सं० र० मा० ( पृ० ८३२-३३ )
(२) म० स्मृ० [२/२९]
(३) कुमारं जातं पुराऽन्यैरालम्भात् सर्पिर्मधुनी हिरण्येन प्राशयेत्
(४) पा० गृ० [१/१६/४,] गो० गृ० [२/७/१९]
(५) पा० गृ० [१/१६/४,] गो० गृ० [२/७/१६]
(६) सुश्रुतसंहिता (शारीरस्थानम्) अ० [४५,] गो०गृ० ना० भा० [२/७/१९]
(७) पा० गृ० [१/१६/५,] बौ० गृ० [१/२/६]
(८) बौ० गृ० [१/२/१०]
(९) यथा बौधायनेन [१/२१-५१८] ये विषय उक्तास्ते सर्वे न गोभिलेन नापि पारस्करेण।
(१०) यथा घृतप्राशनस्य मन्त्रः पारस्करे–
'घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः स्त्वयि दधामि'। पा० गृ० [१/१६/४]
गोभिले पुनः—

मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते।
मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।
सनिं मेधामयासिषम्॥ गो० गृ० [२/७/१९]

शाखान्तरे इत्यपि शास्त्रकृतो व्यवस्था। इतरथा हि स्यादनवस्था। तथाहि—छन्दोगशाखायामग्निहोत्रस्य विधानं नोपलभ्यते। तत् यदि शाखान्तरानुमत्यापि छान्दोग्यैर्नानुष्ठीयेत तर्हि तन्मूलकानामग्निष्टोमादीनामत्यन्तमभाव एवैषां स्यात्। न चैतदुचितम्। अतो विरोधे सति शाखान्तरोक्तमपि कर्म गृह्णीयादेव न त्वेव न गृह्णीयात् अत एव—

यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवत्[२]॥

अतएव— मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्[१]॥

इत्यत्र मन्त्राकांक्षापूरकं गृह्यान्तरोक्तं मन्त्राभिधानमादरणीयमेव यथाशाखम्। पौराणिकादिमन्त्रास्तु सर्वसाधारणत्वाद्यथोपयोगं सर्वैरादेया एव। यथा एकोद्दिष्टादौ 'देवताभ्यः पितृभ्यश्च' इति सर्वैरेवोपादीयते। तत्रास्ति कियान् पाठभेद इति त्वन्यत्। अत एव-

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रतिष्ठितम्।
तस्य तावति शास्त्रार्थः कृते सर्वः कृतो भवेत्॥

इति गृह्यपरिशिष्टोक्तं साधारणानां परोक्तानां नावश्यमनुष्ठानमित्येवंपरमेव, न तु स्वगृह्योक्तमात्रमेवानुष्ठेयम् इति तस्यार्थः स्वीकार्यः, तथा सति गृह्यानुक्तानां साधारणनामुपदेशनैरर्थक्यापत्तेः, शाखान्तराधिकरणविरोधाच्च। सर्वं चैतत् पूर्वोद्धृतस्य यन्नाम्नातमित्यस्य कात्यायनसंहितावाक्यस्य व्याख्यायां प्रकाशकृत् प्राह। गोभिलभाष्ये भट्टनारायणोऽप्येवमेवापदिशति। अत एव गृह्यसंग्रहे—

आत्मतन्त्रेषु यन्नोक्तं[३] तत् कुर्यात् पारतन्त्रिकम्।
विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः[४]॥

तस्मादविरुद्धं शाखान्तरोक्तमपि संग्राह्यमेवेति निर्णयः।

---

(१) गो० गृ० ना० भा० [२/७/१९]
(२) कात्यायनसंहिता [१/३/३]
(३) म० स्मृ० [२/६४]
(४) गृ० सं० [२/९१]

# ( ५ ) नामकरणम्

व्यवहारनिर्वाहार्थं नामकरणमावश्यकमेव सर्वस्यापि वस्तुनः। अत एव मीमांसका अपि नामधेयात्मकवेदभागनिरूपणप्रसङ्गे नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्वमभ्युपगच्छन्ति[1]। अत एवाह संस्कारप्रकाशे बृहस्पतिः[2]—

नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म॥

ऋग्वेदे[3] नाम नामधेयादयः शब्दा उपलभ्यन्ते। तत्र ऋग्वेदादौ[4] गुह्यनामोल्लेखेनेदं विज्ञायते यदन्यन्नामागुह्यमपि भवति इति। अत एव पञ्चविंशब्राह्मणेऽपि[5] काक्षीवन्तः औशज इति च नामधेयम् द्विविधम् लभ्यते। तत्राद्यं लोकप्रसिद्धं द्वितीयं च मातृप्रसिद्धं नामेति स्पष्टमेव। इत्थमेवौद्दालकिरारुणे-[6] यादिशब्दा उपनिषत्सु उपलभ्यमानाः अनेकनामकत्वं प्रतिपादयन्तः पित्राद्याश्रितत्वमपि नाम भवतीति प्रमाणयन्त्येव। तदेवं सत्यपि वैदिकसाहित्ये नाम्नः स्पष्टोल्लेखे नाम कर्तव्यमिति विधिः प्रथमतः शतपथब्राह्मणे दृश्यते[7]

---

(१) की० न्या० प्र० पृ० [११७]
(२) सं० प्र० पृ० [२४१]
(३) दूरे तन्नाम गुह्यं पराचैर्यत्वा भीते अह्वयेतां वयोधै।
उदस्तम्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान् मघवन् तित्विषाणः॥
महत्तन्नाम गुह्यं पुरुस्पृग् येन भूतं जनयो येन भव्यम्।
प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च॥
ऋ० [१०/५५/१-२,]

बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।
यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः॥
ऋ० [१०/७१/१]

(४) ऋ० [१०/५५/१-२,] ऐ० ब्रा० [१/३/३,] श० प० ब्रा० [३/६/२४]
(५) पञ्च ब्रा० [१४/११/१७]
(६) कठ-उपनिषद् [१/१/११]
(७) श० प० ब्रा० [६/१/३/९]

'तस्मात् पुत्रस्य जातस्य नाम कुर्यात्' इति। गोभिलादिभिः पुनराचार्यैः नामकरणार्थं कस्यापि मन्त्रस्यानुल्लेखेनेदमेव प्रतीयते यत् पुरा नामकरणं प्रायो न शास्त्रीयमपि तु लोकव्यवहारार्थमेवानुमृतं जगत्यासीदिति[१]।

**नामकरणकालः--**

एतच्च जातकर्मोत्तरमेव कार्यम्। यद्यपि गोभिलेन निष्क्रमणानन्तरमेव नामकरणमुक्तं[२] तथापि कालनियमे स्पष्टमेव नामकरणनिष्क्रमणयोः पौर्वापर्यविगमात् निष्क्रमणात् पूर्वमेव नामकरणमिति निर्णयः। अत एवाश्वलायनगृह्ये जातकर्मोत्तरं कालान्तरमनुक्त्वा–'नाम[३] चास्मै दद्यात्' इत्युक्तम्। अतो जातकर्मोत्तरमेव नामकरणम्[४] इति व्यवस्थितम्।

अत्र मन्वादिकाः[५] दशम्यां नामधेयं कार्यमिति प्रथमं कल्पमुदाहरन्ति। तत्रैके मन्यन्ते–शास्त्रेष्वाशौचापगमानन्तरमेव[६] नामकर्मविधानात् आशौचस्य

---

(१) हिन्दू संस्कार [पृ० १०१]

(२) गो० गृ० [२/८/६]

(३) आश्व० गृ० [१/१५/४] (अत्र दद्यु, इति पाठो मुद्रितः)

(४) सं० म० [पृ० २४,] सं० प्र० [पृ० २३१-३२]

(५) नामधेयं दशम्यान्तु—म० स्मृ० [२/३०]
नामधेयं दशम्यान्तु–भविष्यपुराणम्, सं० प्र० [पृ० २३२,] सं० र० मा० [पृ० ८५०] ततस्तु नाम कुर्वीत पितैव दशमेऽह्नि–विष्णुपुराणम्, सं० र० मा० [पृ० ८५०,] सं० प्र० [पृ० २३२] नामधेयं दशम्यान्तु केचिदिच्छन्तिसूरयः–व्यासः, सं० प्र० [पृ० २३२] दशमे द्वादशे वाह्नि नामकर्म विधीयते। वसिष्ठः, सं० प्र० [पृ० २३३,] दशाहे द्वादशाहे वा-बृहस्पतिः। मदनरत्ने, सं० प्र० [पृ० २३३,] दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति पा० गृ० [१/१७] दशम्यां तस्मिन्नेवाग्नौ–[११ लौ० गृ० ३६/१] दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम ददाति–आप० गृ० [६/१५/८] दशम्यां रात्र्यां पुत्रस्य नाम दधाति–मा० गृ० [३/१] एवमेव दशम्यां कृत्वा पिता माता च पुत्रस्य नाम दद्यात्-वा० गृ० [२/१] दशम्यां द्वादश्यां वा नामकरणम्–बौ० गृ० २/१/२३

(६) 'आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते' इति शङ्खवचनम् म० मु० [२/३०,] 'आशौचापगमे नामधेयम्' इति विष्णूक्तेः। नि० सि० पृ० [५१४,] सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् इति मदनरत्ने नारदः नि० सि० पृ० [५१५]

च दशाहपर्यन्तत्वात् एकादशाहे नामकरणम्[1] इति। एकादशेऽहनि नामकरण-प्रतिपादकं शास्त्रकृद्वचनं[2] चात्रार्थे प्रमाणतयोपन्यस्यत एभिः। एते च मन्वादवाक्ये प्रयुक्तस्य 'दशम्याम्' इत्यस्य व्यतीतायामिति शेषं मन्वते। मेधातिथिस्तु लक्षणायां प्रमाणाभावेन जातकर्मवदाशौचेऽपि दशमेऽहनि शुभः मुहूर्तादिसम्पन्ने नामकर्म कार्यमेवेति प्राह[3]। याज्ञवल्क्यव्याख्यायामपरार्कोऽप्येवमेवाह।[4]

संस्काररत्नमालाकृतस्तु वदन्ति[5]—

अथ नामकरणम्। तच्च सूतकनिवृत्तौ कार्यम्।
"सूतकान्ते नामकर्म विधेयं स्वकुलोचितम्" इति नारदोक्तेः।
"आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते" इति शङ्खोक्तेश्च।

---

(१) दशम्यामतीतायामिति ज्ञेयम् नि० सि० [पृ० ५१४]
दशमेऽतीते इत्यर्थः [१-५]——अत्रापि दशम्यामतीतायामित्यर्थः। सं० र० मा० [पृ० ८५०]
अथवा—दशमेऽहन्यतीते एकादशाह इति व्याख्येयम्। म० मु० (२/३०)
दशम्यां रात्र्यां व्यतीतायामेकादशेऽहनि———पिता नाम करोति। पा० गृ० क० भा० (१/१७) (अन्येषामपि पारस्करभाष्यकर्तॄणामिदमेव मतम्।)
(२) अहन्येकादशे नाम-स्मृ० (१/१२)
प्रयोगपारिजाते कपिलसंहितायाम्—एकादशेऽह्नि विधिवन्नाम कुर्यात् कुलोचितम्। सं० म० (पृ० २५।)
संग्रहे—
एकादशेऽह्नि विप्राणाम्—सं० प्र० (पृ० २३४)
जननाद्दशरात्रे व्युष्टे (व्यतीते)…………नामधेयकरणम्। गो० गृ० (२/८/८)
(३) प्राङ् नाभिवर्धनादिति जातकर्मणः प्रकृतत्वात् जन्मनः प्रभृति दशमीद्वादश्यौ गृह्येते, न चन्द्रतिथी।
इह केचिद्दशमीग्रहणमाशौचनिवृत्तिरित्युपलक्षणार्थं वर्णयन्ति। अतीतायामिति चाध्याहारः, दशम्यामतीतायां ब्राह्मणस्य द्वादश्यां क्षत्रियस्य पञ्चदश्यां वैश्यस्येति। तदयुक्तम्। लक्षणायां प्रमाणाभावाज्जातकर्मवदाशौचेऽपि करिष्यते।…………अयं च परमार्थः—। दशमीद्वादशीभ्यामर्वाङ् न कर्तव्यम् उत्तरकालं च यदहर्नक्षत्रं लग्नं परिशुद्धं तदहरेव कर्तव्यम्। म० मे० भा० (२/३०)
(४) अपरार्कटीका० (१/१२)
(५) सं० र० मा० (पृ० ८४९)

सा च सूतकनिवृत्तिर्द्वादशेऽह्न्येव। 'द्वादश्यां' मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति' इति सूत्रेण स्नानागारशुद्ध्यादिकं द्वादशेऽह्नि विदधता आचार्येण एकादशेऽह्न्यप्याशौचसत्त्वबोधनात्। एतच्च मातापुत्रयोः पितुस्तत्कुलीनानां च। सूत्रे मातृग्रहणं मातुरेव आशौचपक्षमाश्रित्येति मातृदत्त आह। वैजयन्ती-कारकारिकाकारादयश्चाप्येवमाहुः। तद्विरुद्धस्यैकादशेऽह्नि पितुरप्याशौचं तत्कुलीनानां चेत्येतादृशव्याख्यानस्यायुक्तत्वात्। न चैवं मातुरप्येकादशेऽह्नि आशौचसत्त्वबोधनं सर्वस्मृतिविरुद्धमिति वाच्यम्, सर्वस्मृतिविरुद्धस्यापि मातापुत्रयोरेकादशेऽह्न्याशौचस्य पूर्वोक्तस्पष्टार्थकसूत्रप्रतिपादितस्नानागार-शौचविधानलभ्यत्वात्। न च मातापुत्रयोरपि बहुस्मृत्यनुरोधेनैकादश्यामेवा-शौचनिवृत्तिः स्नानं तु द्वादश्यामेव पुनरदृष्टार्थं कल्प्यमिति वाच्यम्, शुद्धिस्व-रूपे दृष्टे फले सम्भवति अदृष्टफलकल्पनस्यान्याय्यत्वात्। 'स्नातायां नाम दधाति' इत्यापस्तम्बसूत्रात् दृष्टार्थत्वस्य प्रतीतेश्च। न च दृष्टार्थकस्य स्नानस्य स्मृतित एव सिद्धत्वात् विधेर्वैयर्थ्यमिति वाच्यम् तस्य द्वादशीविधायकत्वेन वैयर्थ्याभावात्। न चैवमेकादशेऽह्नि पितुराशौचस्य निवृत्तत्वेन कर्माधिकृत-त्वात्तदह्न्येव नामकरणमिति वाच्यम्, पितुरधिकारित्वेऽपि सहाधिकारिण्या भार्यायाः संस्कार्यस्य शिशोश्चाशुचित्वेन एकादशेऽह्न्यनुष्ठानस्यायुक्तत्वात्। जातकर्मणस्तु तथात्वे सत्यपि निमित्तप्राबल्यादनुष्ठानम्। अतः समन्त्रकस्नान सम्पूर्णसन्ध्यावन्दनादीन्येकादशेऽह्न्यपि पित्रादिभिः कर्तव्यान्येवेत्युक्तं भवत्येव। पूर्वसूत्रे च सूत्रकृता विशेषानुपदेशात् क्षत्रियादिप्रसूतिकानामपि द्वादशेऽह्न्येव शुद्धिः। सेयं व्यवस्था सत्याषाढसूत्रानुसारिणां कृते कथञ्चि-दनुमता भवितुमर्हति नेतरेषाम्। वस्तुतस्तु एवं सति द्वादश्यामाशौचापगमात् त्रयोदश्यामेव नामकरणमेवं व्याख्याने प्राप्नोति, तच्च न युक्तम्, तथा सति द्वादशेऽह्न्यपि नामकरणविधायकसर्वशास्त्रविरोधापत्तेः। अतः आशौचम-ध्येऽपि नामकर्म दशम्यां सति शुभलग्नादौ सम्पाद्यमेवेत्येव रोचतेऽस्मभ्यम्। अत एव पूर्वोद्धृतमेधातिथ्यादिवचनमपि संगच्छते। युक्तं चैतदेवात्रापि विज्ञेयम्, इतरथा हि स्वायत्ते शब्दप्रयोगे दशम्यामित्यस्य स्थाने एकादश्या-मित्यस्यैव प्रयोक्तव्यत्वेन पूर्वोदाहृतसकलसूत्रस्मृत्यादिविरोधो दुष्परिहार एव स्यात्। अत एव संस्कारप्रकाशे नारदवचनम्—

जन्मतो दशमे वापि द्वादश्यां वापि तत्पुनः।
विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः॥
शूद्राणामपि चैवं स्यात् सतां नामासतामपि।
केचिन्नाम सतां प्राहुरेकत्रिंशद्दिने शुभम्॥[1]

(१) सं० प्र० पृ० २३२

तथा च,

आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते[1] इति शङ्खवचनम्,। [सूतकान्ते नामकर्मविधेयं स्वकुलोचितम्[2]] इति मदनरत्नाद्युद्धृतं नारदवचनम्,। 'आशौचापगमे नामधेयम्'[3] इति विष्णुवचनं च पूर्वोद्धृतनारदवचनाविरोधेन त्रिप्रातिरिक्तविषयमेव मन्तव्यमिति युक्तम्।

तदेवं सति यदेकादशेऽह्न्युक्तं नामकरणम् तदनन्तरं तत् शाखाभेदात ग्राह्यम् इत्येव रोचते। अत एवोक्तं मदनपारिजातेऽपि शंखः—आशौचे तु व्यतिक्रान्ते नामकर्म[4] विधीयते। न चायं नियमः, 'नामधेयं दशम्याम्'

(१) सं० र० मा० [पृत् ८४९,] सं० प्र० [पृ० २३३,] म० मु० [२,३०]
(२) नि० सि० [पृ० ५१५,] सं० र० मा० [पृ० ८४९]
(३) सं० प्र० [पृ० २३३,] नि० सि० [पृ० ५१४]
(४) नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत्। म० स्मृ० [२/३०]
वशिष्ठः—दशमे द्वादशे वाह्नि नामकर्म विधीयते। सं० प्र० [पृ० २३३]
मदरत्ने वसिष्ठः—जन्माहे द्वादशाहे वा दशाहे वा विशेषतः।
नि० सि० [पृ० ५१६]
व्यास—नामधेयं दशम्यान्तु केचिदिच्छन्ति सूरयः।
द्वादश्यामाहुरन्ये तु मासे पूर्णं तथा परे। सं०प्र० [पृ० २३३]
भविष्ये-नामधेयं दशम्यान्तु केचिदिच्छन्ति पार्थिव।
द्वादश्यामपरे प्राहुर्मासि पूर्णं तथा परे॥
अष्टादशेहनि तथा वदन्त्यन्ये मनीषिणः॥
सं० म० [पृ० २४,] सं० र० मा० [पृ० ८५०]
प्रयोगपारिजाते बृहस्पतिः—द्वादशे दशमे वापि जन्मतो दिवसे शुभे।
षोडशे विंशतौ चैवद्वाविंशे वर्णतः क्रमात्॥
सं० र० म० पृ० ८५०, सं० प्र० (पृ० २३३)
अस्यैव मदनरत्ने पाठान्तरम्-दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे।
षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात्॥
सं० प्र० [पृ० २३३]
गदाधरानुसारी मदनरत्नस्थः पाठः-द्वादशे दशमे वापि जन्मतोऽपि त्रयोदशे
षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात्।
पा० गृ० ग० भा० [१/१८]
निर्णयसिन्धुस्थमदनरत्नपाठे तु द्वाविंशे इत्यस्य स्थाने द्वात्रिंशे इति भेदो दृश्यते पारस्करभाष्यधृतपाठात्।

इत्यादिवचनविरोधात् । ततश्च 'अहन्येकादशे नाम' इत्यादीनां विवक्षितार्थत्वमेव, तेनाशौचमध्येऽपि कार्यम् । स्वगृह्यानुसारेण वैते पक्षा व्यवस्थिता विज्ञेयाः ।

एतावता यथासम्भवं जातकर्मानन्तरमेव प्रथमे दशमे एकादशे वा नाम कार्यमिति निर्णीतम् । एतदतिरिक्तदिनान्यपि द्वादश-त्रयोदश-षोडशाष्टादशैकोनविंशविंशद्वाविंशैकत्रिंशशतरात्रसम्वत्सरान्तानि यथाव्यवस्थं नामकरणे शास्त्रोक्तानि वेदितव्यानि । तत्रापि प्रयोगपारिजातादिनिर्दिष्टपाठभेदविशिष्टात् बृहस्पतिवचनात् दशमद्वादशाहयोर्ब्राह्मणस्य षोडशे क्षत्रियस्य विंशतौ वैश्यस्य द्वाविंशे च शूद्रस्य प्रयोगपारिजातएवप्रकाशोद्धृपाठानुसारेण अथवा मदनरत्नस्थपाठानुसारेण दशाहद्वादशाहयोर्विप्राणाम्, त्रयोदशे क्षत्रियाणाम्, षोडशे वैश्यानाम् ऊनविंशद्वात्रिंशयोः शूद्राणाम् नामकर्म कर्तव्यमित्यपि ज्ञायते ।

महाभारते—द्वादशे षोडशे विंशे द्वाविंशे क्रमतो दिने ।
नाम कार्यं द्विजातीनां विप्रस्य दशमेऽपि वा ॥[1]

इति भारतवचनेनापि प्रयोगपारिजातानुसारिबार्हस्पत्यपक्ष एव समर्थितो भवति । अत्र च भारतवाक्ये द्विजातीनामिति निर्धारणे षष्ठी । नानो नामकर्म एतद्वचनात् शूद्राणां न भवतीति प्रतिपत्तिः कर्तव्या ।

तत्र यथाचारं दशमे एकादशे द्वादशे वान्यत्र वा दिवसे जन्मतः नामकरणं मुख्यम्, तदन्यदिनेषु तु गौणम् मुख्यकाले कथञ्चिदनुष्ठानाभावे विधेयमित्यर्थः[2] । मुख्यकाले नामाद्यनुष्ठाने पुण्यतिथिनक्षत्रादिविचारो नैव

---

कारिकायाम्—एकादशे द्वादशे वा मासे पूर्णेऽथवा परे ।
अष्टादशेहनि तथा वदन्त्यन्ये मनीषिणः ।
शतरात्रे व्यतीते वा पूर्णे सम्वत्सरेऽथवा ॥

दशम्यां द्वादश्यां वा नामकरणम्—बौ० गृ० [१/२/२३]
जननात् दशरात्रे व्युष्टे शतरात्रे सम्वत्सरे वा नामकरणम् ॥
गो० गृ० [२/८/८]

(१) सं० प्र० [पृ० २३४]

(२) तदुक्तं कारिकायाम्-मुख्यकाले यदा नामधेयं कर्तुं न शक्यत ।
उक्तानामन्यतमस्मिन् दिने स्यात्तु गुणान्विते ।
पा० गृ० ग० भा० [१/१७]

कर्तव्य इत्येकः पक्षः[1] अपरस्तु तत्रापि कर्तव्य एव।

**तिथिनिर्णयः-**

अत्र चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दश्यश्छिद्राख्याः[2] तिथयः, नवमी पर्वं च वर्जनीयास्तिथयः शास्त्रे प्रकीर्तिताः[3]। पारिजातोक्तनृसिंहवचने यत्पूर्व-प्रतिषेध उक्तः तत्र पर्वणी द्वे इति अमावास्यापूर्णिमे विवक्षिते इति संस्कार-रत्नमालाकृतः[4]। तथा च तन्मते अष्टौ तिथयः वर्ज्याः प्रकाशकृतस्तु[5] पर्व-शब्देन पञ्चदशीमात्रम् (अमावस्यामात्रं) गृहणन्ति। युक्तं चैतत्। अत एव 'अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत्' इति पूर्वोदाहृतज्योतिर्निबन्धस्थ गर्गवाक्येऽपि अमैव प्रतिषिद्धा न पूर्णमासी। अत एव 'छिद्रां पञ्चदशीं विहाय[6] नवमीम्' इति निर्णयसिन्धूद्धृतश्रीधरवाक्येऽपि पञ्चदश्येव प्रति-षिद्धा न पूर्णमासीति संस्काररत्नमालोक्तं न रोचयामहे।

---

(१) ततश्च द्वादशदिनान्तकालेषु न पुण्यतिथिनक्षत्रचन्द्रानुकूल्यादिगुणादरः। ब्राह्मणादेरुक्तकाले नामकरणं कुर्वतो न मलमासगुरुशुक्रभौमादि निषेधादरः।

तदुक्तं दीपिकायाम्—

गर्भाधानमुखं च चौलविधितः प्राग्जातयागं विना।
कृच्छ्रेष्वाग्रयणं गजेन्द्रपुरतश्छायामघानङ्गयोः॥
तीर्थेन्दुक्षययोश्च पित्र्यमधिके मास्येवमाद्याचरेत्॥

तथा पारिजाते बृहस्पतिरपि। यस्यां क्रियायां यश्चोक्तः कालोमासदिनैरपि। तस्यां न दोषोमूढत्वं वक्रं वा गुरुशुक्रयोः॥ सं० र० मा० (पृ० ८५०-५१)

नियतकाले क्रियमाणेषु गुरुशुक्रास्तबाल्यवर्धकवक्रातिचारमलमासादिनिषेधो नास्ति। पा० गृ० ग० भा० [१/१७]

शुभे मुहूर्ते पूर्वोक्तान्यतमकाले कार्ये शुक्रास्तादीनां नैवविचारः॥ [सं० म० पृ० २७]

(२) युग्माश्च तिथयः सर्वा अजधर्मतिथिं विना। पक्षच्छिद्रा इति ज्ञेयाः सर्वकर्मसु गर्हिताः॥ अजो द्वितीया, धर्मो दशमी। सं० प्र० [पृ० २३५]

(३) छिद्राख्यां पर्वनवमीं हित्वा शेषाः शुभावहाः॥ सं० प्र० [पृ० २३५,] सं० र० मा० [पृ० ८५१]

(४) सं० प्र० [पृ० २३५,]

(५) नि० सि० [पृ० ५१५]

(६) द्वे पर्वणि सं० र० मा० [पृ० ८५१]

नक्षत्राणि--

तत्र उत्तरा रेवतीमूलहस्तपुष्यशतभिषश्रवणपुनर्वसुस्वात्यनुराधामृगशिरोधनिष्ठारोहिण्यः प्रशस्ताः नामकर्मणि इति मदनरत्ने वसिष्ठः[1]। अत्रोत्तरेत्यनेनोत्तरात्रयं विवक्षितम्। पारिजाते श्रीधरस्तु मूलं परित्यज्य मघां च अश्विनीं च स्वीचकार[2]। परन्तु मूलस्य बृहस्पति मेधातिथ्यादिसम्मतः[3]। अनयोराद्यः पक्ष एव श्रेयान्, इतरथा दिनावधारणस्वारस्यं शास्त्रकृतामसमञ्जसमेव स्यात्। परन्तु मुख्यकालेऽपि विष्टिवैधृतिव्यतीपातग्रहणसंक्रान्त्यमावास्याश्राद्धदिनेषु[4] न कार्यम्। तत्रापि नियतदिने पूर्वाह्णः श्रेष्ठः मध्याह्नो मध्यमः अपराह्णः रात्रिश्च सर्वदैव वर्जनीयत्वेन शास्त्रे निर्दिष्टाः[5]।

---

(१) मदनरत्ने वसिष्ठः—उत्तरा रेवती हस्तमूलपुष्याः सवारुणाः।
श्रवणादितिमैत्रं च स्वातीमृगशिरस्तथा॥
प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि॥
नि० सि० [पृ० ५१६]

(२) मित्रादित्यमदोत्तराशतभिषक्स्वातीधनिष्ठाच्युत—
प्राजेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु ………॥
(अत्र मित्रोऽनुराधाः, आदित्यं पुनर्वसू, उत्तरा उत्तरात्रयम्, अच्युतः श्रवणा, प्राजेशं रोहिणी, शशाङ्को मृगशिरः, पौष्णं रेवती, दिनकृत् हस्तः) नि० सि० [पृ० ५१५,] सं० र० मा० [पृ० ८५२]

(३) यदि दशमीद्वादश्यौ (पुण्ये तिथावित्यादि) वक्ष्यमाणगुणयुक्ते भवतस्तदा तयोः कर्तव्यम्। अथ न, तदान्यस्मिन्नपि पुण्येऽह्नि। म० मे० भा० [२/३०]

(४) व्यतीपाते च सङ्क्रान्तौ ग्रहणे वैधृतावपि।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः॥ इति गर्गः। सं० प्र० [पृ० २३४,] सं० र० मा० [पृ० ८५१,] अत्र मयूखस्य उत्तरार्धपाठः स्पष्टतरः-श्राद्धं विना शुभं कर्म प्राप्तकालेपि नाचरेत्॥ सं० म० [पृ० २५]। ज्योतिर्निबन्धे गर्गः-अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत्॥ नि० सि० [पृ० ५१५,] पा० गृ० ग० भा० [१/१७,] सं० र० मा० [पृ० ८५१,] सं० प्र० [पृ० २३५]

(५) बृहस्पतिः, पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः। अपराह्णे च रात्रिं च वर्जयेन्नामकर्मणि॥ सं० प्र० [पृ० २३६,] सं० र० मा० [पृ० ८५१,] सं० म० [पृ० २६]
ज्योतिर्वसिष्ठः-पूर्वाह्ने चैव मध्याह्ने कुर्यादेवं विचक्षणः। अपराह्णे च रात्रौ च नामकर्म विवर्जयेत्॥ सं० प्र० [पृ० २३६]

नियतकालेऽनुष्ठानाभावे उत्तरायणादिविचार: कर्तव्य एव। यथाह मयूखे कश्यप[1]:—

उक्तकाले प्रकर्तव्या द्विजानामखिला: क्रिया:।
अतोऽन्येषु तु कालेषु कर्तव्याश्चोत्तरायणे॥
सुरेज्येऽप्यसुरेज्ये वा नास्तगे न च वार्धके।
शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे॥
चन्द्रताराबलोपेते नैधनादपवर्जिते।
नाम मङ्गलघोषेण रहस्यं दक्षिणश्रुतौ॥ इति।

प्रकाशादौ नारदोऽपि—

देशकालोपघाताद्यै: कालातिक्रमणं यदि।
अनस्तगेज्ये च सिते तत्कार्यं चोत्तरायणे[2]।

वचनेऽपि[3] सम्भवेशात् तद् ग्राह्यमेव। एवमेव मघापि ग्राह्या।

अत्रापि 'पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते[4]' इति मनुवचने मुख्यकालातिक्रमे पुण्यतिथ्यात्मक एक: काल: स्वतन्त्र:, नक्षत्रात्मको पर:, उभयो स्वातन्त्र्यं ज्ञापयितुं वाशब्दयोरुपादानमिति संस्काररत्नमालाकृतां व्याख्यानम्। मेधातिथिस्तु एकं वा शब्दं समुच्चयार्थकमाश्रित्य 'प्रशस्तायां तिथौ नक्षत्रे च शुद्धे लग्ने इत्युपदिष्टं भवति[6]' इति व्याख्यातवान्। कुल्लूकभट्टोपि वाशब्दमेकमेवावधारणार्थकमपरं च समुच्चयार्थकमेवाभिप्रेत्य एकादशाहे कथञ्चिदकरणे 'प्रशस्ते तिथौ प्रशस्त एव मुहूर्ते नक्षत्रे च गुणवत्येव ज्योतिषाऽवगते कर्तव्यमिति'[7] इति प्राह। अनयोश्च पक्षयो: स्पष्टमेव

---

(१) सं० म० [पृ० २६,]
(२) सं० प्र० [पृ० २३५,] सं० र० मा० [पृ० ८५१]
(३) वृहस्पति: --

त्र्युत्तरासु धनिष्ठायां रेवतीहस्तयोरपि।
मूलवारुणपुष्येषु श्रवणादित्ययोरपि॥
मैत्रवाजिभयो: स्वातिरोहिण्यैन्दवभेषु च।
कुर्यान्नामक्रियां विद्वानायु: श्रीकीर्तिवृद्धये॥ सं० प्र० [पृ० २३५-३६]

(४) म० स्मृ० [२३०]
(५) सं० र० मा० [पृ० ८५०]
(६) म० मे० भा० [२/३०]
(७) म० मु० [२/३०]

मेधातिथ्यादिपक्षस्य युक्ततरत्वम् । अन्यथा हि मुहूर्त्तेऽस्यापि पुण्यस्य तिथ्यादिनिरपेक्षस्य स्वतन्त्रं विहितकालत्वं कथं प्रतिषेद्धव्यं स्यात् । तस्मात्समुच्चय एव युक्त इति वयमभ्युपगच्छामः ।

## पुण्यदिनानि--

सोमबुधबृहस्पतिशुक्रदिनानि प्रशस्तानि नाम[1] कर्मणि । तत्रापि विशेष उक्तो बृहस्पतिना—

बुधेन्दुसितजीवानामंशके दिवसोदये ।
द्रेष्काणे कालहोरायां नामकर्म प्रशस्यते[2] ॥

अत्र षष्ठ्यन्तस्य सप्तम्यन्तेषु प्रत्येकमन्वयः । अंशको नवांशो राशिः । उदयो लग्नम् । द्रेष्काणो राशेस्तृतीयोंशः कालहोरा वारप्रवृत्तिमारभ्याहोरात्र संबन्धिनो भागभेदाः । दिवसोदय इत्येकवद्भावः । ततश्चत्वारो वासराः प्रशस्ता इत्यर्थः[3] ।

इदं च नाम चतुर्विधम्—कुलदेवतासम्बद्धम्, माससम्बद्धम्, नक्षत्रसम्बद्धम्, व्यावहारिकं चेति ।

## (क) कुलदेवतासम्बद्धं नाम--

'कुलदेवतासम्बद्धं पिता नाम[4] कुर्यात्' इति शङ्खवचनात् कुलपूज्यदेवताश्रयं नाम शिशोः कार्यम् । अत्र यदि कुलदेवतासम्बद्धं नाम स्यात् तर्हि मदपत्यं कुलदेवता अवश्यमेव साधु पालयिष्यति इति पित्रोर्भावना मूलमिति प्रतीयते । एतादृशं च नाम इन्द्र-वरुण-मित्र प्रभृतयो वैदिकाः शब्दाः राम-कृष्ण प्रभृतयः पौराणिकाश्च शब्दाः । तत्रापि देवतानामान्ते शूद्रस्य नामकरणे 'दास' इति 'भक्त' इति वा उपपदं प्रयोज्यम्[5] ।

---

( १ ) भार्गवज्ञाचार्यामृतपादनाभदिवसे इति पारिजाते श्रीधरः ।
नि० सि० [पृ० ५१५]
सं० र० मा० [पृ० ८५२] ( अत्र भार्गवः शुक्रः, ज्ञो बुधः, आचार्यो बृहस्पतिः, अमृतपादश्चन्द्रः )

( २ ) सं० प्र० [पृ० २३५,] सं० र० मा० [पृ० ८५१]

( ३ ) सं० र० मा० [पृ० ८५१]

( ४ ) सं० प्र० [पृ० २३७,] नि० सि० [पृ० ५१६]

( ५ ) हिन्दू संस्कार पृ० १०६

**(ख) माससम्बद्धं नाम—**

मासदेवतासम्बद्धं नाम माससम्बद्धमित्युच्यते[१] । मासदेवता अत्युक्ताः शास्त्रे-कृष्णः, अनन्तः, अच्युतः, चक्री, वैकुण्ठः, जनार्दनः, उपेन्द्रः, यज्ञपुरुषः, वासुदेवः, हरिः, योगीशः, पुण्डरीकाक्ष इति । मासश्चात्र मार्गशीर्षादिक्रमेण ग्राह्याः[२] । तथा च यन्मासे शिशोर्जन्म तन्मासदेवतासम्बद्धं नाम तस्य कार्यम् एतादृशानि नामानि वैष्णवमतसम्बद्धानि सूत्रकालात् पश्चादुपात्तानि इति पाण्डेयमहानुभावाः[३] ।

**(ग) नक्षत्रसम्बद्धं नाम—**

यस्मिन् जन्मनि शिशोर्जन्म तेनाभिसम्बद्धं नामापि विहितमस्ति[४] । इदमेव च नाम आभिवादनकर्म[५] इत्यपि कथ्यते । एतच्च नाम गुह्यमित्यपि

---

(१) गर्गः— मासनाम प्रकुर्वीत बालकस्य पिता ततः ।
कृष्णोऽनन्तोच्युतश्चक्री वैकुण्ठोऽयजनार्दनः ॥
उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥
सं० र० मा० [पृ० ८५२,] सं० प्र० [पृ० २३७]

(२) अनुक्रमोऽत्र मार्गशीर्षादिकः, चैत्रादिक्रमे वैकुण्ठादिनामश्रवणात् ।
गर्गः— चैत्रादिमासनामादि वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ।
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥ सं० प्र० [पृ० २३७]

(३) हिन्दू संस्कार, [पृ० १०५]

(४) शंखलिखितौ-'नक्षत्राभिसम्बद्धं पिता वा कुर्यादन्यो वा कुलवृद्धः' । सं० प्र० [पृ० २३७]

(५) नक्षत्रनामधेयेन द्वितीयमस्य नामधेयं गुह्यमस्यान्यदभिवादनीयम् ओपनयनकालान्मातापितरौ संविदितौ भवतः । बौ० गृ० शे० [१/२/४-५)
अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात् ॥
आश्व० गृ० [१/१५/९]
शौनकोऽपि—येन नाम्नोपनीतोऽसौ करिष्यत्यभिवादनम् ।
तच्चास्मिन्नेव समये कर्त्ताऽसौ नामकर्मणः ॥
अभिवादननामेदमस्येत्यालोच्य चेतसा ।
उपांशु निर्दिशेच्चैतन्न जानीयुर्यथा परे ॥
तच्च नामौपनयनं स्मरेतां पितरौ शिशोः ॥ इति ॥
सं० प्र० [पृ० २३९]

शास्त्रकृन्मतम्, उपनयनानन्तरं तु तेनापि ज्ञायते यस्य नाम, तत्पूर्वं तु तन्नाम केवलं पितृभ्यामेव विदितं स्यात्। इदं च नाम नक्षत्रदेवतासम्बद्धमपि[1]।

अत्र संस्काररत्नमालायां विशेषः—

'नक्षत्रनाम त्रिविधम्—जन्मनक्षत्रनाम, जन्मनक्षत्रदेवतानाम, जन्मनक्षत्रपादचतुष्टयभूताक्षराद्याक्षरकं नाम चेति[2]।'

तत्र नक्षत्रनामस्वरूपं मातृदत्त आह–नक्षत्रनाम किन्तत्? जन्मनक्षत्रप्रकृतिकं तत्र जातार्थतद्धितान्तम्। यथा रौहिण इत्यादि[3]। असावसावित्यादिश्य[4] नामनी' इत्याश्वलायनसूत्रव्याख्यायां देवत्रातोऽपि 'तत्र जातः' इत्यस्मिन्नर्थे तद्धित उत्पद्यते' इति प्रकृत्य 'तस्मादेवं प्रयोगो भवति अनूराधो देवदत्तः' इति। अत एव बौधायनगृह्यशेषसूत्रेऽपि[5]–'पुत्रस्य नाम गृण्हात्युपतिष्ठते वा। अथ नक्षत्राणि—रोहिणीमृगशीर्षमघाचित्राज्येष्ठाश्रवणशतभिषगरेवत्याश्वयुक्षु प्रथमाक्षरवृद्धिः स्यात् रोहिण्यां रौहिणायेति। तथेतराणि। तिष्याश्लेषाहस्तविशाखानुराधाषाढाश्रविष्ठासु प्रकृतिवत्तिष्यायेति। तथेतराणि फल्गुन्यां फाल्गुनायेति। स्वातीपुनर्वस्वोः स्वातये पुनर्वसव इति। मूलार्द्रयोः मूलकार्द्रकायेति, प्रौष्ठपदासु प्रोष्ठपदाय प्रौष्ठपादायेति वा। अपभरण्यामपभरणाय आपभरणाय वेति। अग्नये कृत्तिकाय कार्तिकायेति वा व्याख्यातान्यग्नेर्हेतुः। स्त्रीविषये कुमार्यै रौहिण्ये सुश्रियै गौर्यै सरस्वतीति कथितम्। अत एव 'को नामासि इति नामधेयं पृच्छत्याचार्य अभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयं गोत्राश्रयमप्येके'[6] इति छन्दोगसूत्रव्याख्यायां नारायणेनाप्युक्तम्–'नक्षत्राश्रयं वा, यथा फाल्गुननामास्मीति।'

तत्रोक्तानां तद्धितान्तानां नाम्नां संग्रहाय सुदर्शनभाष्ये पठितोऽयं श्लोकः–

---

(१) देवताश्रयं नक्षत्राश्रयं वा अभिवादनीयं नामेति खादिरगृह्यसूत्रात्। सं० प्र० [पृ० २३९]

(२) सं० र० मा० [पृ० ८५७]

(३) सं० र० मा० [पृ० ८५६]

(४) आश्व० गृ० [१, १५ १०]

(५) बौ० गृ० शे० [१, ११/१०-१३]

(६) गो० गृ० [२।१०/२०-३१]

रोरेमसृज्येचिषु वृद्धिरादौ ठात्ये च वान्त्यश्रवशाश्वयुक्षु[1]।
शेषेषु नाऽऽर्म्वोः कपरः स्वरोन्त्यः स्वाप्वोरदीर्घः सविसर्गं इष्टः[2] ॥

इति । रोरेत्यादिनक्षत्रनामाद्याक्षराणि । तथा च रोहिणी रेवती मघा मृगशिरा ज्येष्ठा चित्रा इत्येतेषु जातानां नक्षत्राभिसम्बद्धनामसु आद्याक्षरवृद्धिर्भवति । 'नक्षत्रेभ्यो बहुलम्'[3] इति बहुलग्रहणाज्जातार्थकस्य प्रत्ययस्य च लुगभावः । अतो रूपं भवति–रौहिणः, रैवतः माघः, मार्गशीर्षः, ज्यैष्ठः, चैत्र इति च । ढात्ये इति प्रोष्ठपदार्थकः तत्र च ठकारात्परे पकारे च वृद्धिः, "जे प्रोष्ठपदानाम्"[4] इत्युत्तरपदवृद्ध्यनुशासनात् । पूर्ववच्च जातार्थकप्रत्ययस्य लुगभावः । तथा च प्रोष्ठपाद इति नामागतम् । "प्रोष्ठपदासु प्रोष्ठपदाय प्रौष्ठपदाय[5] वा' इति बौधायनगृह्यशेषसूत्रपाठं तु नोपपादयितुमर्हा वयम्, अन्तरेण 'बहुलं छन्दसि' इत्याश्रयणम् । वाऽन्त्यश्रवशाश्वयुक्षु इति । अत्रान्त्यशब्दोऽयं भरणीपरः । श्रवः श्रवणः । शः शतभिषक् । अश्वयुक् अश्विनी । एषु चतुर्षु विकल्पेनादिवृद्धिः । तत्रापि श्रवणापभरण्योर्बहुलग्रहणादेव विकल्पेन जातार्थकप्रत्ययस्य लुक् । अश्वयुक्शतभिषजोस्तु 'वत्सशालाभिजिदश्वयुक्छतभिषजो[6] वा' इति सूत्रेण । तथा च आपभरणः, अपभरणः, श्रावणः, श्रवणः, शतभिषक्, शातभिषजः, अश्वयुक्, आश्वयुज इति नाम निष्पन्नम् । शेषेष्विति । उक्तेभ्योऽन्येषु नक्षत्रेषु न वृद्धिः । यतोऽत्र 'श्रविष्ठा[7]फल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' इत्यनेन 'नक्षत्रेभ्यो बहुलम्' इत्यनेन च लुग्भवति । 'लुक्तद्धितलुकि'[8] इत्यनेन च स्त्रीप्रत्ययस्यापि लोपः। श्रविष्ठेत्यादिसूत्रे बहुलशब्देन कृत्तिकोच्यते । तथा चात्र तस्या अपि ग्रहणम् इति संस्काररत्नमालायाम् । तथा च कृत्तिकः, तिष्यः, फल्गुनः, आश्लेषः, हस्तः, विशाखः, अनुराधः, अषाढः, श्रविष्ठ इत्यादीनि नामानि । अर्म्वोः इति । आर्द्रामूलयोरित्यर्थः, एतयोरन्त्यः स्वरः कपरो भवति । तत्र 'पूर्वाण्हापराण्हा-

---

(१) अत्र 'श्रवणाश्वयुवु' इति निर्णयसिन्धूद्धृतः पाठो युक्तः ।
(२) नि॰ सि॰ [पृ॰ ५१६,] सं॰ र॰ मा॰ [पृ॰ ८५७]
(३) पा॰ सू॰ [४/३/३७]
(४) पा॰ सू॰ [७/३/१८]
(५) बौ॰ गृ॰ सू॰ [१/११/१६]
(६) पा॰ सू॰ [४/३/३६]
(७) पा॰ सू॰ [४/३/३४]
(८) पा॰ सू॰ [१/२/४९]

द्रामूल'[1] इत्यादिसूत्रेण वुनप्रत्यये 'युवोरनाकौ[2]' इति तस्याकादेशे 'यस्येति[3] च' इत्यनेनार्द्राशब्दस्यान्त्याकारस्य लोपे च कृते आर्द्रको मूलक इति सिध्यतः आरित्यत्र रेफग्रहणमाश्लेषानिवृत्यर्थम्। 'स्वाप्वोरदीर्घः सविसर्गः इष्टः' इति। स्वाप्वोरित्यस्य स्वातीपुनर्वस्वोरित्यर्थः। अनयोरन्त्यः स्वरो ह्रस्वः सविसर्गश्चाभिमतः। 'श्रविष्ठाफल्गुन्यनुराधा' इत्यनेन जातार्थविहितप्रत्ययस्य लुक् सविसर्गत्वं च, पूर्वस्त्रीप्रत्ययनिवृत्तौ[4] हल्ङ्यादिलोपाभावात्, उत्तरस्यतूकारान्तत्वात्, तथा च स्वातिः पुनर्वसुः इति रूपद्वयम्। स्वातीति सदीर्घपाठात् पुनर्वस्वोर्द्विर्वत्वेन च सोर्दीर्घत्वप्रसक्तेरदीर्घत्वमुक्तम्। एवं सप्तविंशतिनक्षत्रनाम्नां निर्णयः।

नक्षत्रेष्विष्वभिजितः पृथगाम्नानेऽपि पाणिनिनाऽपि 'वत्सशालाभिजिदश्वयुक्' इति तत्प्रकृतिकयोरभिजिदाभिजित इति नाम्नोरनुशिष्टत्वेऽपि पूर्वोक्तसुदर्शनभाष्यश्लोके योऽनादरः स नक्षत्रान्तरेऽन्तर्भावात् तन्नाम्नैव सौकर्यव्यवहारसम्भवात् इति हेतोरेव। अत एव मातृदत्तेनाभिजित इति नाम्नोऽपि स्वीकारः कृत[7] एव।

स्त्रीणान्त्वेतान्येव नामानि स्त्रीप्रत्ययान्तानि भवन्ति। यथा-कृत्तिका, रोहिणी, मार्गशीर्षी, आर्द्रिका, पुनर्वसू, तिष्या, आश्लेषी, माघी, फल्गुनी; इत्यादीनि नामानि।

तदेवं निरूपितम् नक्षत्रसम्बद्धं नाम। नक्षत्रदेवतासम्बद्धं पुनर्निरूपयामः—

तत्र नक्षत्रदेवतास्तावत्—

अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः।
सर्पाश्च पितरश्चैव भगश्चैवार्यमापि च॥
सविता त्वष्टाऽथ वायुश्चेन्द्राग्नी मित्र एव च।
इन्द्रो निर्ऋतिमापो वै विश्वेदेवास्तथैव च॥

---

(१) पा० सू० [४/३/२८]
(२) पा० सू० [७/१/२]
(३) पा० सू० [६/४/१४८]
(४) पा० सू० [४/३/३४]
(५) पा० सू० [६/१/६८]
(६) पा० सू० [४/३/३६]
(७) सं० र० मा० [पृ० ८५८]

विष्णुर्वसवो वरुणोऽज एकपात्तथैव च।
अहिर्बुध्न्यस्तथा पूषा चाश्विनौ यम एव च॥
नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम्[1]॥ इति।

एता देवताः नक्षत्राणां कृत्तिका प्रभृति ज्ञेयाः। तथा च कृत्तिकादावुत्पन्नस्य शिशोः आग्नेयः प्राजापत्य इतिक्रमेण नक्षत्रदेवतासम्बद्धं नाम कर्तव्यमिति सिध्यति।

तृतीयं तु नाम गृह्यपरिशिष्टे समर्थितम्।
तदक्षरादिकं नाम यस्मिन् धिष्ण्ये प्रतिष्ठितम्[2]।

तथा च अश्विनीनक्षत्रे जन्म गृण्हतां शिशूनां 'चू' 'चे' 'चो' 'ल' इत्येतेषामश्विनीसमधिष्ठितानां वर्णानामन्यतममाद्यमक्षरत्वेन समादाय कार्यम्। यथा 'चूडामणिः, चेदीशः' इत्यादि।

एतत्त्रिविधमपि साक्षात्परंपरया वा नक्षत्रसम्बद्धं नाम व्यावहारिकनाम्नः पूर्वमेव कर्तव्यम्। यद्यपि आश्वलायनादिसूत्रपाठक्रमात् व्यावहारिकनामकरणमेवातः पूर्वं कर्तव्यमिति प्रतीयते तथापि बौधायनापस्तम्बाभ्यां जातकर्मण्येव मूर्धाभिघ्राणकाले नक्षत्रनाम्नो विनियोगान्नक्षत्रनाम्न एव पूर्वत्वम् जातकर्मतः पूर्वमेव जन्मदिवसे कर्तव्यत्वं च भवति[3]।

## (घ) व्यावहारिकनामसंघटना—

तत्र द्व्यक्षरं चतुरक्षरं वा नामेति पारस्करः[4]। आश्वलायन[5] वसिष्ठा-

---

(१) सं० प्र० [पृ० २४१,] सं०र० मा० [पृ० ८५८]
(२) सं० र० मा० [पृ० ८५८, सं० प्र० [पृ० २३९]
(३) सं० प्र० [पृ० २४०]
(४) पा० गृ० [१/१७/२]
(५) नाम चास्मै दद्युः......द्व्यक्षरं चतुरक्षरं वा—आश्व० गृ० [१/१५/४-६]
तद्व्यक्षरं वा चतुक्षरं वा......वसिष्ठः, सं० प्र० [पृ० २४१]
तस्य नामधेयं ददयात् द्व्यक्षरं वा चतुरक्षरं वा—जै० गृ० [१/६]
द्व्यक्षरं चतुरक्षरं वा—आप० गृ० [६/१४/६]
द्व्यक्षरं चतुरक्षरं वा—मा० गृ० [३/२]
द्व्यक्षरं चतुरक्षरं वा—वा० गृ० [२/२]
द्व्यक्षरं चतुरक्षरं वा—महाभाष्यम्।

दयोऽप्येवमेवाहुः। वैजवायस्तु[1] एकाक्षरं द्व्यक्षरं त्र्यक्षरं चोक्त्वा परिमिताक्षरमपि नामेति प्राह। तत्रापि 'अयुग्मान्तं स्त्रीणाम्'[2] इति गोभिलाद्युक्तेः एकाक्षरं त्र्यक्षरं च नाम कुमार्याः, अपरिमिताक्षरमपि यद्ययुगाक्षरं तदा कुमार्या एवेति व्यवस्था बोध्या। अत्राक्षरपदेन तत्र चाक्षरशब्दः स्वरे वर्त्तते[3]। व्यञ्जनेषु तु न संख्यानियमः[4]। बौधायने तु षडक्षरं चाष्टाक्षरं च नामेति दृश्यते[5]। तत्रापि प्रतिष्ठाकामस्य द्व्यक्षरं ब्रह्मवर्चसकामस्य च चतुक्षरमिति विशेषमाहाश्वलायनः[6]। तत्रापि घोषवदाद्यम् अन्तरन्तरस्थं दीर्घाभिनिष्ठानं[7] दीर्घाभिनिष्ठानान्तमिति[8] विशेषो ज्ञेयः। अत्र घोषाक्षराणि 'गघङ, जझञ, डढण, दधन, बभम, यरलव ह' इत्येतानि शास्त्रे प्रसिद्धानि। यरलवा

---

(१) पिता नाम करोति एकाक्षरं द्व्यक्षरं त्र्यक्षरमपरिमिताक्षरं वेति वैजवायः। सं० प्र० [पृ० २४१]

(२) गो० गृ० [२/८/१६]

अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम्। पा० गृ० [१/१७/३]

अयुजाक्षरं कुमार्याः—बौ० गृ० [२/१/३०]

अयुजानि स्त्रीणाम्—आश्व० गृ० [१/१५/९]

अयुजाक्षरं कुमार्याः—आप० गृ० [६/१४/११]

कन्याया अकारव्यवधानमाकारान्तमयुग्माक्षरम्।—वा० गृ० [२/२]

(३) अक्षरशब्दोऽत्र स्वरेषु वर्त्तते। यथा चतुर्विंशत्यक्षरा गायत्रीति। सं० र० मा० [पृ० ८५३]

अक्षरं स्वरः–सं० प्र० [पृ० २४१]

(४) व्यञ्जनेषु तु न संख्यानियमः—सं प्र० [पृ० २४१]

(५) द्व्यक्षरं चतुरक्षरं षडक्षरमष्टाक्षरं वा। बौ० गृ० [१/२/२५]

(६) द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः–आश्व० गृ० [१/१५/७]

(७) घोषवदाद्यन्तरन्तःस्थम् दीर्घाभिनिष्ठानम्–पा० गृ० [१/१७/२]

घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानम् [२/८/१५] भाष्ये गोभिलगृह्यपाठान्तरं नारायणभाष्ये।

(८) घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानान्तम्–गो० गृ० [२/८/१४]

घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानान्तम्-बौ० गृ० [१/२/२६]

" " वा० गृ० [२/२]

दीर्घाभिनिष्ठानान्तं घोषवदाद्यन्तरन्तःस्थम्–आप० गृ० [६/१४/९]

अन्तः स्था, ते मध्ये यस्य तदन्तरन्तःस्थम्। दीर्घाभिनिष्ठानमिति पारस्करः। तत्र निष्ठानं समाप्तिः, सा दीर्घा यस्येति, दीर्घाभिनिष्ठानमिति तद्भाष्यकृतः[1]। गोभिलादौ तु दीर्घाभिनिष्ठानान्तं नामेत्युक्तम्, तत्र दीर्घश्चाभिनिष्ठानश्च, संस्कारतत्त्वे गर्गः—

आदौ घोषवदक्षरान् यरलवान् मध्ये पुनः स्थापयेत्।
अन्ते दीर्घविसर्जनीयसहितं नाम प्रयत्नात् कृतम्॥

दीर्घाभिनिष्ठानौ, तावन्ते यस्य तद्दीर्घाभिनिष्ठानान्तमिति व्युत्पत्तिमभिप्रेत्य 'दीर्घं द्विमात्रम्',[2] अभिनिष्ठानं विसर्जनीयमक्षरम्। राणायनीयानां ऋक्तन्त्रे प्रसिद्धा विसर्जनीयस्याभिनिष्ठानाख्या। अर्थाद् द्वयारसम्भवे विकल्पः। दीर्घमक्षरमन्ते यस्य नाम्नस्तद् दीर्घान्तम्, यथा गोविन्दः। स एष सामर्थ्याद्विकल्पः[3]। दीर्घान्तं वा विसर्जनीयान्तं वेति" इति गोभिलगृह्यसूत्र-भाष्ये नारायणः। अनेनात्र गृह्यस्य दीर्घाभिनिष्ठानमात्रं पाठं केषाञ्चिदभिमत-मुद्धृत्येत्थं व्याख्यातम्—"अन्ये त्वेवं पठन्ति—दीर्घाभिनिष्ठानं कृतं नाम दध्यादिति। तेषामर्थ उच्यते। दीर्घेणाक्षरेणाभिनितिष्ठते परिसमाप्यते यन्नाम तद् दीर्घाभिनिष्ठानम्, यथा गोविन्दशर्मा।

अनयो पक्षयोः दीर्घाभिनिष्ठानं नामेत्यस्यार्थं नावगच्छामः। तथा हि सति गुप्तदासात्मकयोर्वैश्यशूद्रनाम्नोरसंग्रहापत्तेः। न हि तत्र शर्मा—वर्मेतिवद्वा कश्चन दीर्घस्वरोऽन्ते सम्भवति। अतोऽनयोः पक्षयोर्दीर्घाभिनिष्ठानान्तमेव नाम प्रतिपादयन् पक्ष उत्तमः। यद्यपि अभिनिष्ठानशब्दस्यावसानार्थकत्वमुक्तं कर्काचार्यादिभिः पारस्करभाष्ये नारायणेन च पाठान्तरव्याख्यानावसरे गोभिलगृह्यभाष्ये तदपि नास्मभ्यं रोचते। यतोहि 'अभिनिष्ठानशब्दोऽपि विसर्जनीयेऽक्षरे मतः' इति विश्वप्रकाशे 'अभिनिरस्तनो विसर्गे' इति सूत्रे गोयीचन्द्रेण च 'विसर्गे वाच्ये इति भाववृत्तिकृतो मतम्, विसर्गे वर्णे च वाच्य इति वामनस्य मतम्, अभिष्टानो वर्ण इति चन्द्रमतम्, तथा च माघः— वचः स्पष्टानभिष्टानमिद मादाय माधवः' इत्युक्तम्[4]। तथा च अभिनिष्टा-नाभिनिष्ठानशब्दावुभावपि न समानार्थकौ इति प्रतीमः। किञ्च दीर्घाभिनिष्ठा-

(१) पा० गृ० क० भा० [१/१७] अन्येषामपि जयरामादीनां मतमेतदेव।
(२) गो० गृ० ना० भा० [२/८/१४]
(३) तु० यौगपद्येनासम्भवात् दीर्घान्तं विसर्जनीयान्तं वेत्यर्थः।
सं० र० मा० [पृ० ८५४]
(४) पा० गृ० टि० [पृ० ४२०-२१]

मात्रपाठस्यान्यत्रानुपलब्धेरित्यपि वक्तुं शक्यते यत् पारस्करेऽपि अभिनिष्ठानान्तमित्येव पठनीयम्, लेखक प्रमादाद्विना तु अन्तशब्दस्य अन्त जात इति। अत एव अभिनिष्ठान इति प्रमादपाठ इति संस्काररत्नमालाकृदुक्तमपि संगच्छते[1]।

तच्चेदं दीर्घाभिनिष्ठानान्तं नाम शर्मादिशब्दस्य नामाङ्गत्वे सत्येव घटत इति तद्विषयेऽपि किञ्चिद्विचारणीयमेव। अत्र मनुः—

शर्मवद् ब्राह्मणस्य स्यात् राज्ञो रक्षासमन्वितम्।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम्[2] ॥ इति।

पारस्करव्यासयमादयो[3] प्येवमेवाहुः।

---

(१) सं० र० मा० [पृ० ८५३-५४]
(२) म० स्मृ० [२/३२]
(३) शर्मब्राह्मणस्य वर्मक्षत्रियस्य गुप्तेति वैश्यस्येति। पा० गृ० सू० [१/१७/४]

व्यासः–शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य तु।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ सं० प्र० [पृ० २४३]

इदमेव वचनं विष्णुपुराणीयत्वेन मनुटीकायां (२/३२) कुल्लूकभट्टेन संगृहीतम्

यमः–शर्मा देवश्च विप्रस्य वर्मात्राता च भूभुजः।
भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

अत्र भूतिर्दत्तश्चेति पाठान्तरम्। अयं पाठः गो० गृ० च० भाष्ये [२/८/१४] मन्वर्थमुक्तावल्यान्तु पाठान्तरम्—

शर्मदेवश्च विप्रस्य वर्मत्राता च भूभुजः।
भूतिदत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥ म० मु० [२/३२]

प्रकाशे तु पाठान्तरम्—शर्म देवश्च विप्रस्य वर्म राजा च भूभुजः।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥
सं० प्र० [पृ० २/४३]

गो० गृ० च० भष्ये शंखः—शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु।
धनान्तञ्चैव वैश्यस्य दासान्तश्चान्त्यजन्मनः ॥
गो० गृ० च० भा० २/८/४

शर्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य गुप्तान्तं वैश्यस्य दासान्तं शूद्रस्य बौ० गृ० शे० [१.११.९]

आश्वलायनेन तु[1] युक्तिरप्यत्रदत्ता। अत्रेदं चिन्तनीयं—शर्मादिशब्दो नामाङ्गभूत उपपदभूत एव वेति। तत्र मेधातिथ्यादिमनुव्याख्यातृणां मतेन शर्मादिशब्दानामुपदत्वमेवेति निर्णय। तथा च मेधातिथिभाष्यम्—'यतो वक्ष्यति—शर्मवद् ब्राह्मणस्येत्युपदनियमम्, तत्र चतुरक्षरे त्र्यक्षरे वा नाम्नि शर्मशब्दे चोपपदे.........' इति। कुल्लूकस्य चोक्तम् 'एषां यथाक्रमं शर्मरक्षा-पुष्टिप्रैष्यवाचकानि कर्तव्यानि—शर्म—वर्म भूति—दासादीनि उपपदानि कार्याणि। उदाहरणानि—शुभ शर्मा, बलवर्मा, वसुभूतिः, दीनदासः[3] इति।' तदेतन्नोचितं प्रतीयते। तथा हि 'घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं नाम कुर्यात्'[4] इत्यादि वाक्ये गोभिलादिभिराचार्यैः नाम्न आदिमध्ये सूचयित्वाऽन्ते उपपदं सूत्रितमिति न सम्भवदुक्तिकम्। 'अयुग्मान्तं[5] स्त्रीणाम्' इत्यग्रिमसूत्रे दाकारस्य नामावयवत्वस्य तेषामप्यनुमतत्वेनात्रापि तथैव वर्णयितुमुचितत्वात्, तात्पर्यभेदकल्पनस्यान्याय्यत्वात् उत्तरसूत्रे दाकारस्य दीर्घाभिनिष्ठानयोरपवादरूपेण प्रवृत्तेस्तस्यैव तयोरपि नामत्वप्रतीतेश्च। पाठान्तरे तु शर्मेत्यस्य नामावयवत्वे न सन्देहलेशोऽपि। तथा च स्नानसूत्रपरिशिष्टम्—

---

(१) आश्वलायनाचार्यः—

तपसा ब्रह्मचर्येण शमेन च दमेन च।
जगतां शर्मदानेन शर्मान्तं ब्राह्मणे भवेत्॥
तापत्रयादतिबलात् जगत् संरक्ष्यते यतः।
तस्मात्सर्वसमे धीरे वर्मान्तं क्षत्रिये भवेत्॥
काले काले धनं दत्वा सर्वान् गोपायतीति यत्।
तस्माद्वैश्यस्य नामैतत् गुप्तान्तमभिधीयते॥
द्विजान् शुश्रूषयन्नित्यं शूद्रस्तोषयतीति यत्।
तस्मात्तस्य च दासत्वं तत्तस्त्रीणां तथा तथा॥

सं० प्र० [पृ० २४३]

(२) म० मे० भा० [२/३१]
(३) म० मु० [२/३२]
(४) गो० गृ० [२/८/१४]
(५) गो० गृ० [२/८/६]

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति ॥
सर्वत्रैव पितः प्रोक्तं पिता तर्पणकर्मणि ।
पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता ॥
शर्मन्नर्घ्यादिके कार्यं शर्मा तर्पण कर्मणि ।
शर्मणोऽक्षय्यकाले च पितृणां दत्तमक्षयम्[1] ॥

अत्र च गोत्रसम्बन्धनाम्नामुल्लेखप्रकारोपदेशपरे ग्रन्थे गोत्रसम्बन्धयोरुल्लेखप्रकारमुपदर्श्य 'शर्मन्नर्घ्यादिके कार्य' इत्याद्यभिधानात् शर्मशब्दस्य नामप्रतीकत्वं स्पष्टमेवावगम्यते । तस्य नामभिन्नत्वं तदुपपदत्वे च क्रमागतस्य नाम्न उल्लेखप्रकारमनभिध्याय तदुपपदस्योल्लेखप्रकाराभिधानमसमञ्जसं भवेत् । न च संगतं शास्त्रमसङ्गतं कर्तुमुचितम् । तथा च 'नामधेयं दशम्यान्तु'[2] इति प्रकृत्योक्ते शर्मवद् ब्राह्मणस्येत्यादिवाक्येऽपि[3] नामधेयमिति प्रक्रान्तं विशेष्यमनुषञ्जनीयमेवेति मेधातिथ्यादिमतं युक्तम् । अत एव गोभिलभाष्ये शङ्खशातातपावप्याहतुः—

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
धनान्तश्चैव वैश्यस्य दासान्तश्चान्त्यजन्मनः ॥

किञ्च विष्णुपुराणे—'शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य च' इत्यादिवाक्ये शर्मशब्दादयुत्तरमितिशब्दोल्लेखादप्येतदेवावगम्यते यत् शर्मादिशब्दानामावयवभूता एवेति ।

इदमप्यत्रावसेयम्—शर्मादिशब्दा यद्यपि नामावयवभूतास्तथापि द्व्यक्षरादिनामघटकातिरिक्ता एवेति । अन्यथा द्व्यक्षरमिति पक्षे तदतिरिक्तनामाभाव एव स्यात् । एकाक्षरमिति वैजवायोक्तपक्षे तु तावन्मात्राभावोऽपि । अयन्तावदवैदिकः[4] पक्षः ।

---

(१) गो० गृ० च० भा० [२/८/१४]
(२) म० स्मृ० [२/३०]
(३) म० स्मृ० [२/३]
(४) गो० गृ० च० भा० [२/८/१४,] ब्राह्मणस्य नाम्नि शर्मेत्यनुषङ्गो भवतीति भर्तृयज्ञहरिहरौ । पा० गृ० ग० भा० [१/१७]

एतेषां च शर्मादिशब्दानां न स्वरूपग्रहणमपि त्वर्थग्रहणमेवेति शर्मपद-रहितमपि नायं भवितुमर्हति। अतः शर्मादीनां शब्दानां न नामावयवत्वमित्य-परः पक्षः। मनुटीकाकारस्य मेधातिथेः[१] पारस्करभाष्यकर्तुश्चायमेव[२] सिद्धान्तः।

अनयोश्च पक्षयोर्यद्यपि शास्त्रद्वैविध्यात् नैकोऽपि विरुद्धः[३] तथापि अन्त्यं पक्षं वयं रोचयामहे। अन्यथा हि क्वचित् केवलमभिनिष्ठानान्तमेव[४] नामोक्तं विरुध्येत। एवञ्च शर्मादिपदानामुपपदत्वस्वीकार एवान्त्यपक्षा-नुकूल इत्यपि बोध्यम्।

इदं च व्यावहारिकं नाम कृतं कुर्यान्न तद्धितम्[५] इत्यपि धर्मशास्त्रम्। तत्र कृतमित्यस्य यद्यपि बहवोऽर्थाः कृता दृश्यन्ते—(क) कृत्प्रत्ययान्तम्,[६]

---

(१) अत्र स्वरूपग्रहणं पाठानुक्रमश्चादौ मङ्गल्यमन्ते शर्मशब्दः। तथा-चोदाहृतम्। क्षत्रियादिनाम्नां तु नैतत्सम्भवति। रक्षाशब्दस्य स्त्रीलिङ्गस्य श्रवणात् पुंसां सामानाधिकरण्यानुपपत्तेः। तस्मादेको-पक्रमत्वात् समाचाराच्च सर्वत्राग्रहणम्। म० मे० भा० [२३२]

(२) शर्मशब्दः सुखवाचकः, सुखनीयं ब्राह्मणस्य कर्तव्यम्, यथा शुभङ्करः प्रियङ्कर इति। वर्म क्षत्रियस्य। वर्मशब्दश्च शौर्यवचनः, शौर्य-युक्तं क्षत्रियस्य कर्त्तव्यम्। नरवर्मा शशिवर्मा। गुप्तेति वैश्यस्य। गुप्तशब्दश्चाढ्यवचनः। आढ्यत्वाभिधायि वैश्यस्य मणिभद्रः।
पा० गृ० क० भा० [१/१७/४]
शर्म सुखवाचकम्। वर्म शौर्यवाचकम्। गुप्तशब्दश्चाढ्यवचनः।
पा० गृ० ज० भा० [१/१७/४]

(३) ब्राह्मणस्य विप्रस्य पूर्वोक्तलक्षणनामान्ते शर्मेति क्षत्रियस्य पूर्वोक्त-लक्षणनामान्ते वर्मेति वैश्यस्य पूर्वोक्तनामान्ते गुप्तेति पदं कुर्यात्। अथवा ब्राह्मणस्य नाम शर्ममङ्गलप्रतिपादकं कुर्यात्। क्षत्रियस्य वर्म शौर्यरक्षावत्ताप्रतिपादकम्, वैश्यस्य गुप्तेति धनवत्ताप्रतिपादकम्, शूद्रस्य प्रेष्यत्वप्रतिपादकम् इति बोद्धव्यम्। पा० गृ० ह० भा० [१/१७/४]

(४) घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं वा। आश्व०गृ० [१/१५/५-६]

(५) कृतं कुर्यान्न तद्धितम् पा० गृ० [१/१७/२]
कृतं नाम दध्यात्। एतदतद्धितम्। गो० गृ० [२/८/१४-१५]
कृतं कुर्यान्न तद्धितम् --महाभाष्यम् (पस्पशाह्निके)

(६) गो० गृ० ना० भा० [२/८/१४,] पा० गृ० भा० [१/१७/२]

(ख) पितामहादिकृतम्.[१] (ग) ज्योतिःशास्त्रविहितम्,[२] (घ) रामकृष्णादिदेवसम्वन्धि पुराणादौ[३] कृतमिति च, तथापि न तद्धितमित्यत्रोत्तरवाक्ये तद्धितस्य प्रत्ययविशेषार्थकत्वात् कृत्शब्दोऽपि प्रत्ययवचन एव ग्राह्यः। अत एव कर्मभाष्ये प्रथमोऽर्थः प्रत्ययान्तपरक एवोक्तः[४]। प्रकाशेप्ययमेवार्थ उक्तः[५]।

इदं च नाम अवृद्धम् त्रिपुरुषानूकम् अनरिप्रतिष्ठितमिति पतञ्जलिः[६]। तत्र अवृद्धमिति वृद्धभिन्नमित्यर्थः। वृद्धं च नाम तदेव यस्याद्यः स्वरो वृद्धिसंज्ञकः (आ, ऐ, औ इत्येषामन्यतमः), "वृद्धिर्यस्याचामादिस्तद् वृद्धम्"[७] इति पाणिन्यनुशासनात्। त्रिपुरुषानूकम् इत्यस्य च नामकर्तुस्त्रिपुरुषान् पितृपितामहप्रपितामहान् अनुकायत्यभिधत्ते इति त्रिपुरुषानूकम् इतिभावः। अनरिप्रतिष्ठितमित्यस्य च अरौ शत्रौ यन्न प्रतिष्ठितम् इत्यर्थः[८]। यत्तु प्रयोगपारिजाते कपिलसंहितावचने 'पित्रोर्वा नाम शस्यते'[९] इत्युक्तम् तत्रापि नामकर्तुः पितुरेव पित्रोरित्यर्थः न तु शिशोः पित्रोरिति।

अत्रेदमपि ज्ञेयम्—नाम्नि घोषवदाद्यन्तरन्तःस्थत्वादि न नियतम्। अत एव मनुनापि

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्[१०]॥

---

(१) गो० गृ० ना० भा० [२/८/१४,] पा० गृ० भा० [१/१७/२]
(२) पा० गृ० वि० भा० [१ १७ २]
(३) ,, ,, ,,
(४) कृदिति प्रत्ययसंज्ञा, तदन्तं कुर्यात्। अन्ये तु पितामहादिकृतं वर्णयन्ति।
पा० गृ० क० भा० [१/१७/२]
(५) सं० प्र० [पृ० २४२], सं० र० मा० [पृ० ८५५]
(६) महाभाष्यम् (पश्पशाह्निके)
(७) पा० सू० [१/१/७३]
(८) महाभाष्यप्रदीपः (पश्पशाह्निके)
(९) प्रयोगपारिजाते कपिलसंहितावचनम्—

एकादशेऽह्नि विधिवत् नामकुर्यात् कुलोचितम्।
देवतानां विशेषेण पित्रोर्वा नाम शस्यते॥

सं० र० मा० [पृ० ८५५], सं० म० [पृ० २५]

(१०) म० स्मृ० [२ ३१]

इत्यादौ तदनुल्लेखः। अत एव च याज्ञवल्क्येनापि 'अहन्येकादशे नाम'[1] इति सामान्येनैवाभिहितम्।

तत्रापि पुंसां नाम युग्माक्षरकं भवेदिति मतम्। द्वयक्षरं चतुरक्षरं वेति विकल्पेन, अयुग्माक्षरं नाम स्त्रीणामिति वचनेन चेदमेव समर्थ्यते। मेधातिथ्यादयस्तु[2] एकाक्षरत्र्यक्षरादिकमपि पुन्नामोदाहरन्तो नैतन्मतमादृतवन्तः। वैजवापादिगृह्योक्तानुसारेणापि नेयं व्यवस्थेति प्रतीयते। तथापि बहुशास्त्रसम्मतत्वात्प्रथमः पक्षो युक्ततर इति मन्तुं शक्यते।

अत्र 'सु' इत्युपसर्गविशिष्टं नामापि[3] प्रतिष्ठितं भवति इति शास्त्रव्यवस्था। अस्मिंश्च नाम्नि घोषवद्द्वयत्वादिनियमो नादरणीय एव। अस्य नाम्नः प्रतिष्ठितत्वं च नामवतो दीर्घायुष्ट्वादि। उपसर्गग्रहणेन च अप्रातिपदिकस्य केवलस्य 'सु' इत्यस्य नामत्वनिवृत्तिः।

**अथ कन्यानामकरणे विशेषः—**

कन्यानामकरणं प्रकृत्य मनुः—

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥[4]

तथा च सुखोच्चार्यं हिंसार्थरहितम् मनोहरं मङ्गलवाचि दीर्घस्वरान्तमाशीर्वाचकेनोपेतं नाम स्त्रीणां कार्यमिति सिद्ध्यति।

तत्रायुगाक्षरं कुमार्या नामेति बहवः शास्त्रकाराः[5]। आकारान्तमिति

(१) या० स्मृ० [१/१२]
(२) म० मे० भा० [१/३१]
(३) अपि वा यस्मिन् स्वित्युपसर्गः स्यात् तद्धिप्रतिष्ठितमिति विज्ञायते। बौ० गृ० [१/२/२७],
अपि वा यस्मिन् स्वित्युपसर्गः स्यात् तद्धि प्रतिठितमिति हि ब्राह्मणम्। आप० गृ० [६/१४/१०]
(४) म० स्मृ० [२/३३]
(५) अयुगक्षरं कुमार्याः। बौ० गृ० [२/१/३०]
अयुजानि स्त्रीणाम्—आश्व० गृ० [१/१५/९]
अयुजाक्षरं कुमार्याः—आप० गृ० [६/१४/११]
कन्याया अयुग्माक्षरम्—वा० गृ० [२/३.], अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम्। पा० गृ० [१/१७/३], अयुग्दान्तं स्त्रीणाम् गो० गृ० [२/८/१६] त्र्यक्षरमीकारान्तं स्त्रियाः—वैजवापः, सं० प्र० [पृ० २४४], शौनकः—पुंसां युग्माक्षरं नाम स्यात्स्त्रीणामयुगाक्षरम्। सं० प्र० [पृ० २४४]
कारिका —पुंसां युग्माक्षराणि स्युः विपरीतानि योषिताम्। सं० प्र० [पृ० २४४]

केचित्[१] ईकारान्तमित्यपरे[२]। अत्र गोभिलेन विशेष उक्तः —'अयुग् दान्तं स्त्रीणाम्[३]' इति। तथा च यशोदा शर्मदा इत्यादिकान्येव स्त्रीनामानि। अन्ये तु नामातिरिक्तदाकारेण दान्ततामाहुः। तन्मते यशोदादा इत्यादिकं नामस्वरूपं स्यात्[४]। एतच्च न निबन्धेषु क्वापि दृष्टम् इति पूर्वोक्तमवज्ञाय इति मयूखकृतः[५]। स्त्रीणां नाम तद्धितप्रत्ययान्तमपि[६] पारस्कराद्यनुसारेण। सर्वत्र शाखाभेदाद् व्यवस्था बोध्या। अत्र घोषवदाद्यत्वादिनियमो[७] नास्ति। शर्मान्तादिनियमास्त्वत्रापि बोध्याः[८]। अत्रास्माभिः स्वमतं पूर्वमेवोपदर्शितम्।

अत्रेदमपि बोध्यम्—मङ्गल्यं ब्राह्मणस्येत्यादि निर्देशात् पुंसामपि नाम दुःश्रवमशुभार्थम् च न स्यादिति लभ्यत एव। स्त्रीणां तु पुनः शास्त्रे विशिष्ट निषिद्धानि नामानि —नक्षत्राश्रितानि, नद्याश्रितानि, वृक्षाश्रितानि, पर्वताश्रितानि, प्रेष्याश्रितानि, पक्ष्याश्रितानि, पिशाचाश्रितानि अन्यान्यपि गर्हितानि रेफलकारोपान्तानि च। अत एव शास्त्रे ईदृशनाम्नामप्रतिग्रहः प्रकीर्तितो विवाहे[९]। तथा च स्त्रीणां नक्षत्राश्रितं नाम न कार्यम् इति विज्ञायते। अमन्त्रकं च नामकरणं स्त्रीशूद्रयोरित्यत्र तु न पुनः पुनः वक्तव्यं किञ्चिदवशिष्यते।

---

(१) पा० गृ० [१/१७ ३], वा० गृ० [२/२]
(२) वैजवायः, सं० प्र० [पृ० २४४], शंखः—सं० र० मा० [पृ० ८५५]
(३) गो० गृ० [२/८/१६] त्र्यक्षरं दान्तं कुमारीणाम्—मा० गृ० [३/४]
(४) सं० म० [पृ० २५], सं० र० मा० [पृ० ८५६]
(५) सं० म० [पृ० २५]
(६) पा० गृ० [१/१२]
(७) 'पक्षी घोषवदित्यादिरेवकारादनादृतः' इत्याश्वलायनकारिका,
सं० प्र० [पृ० २४४]
(८) सं० प्र० [पृ० २४४]
(९) नक्षत्रनामाः नदीनामाः वृक्षनामाः पर्वतनामाः प्रेष्यनामाः पक्षिनामाः पिशाचनामाश्च गर्हिताः सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत्। बौ० गृ० शे० [२/४/५]

नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्।
न पक्ष्यहिप्रेष्यनाम्नीम् न च भीषणनामिकाम्॥ म० स्मृ० [३/९]

ऋक्षनाम्नीं = आर्द्रा, ज्येष्ठेत्यादिनामिकां, वृक्षनाम्नीं = शिंशेपा आमलकीत्याख्याम्, नदीनाम्नीं = गङ्गा यमुनेत्यादिकां, अन्त्यनामिकां = बर्बरी, शर्बरीत्याख्याम्, पक्षिनाम्नीं = शुकी, सारिकेत्याद्यभिधाम्, सर्पनाम्नीम् = व्याली भुजङ्गीत्यादिकाम्, प्रेष्यनाम्नीम् = चेटी, दासीत्यादिनाम्नीम् इत्युदाहरणानि मेधातिथिभाष्ये।

अत्रैतदेव स्पष्टतरं भवति यत् व्यावहारिके नाम्नि मानवानां समाजगता स्थितिर्नियामिका। अत एव, मङ्गलयमनरिप्रतिष्ठितम् शर्मवदादि नामकरणं शास्त्रेषूक्तम्।[1]

**नामकरणकर्ता--**

सति सम्भवे पितैव[2] नाम करोति इति प्रायेण सर्वत्रैव दृश्यते। अतः पिताऽधिकारी प्रथमः। बौधायनाद्युक्त्यनुसारेण[3] मातापितरौ कुर्यास्तां नामकरणम् इति ज्ञायते। 'नाम[4] चास्मै दद्युः' इति आश्वलायनेन बहुवचनक्रियानिर्देशात् पिता माता बान्धवाश्च समुदिता नामकर्त्तार[5] इति प्रतीयते। पित्राद्यभावे तु पितामहादिरपि तदधिकारीति[6] शास्त्रसिद्धान्तः। जैमिनिना तु आचार्यस्यापि[7] पित्रभावे नामकर्तृत्वमुक्तम्, तदपि न विरुद्धम्। नामकरणे विशेषेण यष्टव्याः--

नामधेये मुनिवसुपिशाचा बहुवत् सदा।
यक्षाश्च पितरश्चैव यष्टव्यास्तिथिदेवताः॥
आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च।
आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च॥
द्वान्द्वान्येतानि बहुवद्दक्षाणां जुहुयात् सदा।
द्वन्द्वद्वयं द्विवच्छेषमत्रशिष्टान्यथैकवत्॥
देवतास्वपि हूयन्ते बहुवत् सर्पपित्रयः।
देवाश्च वसवश्चापि द्विजदेवाश्विनौ सदा[8]।

---

(१) हिन्दू संस्कार [पृ० १०३]
(२) पिता नाम करोति—वैजवायः, सं० प्र० [पृ० २४१]
ब्राह्मणान् भोजयित्वा पिता नाम करोति-पा० गृ० [१/१७/१]
मासनाम प्रकुर्वीत पितैव दशमेहनि-गर्गः। सं० र०मा० [पृ० ८५२]
ततस्तु नाम कुर्वीत पितैव दशमेहनि-विष्णुपुराणम्। सं० प्र०[पृ० २४४]
(३) दशम्यां द्वादश्यां वा मातापितरौ... पुत्रस्य नामधेयस्य निदधीयाताम्। बौ० गृ० शे० [१/११,१]
पुत्रस्यनाम दधाति पिता मातेति। आ० गृ० [६/१४/४]
पिता माता च पुत्रस्य नाम दध्यात्-वा० गृ० [२/१]
(४) आश्व० गृ० १/१५/४
(५) सं० प्र० पृ० २४१
(६) शंखः—पिता नाम कुर्यादन्योऽपि वा कुलवृद्धः। सं० प्र० [पृ० २४५]
(७) पिता नामकुर्यादाचार्यो वा। जै० गृ० [१/९]
(८) कर्मप्रदीपः [३/६/९-१२]

# (६) निष्क्रमणम्

सुरक्षार्थं प्रसूतिकागृहे किञ्चित् कालं स्थापितं शिशुं नियतकाले एव बहिरानयति। न तु यदा कदापि। एष एव संस्कारः प्रसूति-गृहात्प्रथमनिर्गमनात्मकः[१] निष्क्रमणमिति कथ्यते।

अस्य संस्कारस्य वेदसंहितायाम् ब्राह्मणग्रन्थादौ वा न स्पष्टमुल्लेखः। अयमत एव सूत्रकालिक एव संस्कार इति प्रतीयते। अत्र संस्कारे निष्क्रमणानन्तरं सूर्यदर्शनं कारयति इति पारस्करे[२]। गोभिले[३] पुनः चन्द्रदर्शनस्य निर्देशः। यमेन[४] पुनरुभयं समाहृतम्। अत एव कल्पतरौ लक्ष्मीधरोप्येवमेवाह।

**निष्क्रमणकालः--**

तत्र निष्क्रमणं द्वादशेऽहनि कर्तव्यम् इत्येकः पक्षः[५]। जन्मतः तृतीये

---

(१) अथ निष्क्रमणं नाम गृहात् प्रथमनिर्गमः।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः॥ इति बृहस्पतिः।
सं० र० म० [पृ० ८८६]

(२) सूर्यमुदीक्षयति तच्चक्षुरिति। पा० गृ० सू० [१/१७/६]

(३) गो० गृ० [२/८/६-७]

(४) ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम्, इति यमः।
नि० सि० [पृ० ५१८], सं० प्र० [पृ० २५०]
'तस्मात् स्वस्वविधानतोऽर्कशशिनोरथं शिशुं दाययेत्' इति कृत्यचिन्तामणौ।
श्रीधरीये-मासे तृतीये दिवसे दिनेशं शिशुं चतुर्थे शशिनं च धेनुम्।
विलोकयित्वा च विधिप्रयुक्ते काले गृहान्निष्क्रमणं विदध्यात्॥
सं० र० मा० [पृ० ८८६], सं० प्र० [पृ० २५०]

(५) वराहे—द्वादशेऽहनि कर्तव्यं शिशोर्निष्क्रमणं गृहात्॥ सं० र० मा० [पृ० ८८६]
भविष्ये-द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात्॥ सं० प्र० [पृ० २५०]
बृहस्पतिः—यात्रोक्तसमये मासि तृतीये द्वादशेऽह्नि वै॥ सं०प्र०[पृ० २५०]

पक्षे इति लौगाक्षिः। एतच्च प्रकाशोद्धृतलौगाक्षिपाठानुसारेण[1]। मदनपारिजातस्थलौगाक्षिपाठादरे तु तृतीये मास्येवेति[2] विज्ञेयम्। अयमेव पाठो युक्ततरः प्रतीयते। अतएवान्यत्रापि[3] तृतीये मासि निष्क्रमणमुक्तं संगच्छते। चतुर्थे मासीदं कर्म[4] इत्यपि बहूनां धर्मशास्त्रकाराणां मतम्। केचन

---

(१) लौगाक्षिः—तृतीयेऽर्कमासे दर्शनमादित्यस्येति ॥ सं॰ प्र॰ [पृ॰ २५०]

(२) लौगाक्षिः—तृतीये मासे आदित्यस्य दर्शनम्। इति मदनपारिजाते।
ज्योतिर्निबन्धे–तृतीये वा चतुर्थे वा मासि सूर्यस्य दर्शनम् ॥ नि॰ सि॰ [पृ॰ ५१८]

(३) यमः—ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ॥ सं॰ प्र॰ [पृ॰ २५०], नि॰ सि॰ [पृ॰ ५१८]
श्रीधरीये–मासे तृतीये दिवसे दिनेशम् ॥ सं॰ र॰ मा॰ [पृ॰ ८८६], सं॰प्र॰ [पृ॰ २५०]
राजमार्तण्डे–मासे तृतीये शशिवृद्धिपक्षे–निष्कासनं सौख्यकरं शिशूनाम् ॥ सं॰ प्र॰ [पृ॰ २५१]
शंखलिखितौ—तृतीये मासि निष्क्रमणिका ॥ सं॰ म॰ [२७], सं॰ प्र॰ [पृ॰ २५०] मदनपारिजाते दीपिकायाम्—

सदृष्टेऽथ चतुर्थमासि यदि वा मासे तृतीये विधा-
वक्षीणे शुभदे शिशोरभिनवं निष्क्रामणं कारयेत् ॥

वृहस्पतिः—यात्रोक्तसमये मासि तृतीये....॥ सं॰ प्र॰ [पृ॰ २५०]

(४) चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥ म॰ स्मृ॰ [२/३४]
यमः—उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने ॥ सं॰ प्र॰ [पृ॰ २५१]
पारिजाते शौनकः–चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं शिशोः ॥
ज्योतिर्निबन्धे–तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् ॥ नि॰ सि॰ [पृ॰ ५१८]
आश्वलायनः—चतुर्थे मासि कार्यं स्यादुपनिष्क्रमणं शिशोः ॥
शङ्खः—चतुर्थे मासि कर्तव्यं बालस्यादित्यदर्शनम् ॥ सं॰ म॰ [पृ॰ २७]
वृहस्पतिः–गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत् ॥ सं॰प्र॰ [पृ॰ २५१]
शौनकः—मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् ॥ सं॰प्र॰ [पृ॰२५१]
चतुर्थे मासि निष्क्रयः ॥ या॰ स्मृ॰ [२/१२]
विष्णुधर्मोत्तरे–चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥ सं॰प्र॰[२५३],
चतुर्थे मासि निष्क्रमणिका ॥ पा॰ गृ॰ [१/१७/५]
मानवगृह्यसूत्रेऽपि—अथादित्यदर्शनं चतुर्थे मासि ॥
चतुर्थे मास्युपनिष्क्रमणम् ॥ बौ॰ गृ॰ [२/२/१]
गृह्यपरिशिष्टेऽपि–निष्क्रमणं चतुर्थे मासि ॥

षष्ठेऽपि[1] मासे निष्क्रमणमिच्छन्ति । एतदेव मतं मदनरत्नोक्तवाक्यात् अन्नप्राशनकाले निष्क्रमणविधायकात् अपि समर्थ्यते[2], षष्ठे एवान्नप्राशनस्य प्रायेण विहितत्वात् । अत्र वयमभ्युपगच्छामः—चतुर्थे मासि निष्क्रमणं बहूनामाचार्याणामनुरोधेन मुख्यम् अन्यत्र तु शाखाभेदाद्विकल्पः । अन्नप्राशनकाले तदनुष्ठानं तु पूर्वस्याभावे सत्येवेति ।

**प्रशस्तः पक्षः--**

निष्क्रमणे शुक्लपक्षः शुभः[3], तदसम्भवे तु अन्त्यत्रिकमपहाय कृष्ण-पक्षोऽपि ग्राह्य एव ।

**प्रशस्तानि दिनानि--**

अत्र दिवसानुपादानात् दैवज्ञोदितं तन्मासस्थं शुभं दिनं ग्राह्यमिति मयूखकृत्[4] । मुहूर्त्तसंग्रहवाक्याच्चैतदवगम्यते[5] । अन्यत्र[6] तु बुधबृहस्पति-शुक्राणां दिनानि कथितानि । संस्काररत्नमालायान्तु चन्द्रबुधगुरुशुक्रान्यतमे वारे इत्युक्तम्[7] । पारिजातस्थदीपिकायान्तु 'भौमशनीतरे' इत्युक्तत्वात् रविदिनमपि ग्राह्यमिति प्रतीयते । भिन्नास्तिथयो निष्क्रमणे प्रशस्ता इति

---

(१) आश्वलायनः--षष्ठे वा देवतास्थानमियादादाय तं शिशुम् ॥
सं० प्र० [पृ० २५१]

शौनकः—मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् ॥
सं० प्र० [पृ० २५१]

(२) मदनरत्ने—अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् ॥
नि० सि० [पृ० ५१८], पा० गृ० ग० भा० [१/१७], सं० प्र० [पृ० २५१]

(३) मुहूर्त्तसंग्रहे—शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ॥
सं० र० मा० पृ० ८८६, सं० प्र० पृ० २५१, सं० म० पृ० २७

राजमार्त्तण्डे—मासे तृतीये शशिवृद्धिपक्षे ॥ सं० प्र० [पृ० २५१]

गृह्यपरिशिष्टे–आपूर्यमाणपक्षे........॥ सं० र० मा० [पृ० ८८८]

(४) सं० म० [पृ० २७]

(५) सतान्तु वारवर्गाश्च शुभदाः सूदयास्तथा ।
उपनिष्क्रमणे शस्ताः........। सं० र० मा० [पृ० ८८६]

(६) बृहस्पतिः–जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया । सं० प्र० [पृ० २५२]

(७) सं० र० मा० [पृ० ८८८]

ज्ञायते। व्यासेन[1] तु रिक्तामात्रं वर्ज्यमित्युक्तम्। मदनपारिजातोद्धृतदीपिकायामपि 'अरिक्ते तिथौ' इत्येवोक्तम्। तत्र गुणोपसंहारेण मालोक्तवर्ज्या रिक्तातिरिक्तास्तिथयोऽपि ग्राह्या एवेति वयमवगच्छामः। अत एव मुहूर्त्तसंग्रहेऽपि 'रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत्[2]' इति कथितम्।

**अथ नक्षत्राणि--**

तत्राश्विनीरेवतीहस्तधनिष्ठारोहिणीश्रवणपुष्यमृगशिर उत्तरात्रयं पुनर्वसुश्च प्रशस्तनक्षत्राणीति बृहस्पतिः[3]। अनुराधापुष्यपुनर्वसुरेवत्यश्विनीहस्तज्येष्ठामृगशिरस्सु इति व्यासः[4]। मुहूर्त्तसंग्रहे[5] तु उत्तरफल्गुनीहस्तचित्रास्वातयः, उत्तराषाढश्रवणधनिष्ठाः, पूर्वभाद्रोत्तरभाद्रपदरेवत्यः, पुष्यपुनर्वस्वनुराधाः रोहिणी चैतानि नक्षत्राणि शुभानि, मेषवृषवृश्चिकमूलाश्लेषादयश्च वर्ज्यानि नक्षत्राणीत्युक्तम्। संस्कारप्रकाशस्थं तु मुहूर्त्तसंग्रहपाठान्तरम्[6]---

चत्वारि विश्वभादीनि तिस्रोहिर्बुध्न्यभाद्बुधः।

---

सं० र० मा० [पृ० ८८८]

(१) व्यासः—कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ शुक्रेऽप्यरिक्तातिथौ।
नि० सि० [पृ० ५१८], पा० गृ० ग० भा० [१/१७]

(२) रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत्। सं० र० मा० [८८६]

(३) बृहस्पतिः—

अश्विनी रेवती हस्तो धनिष्ठा रोहिणी तथा।
श्रवणं पुष्यसंयुक्तं मृगेणोत्तरफल्गुनी॥
अनुराधोत्तराषाढा तथा चैव पुनर्वसुः।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ॥
सं० प्र० [पृ० २५२]

[४] व्यासः- मैत्रे पुष्यपुनर्वसुप्रथमभे पौष्णेऽनुकूले विधौ
हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च।
पा० गृ० ग० भा० [१/१७], नि० सि० [पृ० ५१८]

[५] चत्वार्यर्यमतस्त्रीणि वैश्वास्त्रीणि च बुध्यभात्।
मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः॥
वृषालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च।

यार्यमत उत्तरफल्गुनीतः चत्वारि वैश्वादुत्तराषाढतस्त्रीणि, बुध्यभादुत्तरभाद्रपदतस्त्रीणि, आदित्यं पुनर्वसुः। अलिर्वृश्चिकः, अधोमुखानि—मूलाश्लेषामिश्रोग्राणि। सं० र० मा० [पृ० ८८६-८७]

[६] चतुरस्रे शुचौ देशे गोमयेनोपलेपिते।
धान्यपुञ्जे समासीनं बालं बालामथापि वा। बृहस्पतिः, सं० प्र० [पृ० २५५]

**अथ निष्क्रमणस्वरूपम्--**

तत्र प्रथमं चतुरस्रे प्राङ्गणे गोमयेनोपलिप्ते धान्यपुञ्जे बालमादायोपवेशयति माता पिता वा। ततश्च भूषणभूषितं शिशुम् गृहाद्देवतायतनं नयेत्। तदनन्तरं तत्र वाद्यपुरःसरं देवतार्चनं सम्पाद्य ब्राह्मणान् भोजयित्वा स्वस्तिवाचनपूर्वकं शकुन्तदेवताकं[1] सूक्तद्वयम् जपेत् इत्याश्वलायनः[2]। विष्णुधर्मोत्तरे तु दिशां दिक्पालानां चन्द्रसूर्ययोश्च गगनस्य वासुदेवस्य च पूजनं विधेयम् पूर्वम्। ततः वाद्यस्वस्त्ययनादिभिः सार्धं धात्री स्वयमप्यलंकृता बालमादाय गृहाद् वहिर्नयेत्। ततो द्विजानादर्शपूर्णानि मङ्गलानि[3] चाष्टविधानि पुरो

[१] कनिक्रदज्जनुषं प्रब्रुवाण इर्यर्ति वाचरितेव नावम्।
सुमङ्गलश्च शकुने भवासि मा त्वा का चिदभि मा विश्वा विदत॥
मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विदिदषुमान् वीरो अस्ता।
पित्र्यामनु प्रदिशं कनिक्रदत् सुमङ्गलो भद्रवादी वदेह॥
अव कुन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते।
मा नः स्तेन ईशत मावशंसौ वृहद्वदेम विदमे सुवीराः॥
ऋ० वे० [२/४२/१-३]
प्रदक्षिणिदभिगृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः।
उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति॥
उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इस सवनेषु शंससि।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद विश्वतो नः शकुने पुण्यमावद।
आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः।
यदुत्पतन् वदसि कर्करिर्यथा वृहद् वदेम विदथे सुवीराः।
( इमे एवं शकुन्तदेवताके सूक्ते ) ऋ० वे० [२/४३/१-३]

[२] नयेदाकल्पकैः सम्यग्देवतायतनं गृहात्।
अभ्यर्च्य देवतामूर्ति पञ्चघोषपुरस्सरम्॥
भोजयित्वा द्विजान् गेहे स्वस्तिवाचनमाचरेत्।
शाकुन्ते प्रजयेत् सूक्ते शिशोर्निष्क्रमणे पिता॥ सं० प्र० [पृ० २५३]

[३] विधिरत्ने–
दर्पणः कलशः कन्या तथा सुमनसोऽक्षताः।
दीपमाला ध्वजो लाजाः सम्प्रोक्तं मङ्गलाष्टकम्॥
विवाहे निष्क्रमे कार्ये वृद्धौ पूर्त्ते समागमे।
उत्सवेषु च यात्रायां प्रशस्तं मङ्गलाष्टकम्॥
सं० र० मा० पृ० [८८७], सं० प्र० [पृ० २५]

नयेत्[1]।

शौनकस्त्वाह[2]—गृहान्निष्क्रम्य शिशुं देवतालयं नीत्वा प्रदक्षिणं कारयित्वा देवतामाराध्य प्रणमय्य च शिशुं तत्रस्थैर्द्विजादिभिरभिनन्द्य ततः पूर्वं मातुलादिसमासन्नवन्धोः गृहं प्रापयेत् । तत्र चोपहारादिभिः शिशुलालनात् पश्चात् कुमारं स्वगृहं प्रापयेत्। अत्र सामान्येन पितुरधिकारात् पित्रैवैतत्सर्वं कर्तव्यमिति स्थितिः । बृहस्पतिना तु कश्चिद्विशेष उक्त[3]:

---

(१) चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
दिगीशानां दिशां चैव तथा चन्द्रार्कयोर्द्विजः ॥
पूजनं वासुदेवस्य गगनस्य च कारयेत् ।
ततस्त्वलंकृता धात्री वालमादाय पूजितम् ॥
बहिर्निष्कासयेद् गेहात् शंखपुण्याहनिःस्वनैः ।
द्विजांश्चादर्शपूर्वाणि मङ्गलानि पुरो नयेत् ।।सं०प्र०[पृ०२५३-५४]

(२) शौनकः—

निर्गमय्य गृहादेनं नीत्वा वा देवतालयम ।
ततः प्रदक्षिणं कृत्वा बालं तं देवतालये ॥
गन्धमाल्यादिभिस्तत्र पूजयित्वा तु देवताम् ।
प्रणमय्य च तं बालं ततो देवालयस्थितैः ॥
विद्वद्भिर्ब्राह्मणैराशीर्वादाद्यैरभिनन्दितम् ।
परिगृह्य ततः स्थानान्निष्क्रमय्य ततः शिशुम् ।
मातुलादेः समासन्नवन्धोः प्रापय्य मन्दिरम् ॥
तत्रोपहारदानाद्यैराशीर्भिश्चाभिलालितम् ।
कुमारं परिगृह्यैनं प्रापयेत् स्वगृहं ततः ॥ सं० प्र० [पृ० २५४]

(३) विशेषान्तरमाह बृहस्पतिः—

अलंकृत्य शिशुं सम्यगभ्यर्च्य धवलाक्षतैः ।
स्वस्तिवाच्य समारूढवाहनं निर्णयेद् गृहात् ॥
मातुलो वा वहेत्तत्र निर्वाहनशिशुं स्वयम् ।
शिशुना सह मित्राणि निर्यायुश्च गृहात्स्वयम् ॥
सह दुन्दुभिघोषैश्च वाद्यशब्दसमन्वितैः ।
चतुरस्रे शुचौ देशे गोमयेनोपलेपिते ॥
धान्यपुञ्जे समासीनं बालं बालामथापि वा ।
अर्चयेद् गन्धपुष्पाद्यैस्तस्मिन् मूर्ध्नि ललाटके ॥
अस्य रक्षां ततः कृत्वा मृतसंजीवनं जपेत् ।
तत्रार्चयेद् गणेशानं भूतेशानं तथैव च ॥
भक्ष्यैर्विचित्रैः सफलैः शिशूनभ्यर्चयेद् बुधः ॥
सं० प्र० [पृ० २५४-५५]

शिशुमलंकृत्य धवलाक्षतादिभिः पूजोपकरणैस्समभ्यर्च्य स्वस्तिवाचनं कृत्वा कारयित्वा वा समारूढवाहनं शिशुं गृहात् निष्क्रामयेत्। अथवा मातुल एव शिशुं वहेत्। शिशुना सह तन्मित्राण्यपि अनुगच्छेयुः। वाद्यादिकमपि कारयेत्। ततश्च गोमयोपलिप्तचतुरस्रे स्थले धान्यपुञ्जे शिशुं समावेश्य गन्धपुष्पाद्यैस्तं मूर्ध्नि ललाटे च समर्चयेत्। ततश्च मृत्युञ्जयमन्त्रं जपेत्। गणेशादिपूजनं चान्ते विधाय शिशून् समभ्यर्चन्नेव कर्म समापयेत्।

विधिरत्ने[1] तु दिक्पालादिपूजनम्, ब्राह्मणभोजनम्, शिशुसंरक्षणार्थं देवताप्रार्थनम्, तदनन्तरं भूषितस्य बालस्य बाह्य देवालयं प्रति नयनं देवपूजनं च, ततो गणेशादिपूजनम्, ततश्च देवप्रदक्षिणापूर्वकं गृहागमनमिति प्रक्रियोक्ता।

कारिकायान्तु देवप्रदक्षिणादनन्तरं स्वगृहानयनम् मातृष्वसृगृहानयनम् मातुलाद्यन्तरङ्गसम्बन्धिगृहानयनं वा[2] विकल्पेनोक्तम्। अत्रैव गृह्य-

---

(१) विधिरत्ने—

दिक्कालचन्द्रसूर्याणाम् दिशां चैव यथाक्रमम्।
विधाय पूजनं विप्रान् सम्भोज्य तदनन्तरम्॥
शिशोः संरक्षणार्थं तु देवान् संप्रार्थयेत्ततः।
गृहीत्वा भूषितं बालं बाह्य देवालयं व्रजेत्॥
ततः सम्पूज्य तं देवं रक्षां कुर्याच्छिशोस्ततः।
भूतेशानं गणेशं च पूजयित्वा प्रतर्पयेत्॥
देवं प्रदक्षिणीकृत्य प्रणम्य गृहमाव्रजेत्॥

सं० र० मा० [पृ० ८८७]

(२) कारिकायां विशेष :—

आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतागृहम्।
अभ्यर्च्य देवतां सम्यगाशिषो वाचयेदथ॥
कृत्वा प्रदक्षिणं गेहमानयन्ति ततः स्वकम्।
मातृष्वसृगृहं वापि मातुलादेर्गृहं नयेत्॥
तदाशीर्वादाद्यैः स्यात् दीर्घायुरभिनन्दितः।
जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः॥

सं० म० [पृ० २७]

परिशिष्टकारस्यापि[३] सम्प्रतिपत्तिः। बौधायनेन[२] तु सहोमप्रयोग उक्तः। तत्रैवं शाखादिभेदाद्व्यवस्था।

## निष्क्रमणकर्तृनिर्णयः—

अत्रापि संस्कारान्तरवत् मुख्यं कर्तृत्वं पितुरेव। अत एव पूर्वोद्धृते आश्वलायनवाक्ये—'शाकुन्ते प्रजयेत् सूक्ते शिशोर्निष्क्रमणे पिता[३]' इत्युक्तम्। गोभिलेनाप्यत्रापामञ्जलिं पूरयित्वा पितोपतिष्ठत[४] इत्युक्तम्। परन्तु यथा कथञ्चिदभावे असामर्थ्ये वा पितुः पितामहादिरपि कुर्यादेव निष्क्रमणम् न त्वेव न कुर्यादिति स्थितिः। अत एव शौनकेन पित्रादिरित्युपदिष्टम्[५]।

इदं कर्म स्त्रीणामपि कार्यमेव। किन्त्वमन्त्रकमेवैतदिति विशेषः। अत एव "चतुर्थे मासि निष्क्रमः" इत्युपक्रमे "तूष्णीमेताः क्रियाः स्त्रीणाम्" इति याज्ञवल्क्येनाप्युक्तम्[६]। मनुनापि संस्कारोपक्रमे—

---

(१) एवं निष्क्रमणं चतुर्थेमास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे स्वस्ति वाचयित्वा सुस्नातमलङ्कृतं कुमारमादाय सहभार्याज्ञातिबान्धवैः पुरन्ध्रीभिश्च मङ्गलतूर्यघोषेण सशिशुर्गृहान्निष्क्रम्य देवतायतनमेत्य तां देवतामुपहारैरभ्यर्च्य आशिषो वाचयित्वायतनं प्रदक्षिणं परीत्य गृहमियात् सम्बन्धिगृहान् वा नीत्वा नयेत्॥

सं० र० मा० [पृ० ८८८]

(२) चतुर्थे मास्युपनिष्क्रमणम्। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा स्वस्त्यात्रेयं जुहोति—'स्वस्तिनो मिमीताम्..............'. इत्यष्टाभिरनुच्छन्दसम्।....... अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृतान्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा प्रदक्षिणीकृत्य स्वान् गृहान् आनयति॥

बौ० गृ० [२/२/१-१२]

(३) सं० प्र० [पृ० २५५]

(४) गो० गृ० [२/८/६]

(५) विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः। शौनकः, सं० प्र० [पृ० २५५]

(६) या० स्मृ० [१/१२]

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्[१] ॥ इत्यभिहितम् ।

## अथ निष्क्रमणनिमित्तकनान्दीश्राद्धविमर्शः—

अत्र निष्क्रमणात् पूर्वम् अपि नान्दीश्राद्धं कार्यमेव इत्याश्वलायनः वचनेन[२] नान्दीश्राद्धप्रसङ्गेऽभिधानात् । विष्णुपुराणे प्येवमेवोक्तम्[३] । कात्यायनोऽप्येवमेवाह[४] । परन्तु—

'सूर्येन्दोः कर्मणी ये च तयोः श्राद्धं न विद्यते'

इति छन्दोगपरिशिष्टवचनात् छन्दोगानामेतन्न भवतीति कल्पतरौ लक्ष्मीधरोपाध्यायाः[५] ।

## निष्क्रमणसंस्कारफलम्—

इदं च कर्म शिशोरायुः-श्रीवर्धनं भवति । एतदननुष्ठाने तूभयमेव तस्य नश्यतीति बृहस्पतिः प्राह[६] । एतच्च फलं सामान्यफलातिरिक्तमेव न त्वेतावदेव फलम् इति भ्रमितव्यम्, "एवमेनं शमं याति बीजगर्भसमुद्भवम्[७]" इत्यादिप्रामाण्यात् ।

---

(१) म० स्मृ० [२.६६]
(२) अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते ॥ सं० प्र० [पृ० २५५]
(३) जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥ सं० प्र० [पृ० २५६]
(४) स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु ॥ सं० प्र० [पृ० २५६]
(५) नि० सि० [पृ० ५/८], सं० प्र० [पृ० २५६], पा० गृ० ग० भा० [१/१७]
(६) अथ निष्क्रमणं नाम गृहात् प्रथमनिर्गमः ।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ।
कृते सम्पद्विवृद्धिः स्यादायुर्वर्धनमेव च ॥
सं० प्र० [पृ० २५६], सं० र० मा० [पृ० ८८६]
(७) या० स्मृ० [१/१३]

# (७) अन्नप्राशनम्

अन्नप्राशनमिति च यौगिकं कर्मनामधेयम् । अन्नस्य प्राशनं यस्मिन् कर्मणि तदिति च योगः ।

**अन्नप्राशनकाल :—**

जन्मतः षष्ठे मास्यन्नप्राशनमिति पारस्करादयः[1] स चायं मासः सौरोऽ[2]थवा सावनः[3] । मनुस्तु षष्ठेऽथवा कुलानुसारेणान्यत्रापीष्टसमयेऽन्नप्राशनमिच्छति[4] । यमस्तु षष्ठेऽष्ठमे कुलेष्टे वेति मन्यते[5] । षष्ठेऽष्ठमे दशमे द्वादशे वेति आश्वलाययः[6] । पञ्चमे षष्ठे सप्तमे अष्टमे नवमे दशमे एकादशे द्वादशे

---

(१) षष्ठे मासेऽन्नप्राशनम् ॥ पा० गृ० [१/१८/१]
षष्ठे मास्यन्नप्राशनम् ॥ लौ० गृ० [३९/१]
षष्ठे मासेऽन्नप्राशनम् ॥ का० गृ० [५/२]
षष्ठे मास्यन्नप्राशनम् ॥ आश्व० गृ० [१/१६/१]
जन्मतोऽधिषष्ठे मासि.........कुमारं प्राशयेत् ॥ आप० गृ० [६/१ ६१]
षष्ठे मास्यन्नप्राशनम । वौ० गृ० [२/३/१]
अथ षष्ठेऽमास्यन्नप्राशनम ॥ हि० गृ०. सं० र० मा० [पृ० ८९१]
षष्ठेऽन्नप्राशनं मासि ॥ या० स्मृ०

(२) नारद :—जन्मतो मासि षष्ठे स्यात् सौरेणोत्तममन्नदम् ॥
सं० प्र० [पृ० २६७], सं० र० मा० [पृ० ८९२]

(३) वसिष्ठ :— सावनविधाविह मासि षष्ठे ॥
सं० र० मा० [पृ० ८९२], सं० प्र० [पृ० २६९]

(४) षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं शुभम् ॥ म० स्मृ०

(५) ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि ।
अष्टमे वाऽथ कर्त्तव्य यद्वेष्टं मङ्गलं कुले ॥ यमः ॥
सं० प्र० [पृ० २६७], सं० म० [पृ० २८]

(६) आश्वलायनः—षष्ठेऽन्नप्राशनं प्रोक्तं समयास्युत्तरेऽथ वा ।
प्राग्वा चतुर्थे तस्मात्तत् प्रागापन्नोन कारयेत् ॥
सं० प्र० [पृ० २६७]

संवत्सरे पूर्ण वेति नारदः[१]। पञ्चमे षष्ठे वेति मानवगृह्यसूत्रम्[२]। पञ्चे जातेषु दन्तेषु वेति लौगाक्षिः[३]। जाते दन्ते इति काठकवाराहगृह्यसूत्रयोः[४]। जाते दन्ते संवत्सरे वेति शंखः[५]। तत्र संवत्सरे इत्यस्य पूर्ण इति शेषो बोध्यः। बृहस्पतिस्तु—

पञ्चाशद्दिवसात् त्रिघ्नात् पश्चात् त्रिह्यतषष्ठ्यहात्।
अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवसूचिरे[६]।

इत्याह। तथा च त्रिघ्नात् पञ्चाशद्दिवसात्=सार्धशततमदिवसात् पश्चात् अर्वाक् च त्रिहतषष्ट्यहात्=साशीतिशततमदिवसात् अन्नप्राशनमुत्तमम्। एतदपि षष्ठे मास एव पर्यवस्यति। राजमार्त्तण्डेऽपि षष्ठे एवेत्युक्तम्[७]।

---

(१) नारदः—जन्मतो मासि षष्ठे स्यात् सौरेणोत्तममन्नदम्।
तदभावेऽष्टमे मासि नवमे दशमेऽपि वा॥
द्वादशे वापि कुर्वीत प्रथमान्नाशनं परम्।
संवत्सरे वा सम्पूर्णे केचिदिच्छन्ति पण्डिताः॥
सं० प्र० मा० [पृ० ६९२]

षष्ठे मासेऽष्टमे वाऽथ पुंसां स्त्रीणां तु पञ्चमे।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम्॥
सं० प्र० [पृ० २६९]
नि० सि० [पृ० ५२०]

(२) अथान्नप्राशनम् पञ्चमे षष्ठे वा मासि॥ मा० गृ०

(३) षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा पूर्ण संवत्सरे वा॥
सं० म० [पृ० २८]

(४) अन्नप्राशनं जातेषु दन्तेषु वा॥ का० गृ० [५/३]
(अन्नप्राशनञ्च) जाते दन्ते॥ वा० गृ० [३/१]

(५) संवत्सरेऽन्नप्राशनं जातेषु दन्तेषु वा॥ सं० र० मा० [पृ० ८९२]

(६) सं० प्र० [पृ० २६८]

(७) वृद्धगार्ग्यः—षष्ठे मासि प्रकुर्वीत बालस्यैवान्नभोजनम्।
तदभावेऽष्टमेऽवापि कुर्यात् संवत्सरेऽपि वा॥
सं प्र० [पृ० २६८]

नारदः जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम्।
तदभावऽष्टमे मासे नवमे दशमेऽपि वा॥
द्वादशे वापि कुर्वीत प्रथमान्नाशनं परम्।
संवत्सरे वा सम्पूर्णे केचिदिच्छन्ति पण्डिताः॥
सं० र० मा० [पृ० ८९२], सं० प्र० [पृ० २६७-६८]

तथा चेदं विज्ञायते यत् षष्ठो मास उत्तमोऽन्नप्राशने इतरे च मासाः तदभावे यथासम्भवं ग्राह्याः[1]।

तत्रेयं व्यवस्थाऽपि विज्ञातव्या–पुंसामन्नप्राशनं युग्मे मासि पूर्वपूर्वाभाव उत्तरोत्तरे स्त्रीणान्तु अयुग्मे मास[2] इति।

अत्रापि मलमासादिदोषो न विद्यते। शुक्रास्तादिदोषोऽपि नैव[3] भवति। पक्षश्चात्र विशेषेण शुक्ल एव, तदभावे तु अन्त्यत्रिकमपहाय कृष्णोऽपि[4]।

तिथयोऽप्यत्र शुभा ग्राह्याः। तत्र द्वितीया तृतीया पञ्चमी सप्तमी दशमी त्रयोदशी चेति[5] लघुनारदः। नवमीपर्ववर्जिताः दशम्या सह अन्या

---

(१) षष्ठे मासि शुभे चन्द्रे पक्षे चाप्यसितेतरे।
अन्नस्य प्राशनं कुर्याद्दिवैव प्रथमं शिशोः॥ राजमार्त्तण्डे।
सं० प्र० [पृ० २६९]
श्रीपतिः—षष्ठे मासे प्राशनं दारकाणाम्।
लल्लोऽपि—षष्ठे मासि विधेयं पुंसोन्नम्। सं प्र० [पृ० २६८]

(२) गर्गः—वरस्यान्नाशने युग्मं स्त्रीणामन्नाशनेऽयुजम्॥
सं० र० मा० [पृ० ६९२]
वसिष्ठः—युग्मेषु मासेषु च सत्सु पुंसां संवत्सरे वा नियतुं शिशूनाम्।
अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत्॥
श्रीपतिः—षष्ठे मासे प्राशनं दारकाणामन्यस्मिंस्तत् कन्यकानां विधेयम्।
लल्लोऽपि-षष्ठे मासि विधेयं पुंसोऽन्नं तु स्त्रियोऽन्यस्मिन्॥
सं० प्र० [ पृ० २६८ ]

(३) वसिष्ठ :—बालान्नभोजनविधौ गुरुशुक्रमौढ्यम्।
मासप्रयुक्तमशुभं मलमासदोषः॥
नास्त्यत्र..........................॥ सं० र० मा० [ पृ० ६९२ ],
सं० प्र० [ पृ० २६९ ]

(४) अन्नप्राशनमापूर्यमाणपक्षे—सं० र० मा० [ पृ० ८९१ ]
नारद :–पक्षयोरुभयोरुक्तं कृष्णो चान्त्यत्रिकं विना॥
सं० प्र० [ पृ० २६९ ]

(५) लघुनारदः–द्वितीया च तृतीया च पञ्चमी सप्तमी तथा।
त्रयोदशी च दशमी प्राशने तिथयः शुभाः॥ सं० प्र० [पृ० २७०]

अयुग्मास्तिथयः प्रशस्ता इति च नारदः[१]। रिक्तां ( चतुर्थीनवमीचतुर्दशीः ) नन्दां ( प्रतिपत्षष्ठ्येकादशीः ) अष्टमीद्वादश्यौ च परित्यज्यान्यासु तिथिषु कार्यम् इत्यपि[२] लघुनारदेनोक्तम् ।' रघुनन्दनोद्धृतकृत्यचिन्तामणौ तु द्वादशीसप्तमीनन्दारिक्तापञ्चपर्वसु अन्नप्राशनं निषिद्धतयोक्तम्[३]। चतुर्थी षष्ठी अष्टमी नवमी द्वादशी चतुर्दशी च वर्ज्येति श्रीधरीये[४]।

सोमबुधगुरुशुक्रवासराश्चात्र प्रशस्ताः[५]। रविसोमबुधगुरुवासरा इति संस्कारतत्त्वोद्धृतभुजबलभीमे[६]। परन्तु बृहस्पतिस्तु रविभौमयोः शनेश्च प्रतिषेधमाह[७]। तत्र वाराधिपस्य स्वोच्चमित्रगृहे वर्त्तमानत्वे सति ख्यादिनिषिद्धदिनान्यपि शुभानीति[८] व्यवस्था नारदेनोक्ता। अतो वसिष्ठेन यः स.मोऽपि[९] प्रतिषिद्धस्तत्रापीयमेव नारदोक्ता व्यवस्था विज्ञेया। यद्वा

---

(१) आजाश्च तिथयः श्रेष्ठा नवमीपर्ववर्जिताः ।
युग्मेषु दशमी प्रोक्ता दिवतीया चान्नभोजने ॥ नारदः। सं० प्र० [ पृ० २६९ ]

(२) पञ्चपर्वसु रिक्तायां नन्दायामाद्यभोजनम् ।
बलमायुर्यशो हन्ति सप्तम्यां चेति केचन ॥ सं० प्र० [ पृ० २७० ]

(३) द्वादशीसप्तमीनन्दारिक्तासु पञ्चपर्वसु ।
बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम् ॥ सं० त० [ ६१५ ]

(४) छिद्रां विहाय नवमीं तिथयः शुभाः स्युः ॥ नि० सि० [ पृ० ५२० ]

(५) बुधशुक्रगुरूणान्तु वारा बालाशने शुभाः ।
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ॥ सं० प्र० [ पृ० २७० ]

(६) सौम्यादित्यसितेन्दुजीवदिवसे- सं० त० [ ६१६ ]

(७) पक्षच्छिद्रां च नवमीं यत्नेनैव विवर्जयेत् ।
रविभौमार्किवारांश्च बुद्धिमानन्नकर्मणि ॥ सं० प्र० [ पृ० २७० ]
अत्र आर्किः शनिः। रविभौमार्कवारांश्चेति मुद्रितः पाठः न शुद्धः इति विभावनीयम्। अत एव कश्यपोऽपि —
सूर्यार्किभौमवारांश्च त्यक्त्वान्यस्मिस्तु वासरे ॥ सं०म०रा० [ ८९२ ]

(८) नारदः-अर्काङ्गारकमन्दानां वाराश्चापि शुभावहाः ।
यदा वाराधिपस्तिष्ठेत् स्वोच्चमित्रगृहे तदा ॥ सं० प्र० [ पृ० २७० ]

(९) वसिष्ठः-जीवसौम्यसितानां च द्रेक्काणा दिवसांशकाः ।
बालान्नप्राशने शस्ता न चन्द्रार्कार्कजासृजाम् ॥
अष्टर्ग भौमः। सं० प्र० [ पृ० २७०-७१ ]

क्षीणचन्द्रविषयो निषेधः[1] ।

अत्र च वारफलमप्युक्तं राजमार्त्तण्डे—

वाचालो वलवान् दिने, दिनपतेरत्यन्तदीप्तानलो
देही देहहुताशनः शिशिरगौ कौजे रुजापीडितः ।
वौधे भोगसुखं श्रियोऽनवरतं जीवे चिरायुः सुखी
शुक्रे चातिवलान्वितोऽतिमिलनो मन्दे च मन्दानलः ॥

यत्तु—

शशिशुक्रे च मन्दाग्निः शनिभौमे बलक्षयः ।
बुधार्कगुरुवारेषु प्राशनं हि शुभावहम् ॥ इति

वचनं तस्य मूलं चिन्त्यमिति संस्कारप्रकाश[2]ः ।

## अथ नक्षत्राणि—

श्रवणः, हस्तः, मृगशिरः, स्वाती, अनुराधा, शतभिषक्, पुनर्वसुः, अश्विनी, तिष्यः, धनिष्ठा, रेवती, रोहिणी, उत्तरात्रयं चेति प्रशस्तनक्षत्राणीति[3] वसिष्ठः । श्रीधरीये तु पुनर्वसुतिष्यधनिष्ठामृगशिरोहस्तस्वाती[4] चित्रारोहिणीश्रवणशतभिषगुत्तरात्रयरेवत्यनुराधा एवोक्ताः। हस्तविशाखाश्विनोमघार्द्र मूलस्वातीन्दुचित्रापुनर्वसुश्रवणपुष्याणामेवेति[5] ऋक्षोच्चये । तत्रैवं सति सवषामविरुद्धेषु नक्षत्रेषूत्तममन्नाशनमन्यत्र च मध्यममिति व्यवस्थोचिता ।

---

(१) सं० प्र० [ पृ० २७१ ]
(२) सं० प्र० [ पृ० २७१ ]
(३) वसिष्ठः–विष्णुरुष्णकिरणो हिमरश्मिवायुमित्रवरुणादितिचित्राः ।
अश्वितिष्यवसुपौष्णवरोहिण्युत्तराश्च शिशुभोजनताराः ॥ सं० प्र० [ पृ० २७१ ]
(४) श्रीधरीये—आदित्यतिष्यवसुसौम्यकरानिलाश्वि-
चित्राजविष्णुवरुणोत्तरपौष्णमित्राः ।
वालान्नभोजनविधौ दशमे विशुद्धे
..............................शुभाः स्युः ॥
नि० सि० [ पृ० ५२० ], सं० र० मा० [ पृ० ८९२ ]
(५) ऋक्षोच्चयेऽपि—हस्तो विकासाश्विमघार्द्र मूल-
स्वातीन्द्रचित्रादितिविष्णुपूषाः ।
शस्तोऽन्नप्राशे प्रथमे शिशूनाम्
वारेषु सूर्येन्दुबृहस्पतीनाम् ॥
सं० प्र० [ पृ० २७१ ]

अत्रेदमपि विज्ञेयम्-जन्मनक्षत्रं शुभमन्नप्राशने न वेत्यत्र शास्त्रकारा नैकमता दृश्यन्ते। तत्र जन्मनक्षत्रं शुभमिति वसिष्ठनारदादय[1]: । अन्ये पुनराचार्या जन्मनक्षत्रमन्नप्राशनेऽत्यन्तमशुभं मन्यन्ते[2] । शुभत्वं पुनर्जन्मनक्षत्रस्यक्षत्रियविषयम्[3] । जन्मनक्षत्रात् दशमं कर्मनक्षत्रं तत एव चैकोनविंशमाधानसंज्ञकं नक्षत्रं पुनः साध्वेवाभ्युपगच्छन्ति[4] ।

योगाश्च पुनः वैधृतिव्यतीपातविष्टिगण्डातिगण्डशूलवज्रपरिघभिन्ना अन्नप्राशने[5] प्रशस्ताः । राशयोऽपि मेषमीनवृश्चिकाः सूर्याधिष्ठितराशयोऽधोमुखपदवाच्याश्च हेयास्तदतिरिक्ताः पुनः प्रशस्ता इति नृसिंहः[6] ।

---

(१) वालान्नभुक्तौ व्रतबन्धने च राजाभिषेके खलु जन्मधिष्ण्यम् ।
शुभं त्वनिष्टं सततं विवाहे सीमन्तयात्रादिषुमङ्गलेषु ॥ वसिष्ठः ।
नि० सि० [ पृ० ५२० ]

नारदः—पट्टबन्धचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रं त्वशु त्वन्यकर्मणि ॥ सं० प्र० [पृ० २७२]

(२) नृसिंहः—जन्मर्क्षे च दिने श्रेष्ठे निशायां नैव भोजयेत् ॥
ज्योतिरर्णवे—जन्मर्क्षे वर्जयेद्विद्वान् विशेषेण विनाशकृत् ॥
तत्रैव—जन्मर्क्षे श्रीक्षयं विद्यात् ॥
विधिरत्ने—अन्नप्राशनकार्ये तु जन्मभं मृत्युदं भवेत् ॥
सं० प्र० [पृ० २७२]

(३) सं० र० मा० [ पृ० ८९३ ]

(४) विधिरत्ने—शुभं कर्मर्क्षमाधानं विवाहे चान्नभोजने ।
ज्योतिरर्णवे—सम्पत् स्याद्धनमित्रेषु क्षेमे परममित्रभे ।
भोजयेच्छुभवृद्ध्यर्थं जन्माधानर्क्षयोरपि ॥
शेषर्क्षा वर्जिता जन्मविपत्प्रत्यरिनैधनाः ॥
..........कर्मर्क्षं चापि सौख्यकृत् ।
आधानर्क्षे च बालानां भोजनं रोगनाशनम् ॥
सं० प्र० [ पृ० २७२ ]

(५) वृहस्पतिः—न वैधृतौ व्यतीपाते विष्ट्यां गण्डातिगण्डयोः ।
शूले वज्रे च परिघे वालान्नप्राशनं शुभम् ॥ सं० प्र० [पृ० २७२]

(६) मेषालिमीना वर्ज्याः स्युस्तथैवाधोमुखानि च ॥ नृसिंहः ॥
काश्यपोऽपि—गोश्विकुम्भतुलाकन्यासिंहकर्कनृयुग्मकाः ।
शुभदा राशयश्चैते न मेषझषवृश्चिकाः ॥
सं प्र० [पृ० २७३]

एतच्चामन्त्रकं स्त्रीणामपि कार्यमेवेति मन्वादीनां मतमस्ति[1] ।

## अत्रमुख्यं कृत्यम्

प्रथममाभ्युदयिकं श्राद्धं कार्यम् । तदनन्तरं यथाविधि होमादि ऽकृत्वान्नं प्राशयेत्[2] । तत्र व्यवस्था—अन्नाद्यकामः अजमांसं, ब्रह्मवर्चसकामः तित्तिरिमांसं, तेजस्कामो घृतसंस्कृतमोदनं-दध्योदनं, पुनरिन्द्रियकामो मध्वोदनमायुष्कामो दधिघृतमधुमिश्रमन्नं च सर्वकामः पित्रादिः शिशुं प्राशयेत् इति आश्वलायनः[3] । एतच्च प्राशनं प्रथमं मन्त्रेण परस्ताच्च पञ्चकृत्वः स्तूष्णीमेव कार्यम् । सांख्यायनगृह्ये तु पुत्रस्यान्नप्राशनेऽन्य एव विशेष उक्तः । पारस्करे तु पुनः वाग्मी कुमारः स्यादित्येवं कामः पित्रादिः भारद्वाज्या मांसं प्राशयेत्, यदि कुमारोऽन्नादः स्यादिति कामयेत्तर्हि कपिञ्जलस्य मांसं, यदि कुमारोयं शीघ्रगामी स्यादिति कामयेत्तर्हि यथासम्भवं मत्स्यान्, यदि दीर्घायुष्ट्वकामना तर्हि कृकषाया मांसं, यदि च ब्रह्मवर्चसकामनास्यात्तर्हि आट्या मांसं, सर्वविधकामनायां तु सत्यां सर्वमांसमेकीकृत्य भक्षयेदिति कथितम्[4] । अत्र

---

(१) अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ॥ म० स्मृ०

आश्वलायनः—जातकृत्यादिचूडान्तं स्त्रीणां कार्यममन्त्रकम् ।
हुतकृत्यं तु पुंवत् स्यात् स्त्रीणां चूडाकृतावपि ॥

शौनकः—इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम् ॥ सं० प्र० [ पृ० २७८ ]

(२) संस्कारतत्त्वे मत्स्यपुराणम्—

अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके ।
पुंसवने निषेके च प्रवेशे नववेश्मनः ॥
देववृक्षजलादीनां प्रतिष्ठासु विशेषतः ।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम् ॥

कारिकायाम्—अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं भवेत् ।
कृत्वाभ्युदयिकश्राद्धं दधिमध्वाज्यसंयुतम् ॥

सं० प्र० [ पृ० २७६ ]

(३) षष्ठे मास्यन्नप्राशनम् । अन्नाद्यकामः तैत्तिरं ब्रह्मवर्चसकामो मात्स्यं जवनकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत् ।
( जवनं वीर्यम् इति तद्व्याख्यातारः कथयन्ति) सं० प्र० [ पृ० २७७]

(४) भारद्वाज्या मांसेन वाक्प्रसारकामस्य । कपिञ्जलमांसेनान्नाद्यकामस्य । मत्स्यैर्जवनकामस्य । कृकषाया आयुष्कामस्य । आट्या ब्रह्मवर्चसकामस्य ॥ पा० गृ० [१/१९/७-११]

भारद्वाजी 'चिठीका' इति प्रसिद्धेति गदाधरः। कपिञ्जलो गौरतित्तिरिति प्रकाशकृत्, तित्तिरो मयूरो वेति जयरामः, कारण्डवो मैरिर्वा मयूरो वाके-चित्तित्तिरो वेति हरिहरः। कृकषा कङ्कणहारिकेति कर्कजयरामगदाधराः, गोधेति विश्वनाथमित्रमिश्रौ। आटी जलचरः पक्षीति कर्कादयः, शरालि-जातीयापक्षीति संस्कारप्रकाशे[1]।

परन्त्वत्रैतदवगम्यते यत् मांसप्राशनपक्षो न मुख्यः तथा हि सति सर्व-कामस्य दधिमधुघृतमिश्रान्नप्राशनं विधेयमित्याश्वलायनवचनस्य[2] नैरर्थक्य-मेव स्यात्। सर्वकामानां दधिमधुघृतयुक्तान्नप्राशनेनैव प्राप्यत्वेन कोनाम मूढो भक्षयेद्वृथैवाल्पफलं परित्याज्यं च तत्तन्मांसम्, तत्तन्मिश्रमन्नं वा। अत एवान्यत्रापि[3] मार्कण्डेयपुराणादौ[4] दधिमधुघृतमिश्रान्नप्राशनमेवविहितं दृश्यते।

---

(१) सं० प्र० [ पृ० २७७ ]

(२) दधिमधुघृतमिश्रमन्नं प्राशयेत्सर्वकामः ॥ आश्व० गृ० [ १/१६/५ ]

(३) अलङ्कृतस्य दातव्यमन्नं पात्रे सकाञ्चनम्।
मध्वाज्यदधिसंयुक्तं प्राशयेत्पायसं तु वा ॥ विष्णुपुराणम्।
नि० सि० [ पृ० ५२० ]

आश्वलायनः—तस्मिंश्च दधिमध्वाज्यमिश्रमन्नन्तु मन्त्रवत्।
स्वमलप्राशनाच्छुद्ध्यै प्राशयेन्वायुषे पिता॥
सं० प्र० [पृ० २७६]

(४) मार्कण्डेये—देवतापुरतस्तस्य धात्र्युत्संगगतस्य च।
अलंकृतस्य दातव्यमन्नं पात्रेऽथ काञ्चने॥
मध्वाज्यकनकोपेतं प्राशयेत्पायसं तु तत्॥
पा० गृ० ग० भा० [१/१९], सं० म० [पृ० २८]
नि० सि० [पृ० ५२०]

इदमेव वचनं—'मध्वाज्यशर्करोपेतं प्राशयेत् पायसं स तत्' इति पाठभेदेन सह वशिष्ठवचनत्वेनोपात्तं मालायाम्। सं० र० मा० [पृ० ८९३]

शौनकः—
उपवेश्यासने शुभ्रे प्राङ्मुखं बालमन्तिके।
अङ्के वा दधिमध्वाज्यमिश्रमन्नं सुसंस्कृतम्॥
मन्त्रेणान्नपतेऽन्नस्येत्यादिना प्राशयेत् सकृत्।
यथेष्टं प्राशयेत्पश्चात् शोधयेत्तन्मुखं शिशोः॥
सं० प्र० [ पृ० २७५-७६ ],

अत एव च हिरण्यकेशि[1]लौगाक्षिकाठकापस्तम्बबौधयनादिभिरप्येतदेवोक्तम्। तस्मात् दधिमधुघृतमिश्रान्नप्राशनमेव तदानीं कार्यमित्येव युक्तमवगच्छामः। अन्यत्र तु शाखाभेदाद्व्यवस्थाऽवगन्तव्या।

इदं च प्राशनं स्वर्णपात्रे[2] स्वर्णदर्व्या रौप्यदर्व्या वा[3] कार्यम्। इयं च दर्वी न परिवेषणार्था, प्राशनक्रियाकरणत्वेनोल्लेखात् अतः 'चम्मच' इत्येव। अत एव च 'हिरण्येन प्राशयति' इति बौधायनोक्तिरप्येतदर्थिकैवेति प्रतीमः। तत्र सुवर्णरजतदर्व्योर्विकल्पो विज्ञेयः।

अत्रेदमपि विवेचनीयम्—किं छन्दोगानामन्नप्राशनं हिरण्यमधुसर्पिः-प्राशनात्मकजातकर्मसंस्कारादतिरिक्तं भवति न वेति। संशयस्तु गोभिलाचार्येण पृथगन्नप्राशनानुपदेशात्।

अत्र गोभिलव्याख्याता नारायण भट्टस्तु मन्यते[4] —न जातकर्मैवान्नप्राशनं छन्दोगानाम् अपि तु पृथगेव। अत एव स्मृत्यन्तरेषु पुरुषसंस्कारेषु पृथगेवान्नप्राशनमाम्नातम्। न चैकेन संस्कारान्तरस्यास्ति निवृत्तिः। यत्त्वविधानमत्र गृह्यसूत्रे ततस्तु 'सर्वशाखाप्रत्ययमेकं कर्मेति न्यायेन अध्वर्युशाखात् एव ग्राह्यमिदं कर्मेति नैकेनापरस्य गतार्थतेति। प्रमाणं चात्र —

यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्[5] ॥ इति।

---

(१) ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वाऽथैनं दधिमधुघृतामिति त्रिवृत् प्राशयति। हिरण्यकेशिगृह्यसूत्रम् ॥
सं प्र० [पृ० २७७]
सर्वाण्यन्नानि संयुय....... कुमारमन्नं प्राशयेत्। लौ० गृ० [ ३९/२ ]
सर्वाणि हविष्यान्नानि संयूय.......... कुमारमन्नं प्राशयेत् ॥
का० गृ० [५/४]
दधिमधुघृतमोदनमिति संसृज्य..........कुमारं प्राशयेत् ॥ आप० गृ० [६/१६/१]
अथौदनं दध्ना मधुना घृतेनाद्भिररिति समुदायुत्य हिरण्येन ओषवस्य कुमारं प्राशयति ॥ बौ० गृ० [२/३/५]

(२) मार्कण्डेयः—अलंकृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥ सं० प्र० [२७८]

(३) कश्यपसंहितायाम्—बालकं प्राङ्मुखं कृत्वा प्राशयेच्च विधानतः।
स्वर्णदर्व्याथवा रौप्यदर्व्या वा मङ्गलस्वनैः ॥ सं० र० मा० [पृ ८९३]

(४) मो० गो० गृ० ना० भ० [२/७/१९]

(५) कात्यायन-संहिता- [१/३/३]

अन्ये पुनर्मन्यन्ते–जातकर्मैव छन्दोगानामन्नप्राशनमपि, अन्यस्याविधानादिति। एतेषामयमाशयः–सर्पिषः प्राशनोपदेशस्तावदिहोपलभ्यते। सर्पिश्चान्नम्। तस्मादन्नप्राशनमेवैवत्। तदिह कर्मान्तरोपदेशादितः पूर्वमेव जातकर्मणः परिसमाप्तिरवगम्यते। अतो नानयोरैक्यमाशङ्कनीयम। शास्त्रप्रामाण्यबलाच्चैकेनापि कर्मणा संस्कारद्वयनिष्पत्तावपि न किमप्यनुचितम्। नापि 'षष्ठेऽन्नप्राशनं[1] मासि' इत्यादिशास्त्रेण नियतकालमन्नप्राशनं विहितं नामकरणादूर्ध्वमिति ततः पूर्वमन्नप्राशनं विधातुं नैव शक्यमिति वक्तुं युक्तम्, शाखान्तरविषयत्वात्तस्य। अस्मच्छाखायां पुनः पूर्वमेवनामकरणात् अन्नप्राशनमिति। वस्तुतस्तु मन्वादिभिरपि 'यद्वेष्टं मङ्गलं कुले[2]' इत्यनेनानियतकालिकत्वमेवान्नप्राशनस्याप्युक्तम्। यमोप्याह—

ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि।
अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले[3] ॥ इति।

कृत्यचिन्तामणिधृतवचनेन सर्वशाखिकर्तृत्वेनाकांक्षितैः। 'यन्नाम्नातं स्वशाखायाम्' इत्यादिछन्दोगपरिशिष्टादन्यशाखोक्तप्रकारेण छन्दोगेन कर्त्तव्यः इति।

युक्तं चैतदेव, संकोचे मानाभावात्। अत एव भत्वादिभिरविशिष्यैवान्नप्राशनं निर्दिष्टम्। यदि हि छन्दोगानामन्नप्राशनं नाभविष्यत् कथं सामान्येन विधानं संगच्छेत ? तस्मान्नामकरणात् पूर्वमेव छन्दोगानामन्नप्राशनं विधेयमेव, न तु एतदभावो मन्तव्यः ॥

अत्र शौनकोक्तो विशेषोऽवगन्तव्य :—

होमपक्षाश्रयेऽत्रापि जातकर्मवदाचरेत्।
वृद्धिश्राद्धं तु पूर्वेद्युस्तस्मिन् पक्षे समाचरेत् ॥
उत्तरेद्युस्तु बध्नीयात् कौतुकं तु यथाविधि।
होमोपदेशो यत्रास्ति न तु मन्त्रोपदेशनम् ॥
तत्रानादेशहोमाः स्युरिति सूत्रकृतो मतम्[4] ॥ इति।

अनादेशहोमाश्च–'अग्निरिन्द्रः प्रजापतिर्विश्वेदेवाः ब्रह्मेत्यनादेशे' इत्याश्वलायनोक्ता बोध्याः ॥

---

(१) म० स्मृ० [२/३४]
(२) म० स्मृ० [२/३४]
(३) सं० प्र० [पृ० २६७]
(४) सं० प्र० [पृ० २७८-७९]

# (८) चूडाकरणम्

चूडाकरणमित्यपि यौगिकं कर्मनामधेयम्। चूडा शिखा, तदर्थं कर्म करणं चूडाकरणम्[१] चूडाकर्म इति वा व्यपदिश्यते शास्त्रे। अस्यैव नामान्तरम् चौलम् इत्यपि।

इदं च कर्म वैदिकयुगेऽपि प्रसिद्धमिति मन्तुं शक्यते, यतो हि ये मन्त्रा अत्र कर्मणि विनियुक्तास्ते सर्व वैदिका एव प्रायेण। अथर्ववेदे हि[२] मुण्डनार्थं शिरोऽभिषिञ्चनं वर्णितमस्ति। एवमेव यजुर्वेदादावपि यथायथं क्षुरस्तुतिः[३], नापितस्य सत्कारश्च[४] दृश्यते। आयुष्यादिकामनाऽपि प्रसङ्गेऽस्मिन्[५] क्रियमाणा यजुषि निबद्धा दृश्यत एव। तस्मादस्य वैदिकत्वे न संशयः। गृह्यस्मृत्यादौ तु पुनः साङ्गोपाङ्गं विवरणं प्राप्यत एव।

**चूडाकरणकाल—**

इदं च कर्म प्रथमे तृतीये वा वर्षे कार्यमिति मनुः[६]। 'यद्वेष्टं मङ्गलं[७] कुले' इति मनूक्तो विकल्पस्तु वर्त्तत एवात्रापि कर्मणि। तत्र प्रथमेऽब्दे समाप्ते सति[८] चूडाकर्म तत्सत्त्वे एव वेत्यत्र मतद्वयम्। सांवत्सरिकस्य

(१) म० मे० भा० [२/३५], सं० प्र० [पृ० २९५]

(२) आयमगन् सविता क्षुरेणोष्णेन वाय उदकेनेधि।
आदित्या रुद्रा वसव उन्दन्तु सचेतसः सोमस्य राज्ञो वपत प्रचेतसः॥
अ० वे० [६/६८/१]

(३) शिवो नामासि स्वधितिस्ते पिता नमस्ते मा मा हिंसीः॥
य० वे० [३/६३]

(४) अदितिः श्मश्रु वपत्वाप उन्दन्तु वर्चसा।
चिकित्सतु प्रजापतिर्दीर्घायुत्वाय चक्षसे॥ अ० वे० [६/६८/२]

(५) निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय॥ य० वे० [३/३३]

(६) चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥ म० स्मृ० [२/३५]

(७) म० स्मृ० [२/३५]

(८) पा० गृ० [१/२४/१]

चूडाकरणमित्यादिपारस्करादिवचनानुरोधेन संवत्सरे व्यतीते इति केचन मन्यन्ते। संवत्सरमध्य एवेत्यपरे जगुः कल्पतरुकारप्रभृतयः। मनुटीकाकारादयोऽपि इत्थमेव वर्णयन्ति। अत्रोत्तरः पक्ष एव युक्तः, ग्रन्थान्तरसंवादात्।

यमेन तु प्रथमे संवत्सरे पूर्णे द्वितीये तृतीये वेति[1] गदितम्। प्रथमे, तृतीये, पञ्चमे, सप्तमे, उपनयनेन सहैव वेत्याश्वलायनः[2]। तृतीये, पञ्चमे, सप्तमे वेति वृहस्पतिः[3]। तृतीये, पञ्चमे, सप्तमे, स्वकुलाचारतो वेति[4] वसिष्ठः।

एवमेवान्यत्रापि कथितम् बहुषु निवन्धस्मृत्यादिषु। पारस्करस्तु[5] संवत्सरेऽतीते, तृतीये वा पूर्णे यथामङ्गलं वा चूडाकरणमाह। तत्र द्वितीयतृतीययोरेव यथामङ्गलं किंवा कालान्तरमेवैतदित्यत्र[6] मतभेदः। तत्र वयन्तु यथाकुलमित्यस्य प्रथमादिविहितकाले एवेति मन्यामहे। अत एव षड्गुरुशिष्यादिभिः[7] स्पष्टमेवाभिहितमेतदेव।

---

(१) यम :— ततः संवत्सरे पूर्णे चूडाकर्म विधीयते।
द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात्॥
सं० प्र० [पृ० २९६], सं० र० मा० [८९८]

(२) तृतीये पञ्चमे वाब्दे चौलकर्म प्रशस्यते।
प्राग्वाऽसमे सप्तमे वा सहोपनयनेन वा॥ सं० प्र० [पृ० २९७]

(३) तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतोऽपि विशेषतः।
पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽथवा समम्॥
सं० र० मा० [पृ० ८९८],सं० प्र० [पृ० २९७],नि० सि० [पृ० ५२०]

(४) तृतीयेऽब्दे पञ्चमेऽब्दे स्वकुलाचारतोऽपि वा।
चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः॥ सं० प्र० [पृ० २९७]

(५) सांवत्सरिकस्य चूडाकरणम। तृतीये वा प्रतिहते। षोडशवर्षस्य केशान्तः। यथामङ्गलं वा सर्वेषाम्॥ पा० गृ० सू० [१/२४/१-४]

(६) यद् यस्य मङ्गलमुचितं कुले कस्यचित्तृतीये कस्यचित् संवत्सरे, अन्ये तु यथामङ्गलशब्देन कालान्तरं कल्पयन्ति। पा० गृ० क० भा० [१/२४] जयरामादयोऽप्येवमेवाहुः।

(७) जाताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम्।
आद्येऽब्दे कुर्वते केचित् पञ्चमेऽन्ये द्वितीयके॥
उपनीत्या सहैवेति विकल्पः कुलधर्मतः।
नि०सि० [पृ० ५२२], सं०प्र० [पृ० २९६], पा० गृ०ग०भा० [१/२४]

गोभिले[1] तु 'अथातस्तृतीये वर्षे चूडाकरणम्' इति दृश्यते। अत्र नारायणस्तु—'यस्मात् श्रुत्यन्तरे अन्योपि पक्षः श्रूयते 'प्रथमेऽब्दे' इति अतः सोऽपि द्रष्टव्यः' इत्युक्त्वा 'चूडाकर्म द्विजातीनां सर्वेषामेव' इति मनुवाक्यमुद्धरति, तन्न मृष्यामहे वयम्। अत एव छन्दोगानाम् तृतीये एव चूडाकरणमुत्तमम्। अत एव च खादिरद्राह्यायणगृह्यसूत्रयोरपि[2] तथैव निर्दिष्टम्।

बौधायनस्तु संवत्सरे त्रिषु संवत्सरेषु वेति व्यवस्थितविकल्पमाह[3]। जैमिनिलौगाक्षिकाठकाश्वलायनापस्तम्बमानववाराहगृह्यसूत्रेष्वपि[4] तृतीये वर्ष एव चूडाकरणम् उक्तम्। एतेनेदं प्रतीयते यत् तृतीयवार्षिकं चूडाकर्म श्रेष्ठम् इति। अत एव नारदादिभिरेवमुक्तम[5]।

तृतीयेऽपि वर्ष भूयिष्ठे गते सति चूडाकरणम् विधेयम् इति लौगाक्षिकाठकमानवगृह्येपूक्तम्[6]। तत्र तृतीये ईषदपूर्णे सतीति लक्ष्मीधर-

---

(१) गो० गृ० [२/९/१]

(२) तृतीये वर्ष चौलम् द्रा० गृ० [३/१/१४], खा० गृ० [२/३/१६]

(३) सम्वत्सरे चूडाकर्म त्रिषु वा सम्वत्सरेषु ॥ बौ० गृ० [२/४/१]

(४) तृतीये सम्वत्सरे जटाः कुर्वीत ॥ जै० गृ० [१/१२]

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयते ॥ लौ० गृ० [४४/१]

तृतीये वर्ष चौलम्-आश्व० गृ० [१/१७/१]

जन्मनोऽधितृतीये वर्षे चौलम्-आप० गृ० [६/१६/३]

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयेत् ॥ मा० गृ० [३/१]

तृतीयस्य वर्षस्य जटाः कुर्वन्ति ॥ वा० गृ० [४/१]

(५) नारदः — जन्मतस्तु तृतीये च श्रेष्ठमिच्छन्ति पण्डिताः।
पञ्चमे सप्तमे वापि जन्मतोमध्यमं भवेत् ॥
अधमं गर्भतस्तु स्यात् नवमैकादशेऽपि वा।
नि० सि० [पृ० ५२२], सं० म० [पृ० २९]

संस्काररत्नमालाप्रकाशयोस्तु नवमैकादशेऽपि वेत्यस्य स्थाने दशमैकादशेऽपि वेति पाठान्तरम्-सं० र० मा० [पृ० ८९८], सं० प्र० [पृ० २९८]

अत्रिः-तृतीयवर्षे चौले तु सर्वकामार्थसाधनम्।
सम्वत्सरे तु चौलेन आयुष्यं ब्रह्मवर्चसम् ॥
पञ्चमे पशुकामस्य युग्मे वर्षे तु गर्हितम्।

(६) तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयते। लौ० गृ० [४४/१]

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयेत्। मा० गृ० [३/१]

प्रभृतयः। वस्तुतस्तु तृतीयस्य तृतीये भागे गते इति युक्तम् स्मृत्यन्तर-संवादात्[1]।

अयं च वर्षनियमो जन्मतो गर्भतो वेति विकल्पः। जन्मत इति नारदादयः[2]। गर्भत इति चेति बृहस्पतिप्रभृतयः[3]। अत्रापि यथाकुलाचार-मेव व्यवस्थेति युक्तं भाति।

ततश्चेदं प्रतिफलितम्—यथाकुलाचारं प्रथमद्वितीयतृतीयपञ्चम-सप्तमगर्भैकादशेषु वर्षेषु अथवा उपनयनदिने चूडाकर्म विधेयम्।

वर्षश्चात्र सावनो[4] ग्राह्यः। अयनं चोत्तरमेव न तु दक्षिणमित्यपि बोद्धव्यम्[5]।

---

(१) नृसिंहः— तृतीये पञ्चमे वर्षे गते भागे तृतीयके।
आदौ चौलं प्रकर्त्तव्यमिति केचित् प्रचक्षते॥

कालविधानेऽपि—
वर्षे तृतीये ऽथ पञ्चमे वा गते त्रिभागे प्रवदन्ति
चौलम्। सं० प्र० [पृ० २९८]

(२) तृतीये पञ्चमे वाब्दे स्वकुलाचारतोऽपि वा।
बालानां जन्मतः कार्यं चौलमावत्सरान्तरात्॥ नारदः॥
सं० प्र० [पृ० २९९]

नारदः—जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः॥
पा० गृ० ग० भा० [१/२४]

(३) तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः।
पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽथवा समम्॥ बृहस्पतिः॥
नि० सि० [पृ० ५२२]

(४) जन्मर्क्षाणां चतुर्विंशात्परतः चौलमाचरेत्।
अथवा पञ्चमे वर्षे सावनेनैव योजयेत्॥ कश्यपः।
सं० प्र० [पृ० २९८]

(५) उत्तरायणगे सूर्ये विशेषात् सौम्यगोलके॥ बृहस्पतिः॥
नि० सि० [पृ० ५२३]

देवरातः— देवभागगते सूर्ये चूडाकर्म समाचरेत्॥
अयने चोत्तरे सौख्यं दक्षिणेत्वशुभावहम्॥
सं० प्र० [पृ० २९९]

उदगयन आपूर्यमाणपक्षे………………॥
आश्व० गृ० [१/४/१]

**मासाः --**

चूडाकर्मणि चैत्रपौषौ विशिष्य प्रतिषिद्धौ । तत्रापि मासविशेषफलमुक्तं ज्योतिरर्णवे[1] —

मकरे सर्वसम्पत्तिः कुम्भे सन्तानकारकः ।
मीनमासे सदा सौख्यं मेषे सर्वार्थसाधनम् ॥
विजयं वृषभे विद्यान्मिथुने वंशवृद्धिकृत् ।
कर्कटे बहुरोगित्वं सिंहे नष्टप्रजा भवेत् ॥
षष्ठे कुलक्षयं विद्यात्तुलायां देहनाशनम् ।
वृश्चिके बन्धुनाशः स्यात् वित्तनाशस्तु कार्मुके ।। इति ॥

षष्ठे-कन्यायाम् । परन्तूत्तरायणेऽपि सूर्ये अधिमासस्त्याज्यः । यद्यपि राजमार्त्तण्डे चैत्रपौषविवर्जिता दशमासाश्चूडादौ प्रशस्ता उक्तास्तथापि तन्न प्राप्तकालिकचूडादिविषया अपि तु कालात्यये सत्येवेति प्रकाशः । तत्रापि ज्येष्ठपुत्रपुत्र्योः मार्गे ज्येष्ठे च मासे चूडा न कार्या[2] ।

**पक्षः--**

शुक्लपक्षः शुभः प्रायेण सर्वत्रैव कर्मणि, चूडाकर्मण्यपि स एव श्रेष्ठः[3] । कृष्णोऽपि, शुक्लेऽकृतेसति, अन्त्यत्रिकं हित्वा शुभमेव[4] ।

**तिथयः—**

द्वितीया तृतीया पञ्चमी सप्तमी दशमी एकादशी त्रयोदशी चात्र कर्मणि शुभा,[5] इतराश्च प्रतिपच्चतुर्थीषष्ठ्यष्टमीनवमीद्वादशीचतुर्दशीपञ्चदशी-

---

(१) सं० प्र० [पृ० ३००]
(२) चण्डेश्वरः – मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥
सं० र० मा० [पृ० ८९८]
(३) शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत् ॥ बृहस्पतिः ॥
नि० सि० [पृ० ५२३], पा० गृ० यभा० [१,२४], सं०प्र० [पृ०३०१]
(४) दामोदरमतं जातात्सप्तमे चौलकर्मणि ।
पूर्वपक्षः शुभः प्रोक्त कृष्णे चान्त्यत्रिकं विना ॥
सं० प्र० [पृ० ३०२]
(५) वसिष्ठः – द्वित्रिपञ्चमसप्तम्यामेकादश्यान्तथैव च ।
दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ॥
नि० सि० [पृ० ५२३]

पूर्णमास्यो[1] वर्जनीयाः। पराशरेण[2] तु तृतीया पञ्चमी सप्तमी दशमी एकादशी त्रयोदशी चेति विहिताः। वृहस्पतिना[3] पुनः प्रतिपत् षष्ठ्यष्टमीद्वादशी रिक्ता च वर्ज्यत्वेनोक्तेति तद्भिन्ना ग्राह्या इत्यर्थतो लभ्यते। एषु रिक्ता प्रतिपच्चात्र कर्मणि विशेषतो वर्जनीया[4]। अन्यासु यत्र सर्वेषां सम्प्रतिपत्तिः ता उत्तमाः, अन्यासां पुनर्मध्यमत्वं सति विहितत्वेन परिगणितत्वे कुत्रचिदपि, याः प्रतिषिद्धा एव ता अधमा इति विवेकः।

## दिनानि--

शनिरविमंगलानां दिनानि हित्वा शेषाणान्दिनानि शुभानीति वसिष्ठः[5]। वृहस्पतिस्तु ब्राह्मणस्य रवौ, क्षत्रियस्य भौमे, वैश्यशूद्रयोः शनावपिशुभमेवाह[6] चूडाकर्म। अत्र भुजवलभीमे हि दिनानां फलविशेष उक्तः—

रविवासरे क्षौरकर्म मासमायुषो हरेत्, शनिवासरे पञ्चमासान्, मङ्गलवासरे अष्टौ मासान् चेति। एतानि दिनानि त्रीण्यायुषः क्षयकारीणीति

---

(१) नृसिंहः - षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी।
द्वादशी दर्शपूण द्वे प्रतिपच्चैव निन्दिताः॥
पा० गृ० ग० भा० [१/२४], सं० प्र० [पृ० ३०२]

(२) पञ्चमी सप्तमी चैव दशम्येकादशी तथा।
त्रयोदशी तृतीया च चौलकर्मशुभावहाः॥ सं० प्र० [पृ० ३०२]

(३) द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदं तथा।
हित्वा शेषासु तिथिषु क्षौरकर्म शुभावहम्॥ सं० प्र० [पृ० ३०२]

(४) व्यासः - तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत्॥
सं० र० मा० [८९९]
कारिका - तिथिं प्रतिपदां रिक्तां पातं विष्टिं विवर्जयेत्॥
पा० गृ० ग० भा० [१/२४]

(५) रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि।
निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः शुभाः। सं० प्र० [पृ ३०३]
कारिका–वाराञ्छनैश्चरादित्यभौमानां रात्रिमेव च (विवर्जयेत्)॥

(६) पापग्रहाणां वारेषु विप्राणां शुभदं रवेः।
क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां शनेः शुभः। सं० र० मा०
[पृ० ८९९]

भावः। बुधस्तु पञ्चमासान्, सोमः सप्त, गुरुः दश, शुक्रश्च एकादशमासान् वर्धयति[1] आयुषः। अत एतेषां दिनानि क्षौरकर्मणि शुभानि। अन्यदपि तत्रैव वर्णितमुपस्थापयामः स्पष्टप्रतिपत्तये—

आयुःक्षयं प्रकुरुते दिनकृद्दिने तु
दोषापतेरपि सुखानि च दीर्घमायुः।
पृथ्वीसुतस्य तु सुरैरपिरक्षितानां
क्षौरं करोति निधनं नचिरान्नराणाम्॥
आरोग्यमिन्दुजदिने चिरजीवितत्वं
जीवस्य जीवितमपि प्रबलं च भोग्यम्।
नानाविधं विषयभोगसुखं सितस्य
मन्दस्य मुण्डनविधौ विभवस्य नाशः॥ इति॥

दोषापतिः चन्द्रः। मन्दः शनिः। एतेन बृहस्पत्युक्त प्रतिप्रसवे सत्यपि यथासम्भवं सूर्यादिवासराः परित्याज्या एवेति प्रतीमः। मध्यमत्वं तु तेषामपि वचनाल्लभ्यते।

## नक्षत्राणि--

नक्षत्रेषु हस्तः, अश्विनी, रेवती, धनिष्ठा, पुनर्वसुः, पुष्यः, मृगशिरः चित्रा च उत्तमनक्षत्राणि चूडाकर्मणि। उत्तरात्रयम्, स्वाती, रोहिणी, शतभिषक् चेति षड् मध्यमानि नक्षत्राणि, इतराणि तु[2] निषिद्धानि। अन्यत्र तु ज्येष्ठाप्युक्ता[3]। तथा च सापि ग्राह्यैव, वचनप्रामाण्यात्। अत्र यस्मिन्

(१) मासं हरेत् क्षौरमिहायुषोऽर्कः शनैश्चरः पञ्च कुजस्तथाष्टौ।
आचार्यभृग्विन्दुबुधाः क्रमेण दद्युर्दशैकादश सप्त पञ्च॥
सं० प्र० [पृ० ३०३]

(२) हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम्।
सौम्यचित्रे नवक्षौरे उत्तमा नव तारकाः॥
त्रीण्युत्तराणि वायव्यं रोहिणीं वारुणं तथा।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः॥
सं० र० मा० [पृ० ८९९], नि० सि० [पृ० ५२३]

(३) व्यासः— अश्विनी श्रवणः स्वाती चित्रा पुष्यः पुनर्वसुः।
धनिष्ठा रेवती ज्येष्ठा मृगे हस्ते क्षुरक्रिया॥
सं० प्र० [पृ० ३०४]

कारिका— अश्विनी श्रवणः स्वाती चित्रा पुष्यं पुनर्वसुः॥
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत्॥
पा० गृ० ग० भा० [१/२४]

नक्षत्रे जन्मशिशोस्तन्नक्षत्रमपि शुभदमिति नारदः[1] । दीपिकायामपि[2] तथैवोक्तम् । परन्तु व्यासादिभिः प्रतिषिद्धमिति[3] विकल्पः । प्रकाशकृतस्तु नारदादिवाक्ये जन्मर्क्षशब्दं परिभाषिकं दशमैकोनविंशतारापरमाश्रित्य यस्मिन् नक्षत्रे जन्म तत् सर्वथा परित्याज्यमेवेत्याहुः[4] ।

नक्षत्रविशेषफलमाह गर्गः —

अश्विन्यां तुष्टिमाप्नोति भरण्यां मरणं भवेत् ।
कृत्तिकासु क्षयो रोगो रोहिण्यां रोगनाशनम् ॥
सौभाग्यवृद्धिः सौम्येस्यात् रौद्रे वित्तस्य नाशम् ।
पराक्रमः पुनर्वस्वोः पुष्ये मानार्थसिद्धयः ॥
सार्पे शरीरपीडा स्यात् धननाशस्तु पैत्रभे ।
व्याधयो बहवो भागे त्वार्यम्णे रसनाशनम् ॥
तेजोऽभिवृद्धिर्हस्ते स्यात्सौभाग्यं त्वाष्ट्रभे भवेत् ।
स्वात्यां दुःखविनाशः स्यात् ऐन्द्राग्ने वित्तनाशनम् ॥
मैत्रे मित्रविनाशः स्याज्ज्येष्ठायां भूमिदं स्मृतम् ।
समूलनाशनं मूले पूर्वाषाढापि मूलवत् ॥
सौम्यवच्चोत्तराषाढा वैष्णवे रूपसम्पदः ।
वसुभे ह्यायुषो वृद्धिर्वारुणे बलवर्धनम् ॥
पूर्वभाद्रपदे मृत्युराहिर्बुध्न्यं सुखावहम् ।
पौष्णे स्यान्महती वृद्धिर्नवक्षौरे फलं क्रमात्[5] ॥

---

(१) पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणः ॥ नारदः ॥
सं० प्र० [पृ० ३०४]

(२) जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु ॥ दीपिका ॥
सं० प्र० [पृ० ३०५]

(३) व्यासः— नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ॥
सं० र० मा० [पृ० ८९९ ], सं० प्र० [ पृ० ३०५ ], सं० म० [ पृ० २९ ]

(४) सं० प्र० [पृ० ३०४]

(५) सं० प्र० [पृ० ३०५]

राशयः—

वृषस्कन्याधनुष्तुलामकरमीनकर्कराशयः प्रशस्ताः[१]। वसिष्ठेन तु धनुर्विहाय मिथुनं विहितम्[२]। राजमार्त्तण्डे तु तुलाकर्कौ परिहृत्य कुम्भस्यैव विधानं कृतम्[३]। तत्र ज्योतिर्निवन्धोद्धृतवृहस्पतिवचनेन[४] कुम्भस्य कुलविनाशकरत्वनिर्णयात् तद्विधानं गत्यन्तराभावे ज्ञेयम्। परन्तु कुम्भे क्षौरविधानस्य बलवृद्धिक्षेमारोग्यप्रभूतधनलाभफलत्वप्रतिपादनात्[५] कुम्भस्य निषिद्धत्वं चिन्त्यमेव। पराशरोक्तधनुर्निषेधोऽपि वसिष्ठेन राजवाधाभयात्[६] कृत इत्यपि बोध्यम्।

एतदपि कर्म दिवैव कर्त्तव्यम्[७], न रात्रौ। अप्राप्तकालेपि कर्मैतत् मण्डनोत्तरम्=विवाहोत्तरम् नैव कार्यम्[८]।

---

(१) वृषः कर्कटकश्चैव धनुः कन्या तुलाधरः।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः॥ पराशरः॥
सं० प्र० [पृ० ३०५]

(२) वसिष्ठः – वृषभश्च कुलीरश्च यमः कन्या तुलाधरः।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः॥
सं० प्र० [पृ० ३०६]

संस्कारमालायान्तु 'यमकन्यातुलाघटाः' इति द्वितीयचरणपाठान्तरेण कुम्भराशेरपि वसिष्ठेन विधानमवगम्यते।

(३) क्षौरं प्रशस्तं मृगचापमीने कन्याख्यकुम्भे मिथुने वृषे च।
पुष्टिर्बलं वृद्धिविवर्धनं च शेषे च रोगं कुरुते भयं च॥
सं० प्र० [पृ० ३०६]

(४) कुम्भः कुलविनाशाय कथितः क्षुरकर्मणि।
शुभैर्दृष्टोऽथवा युक्तो न कुम्भः शुभकृत् सदा॥
सं० र० मा० [पृ० ८९९]

(५) कुम्भे बलस्य वृद्धिं क्षेमारोग्यप्रभूतधनलाभम्। सं० प्र० [पृ० ३०७]

(६) वसिष्ठः – राजवाधा च धनुषि॥ सं० प्र० [पृ० ३०७]

(७) नारदः – नराणां सवनं पुंसः सीमन्तं कर्णवेधनम्।
नामकर्मक्रिया चौलं विद्यारम्भोपनायने॥
दिवा कार्याणि चान्यानि कर्त्तव्यानि दिवैव हि।
सं० प्र० [पृ० ३११]

(८) वसिष्ठः – न मण्डनाच्चापि हि मुण्डनं च। नि० सि० [पृ० ५२५]

## अथ शिखानिर्णयः—

शिखाव्यवस्थैव चूडाकरणस्य मुख्यं कृत्यम्। शिखा चोपवीतं च द्विजानां सर्वाङ्गसाधनम्। अत एव विशिखव्युपवीताभ्यां विहितं कर्म व्यर्थमेव जायत इति देवलादयो[1] मन्यन्ते। तत्र यथाकुलाचारं शिखाव्यवस्था[2]। विशेषतस्तु लौगाक्षिगृह्यसूत्रे[3] निर्दिष्टः – वसिष्ठगोत्रजानामेका शिखा दक्षिणतः, अत्रिकश्यपगोत्रजानामुभयतः शिखाद्वयम्, भृगुकुलजानां मुण्डा शिखा, अङ्गिरोगोत्रजानां पञ्च शिखाः, अन्येषामेकैव शिखेति। वस्तुतस्तु 'यथर्षि शिखा निदधाति' इति बौधायनोक्तेः वसिष्ठगोत्रजानामेकप्रवरत्वे दक्षिणत एकैव शिखा, त्रिप्रवरत्वे तिस्रः, अत्रिकश्यपगोत्रजानां च ह्यार्षेयत्वपक्षे वामे दक्षिणे चैकैकेति द्वे, त्र्यार्षेयत्वपक्षे पुनः तिस्रः— पार्श्वयोर्द्वे एका मध्ये, भृगूणां मुण्डत्वं तथैव कुलाचारमनुरुध्य, त्र्यार्षेयत्वपक्षे तु एतेषामपि तिस्र एव शिखाः, पञ्चार्षेयत्वपक्षे पञ्च, अङ्गिरसामपि त्र्यार्षेयत्वपक्षे तिस्रः, पञ्चार्षेयत्वे तु पञ्च, एवमन्येषामपि यथर्षिसंख्यम् एका अनेका वा शिखा बोध्या। तथा च लौगाक्षिवचनमुपलक्षणपरतयैव ज्ञेयम्।

इयं च शिखा एका वा स्यादनेका वा. गोदानकर्मकाले वपनीया यथाकुलव्यवस्थम् स्थापनीया वा भवति। अथ च प्रमादात् शिखावपनं जातं तर्हि कुशनिर्मितां शिखां ब्रह्मग्रन्थिसमन्वितां दक्षिणकर्णोपरि आशिखाबन्धाधाद्ध्रत तिष्ठेत् इति काठकगृह्यानुसारेण शिखाव्यवस्था कर्मपूर्त्यर्थं कार्या[4]।

एतच्च कर्म विना मन्त्रेण स्त्रियाः शूद्रस्यापि कार्यमेव। तत्र स्त्रिया अपि यथाकुलाचारं सर्वमुण्डनम् शिखाधारणम् अमुण्डनमेव वा विधेयम् इति विशेषः।

---

(१) देवलः – विशिखो व्युपवीतश्च यत् करोति न तत् कृतम्॥
संo प्रo [पृo ३१६]

(२) यथाकुलधर्मं केशवेषान् कारयेत्॥ आश्वo गृo
यथोदितं चूडाः कारयन्ति यथर्षि वा। हिरo गृo।।
संo प्रo [पृo ३१५]

(३) पाo गृo गo भाo [१/२४], संo प्रo [पृo ३१५]

(४) संo प्रo [पृo ३१६-१७]

## चूडाकरणे प्रतिषिद्धकालः अवधिर्वा —

एतच्च चूडाकरणम् शिशोर्मातरि गर्भिण्यां सत्यां न[1] कार्यम् । तत्रापि पञ्चमासपर्यन्तमेव निषेधः, तदूर्ध्वं सत्यामपि गर्भिण्यां कार्यमेव[2] । गर्भिण्यां सत्यां मातरि शिशोः चूडाकरणे तु गर्भनाशः, चतुर्वर्षाभ्यन्तरे च काले शिशोः पितुश्च मृत्युरित्यादि[3] महदनिष्टमापद्यते । परन्तु विमातरि गर्भिण्यां सत्यामपि चूडाकरणे न निषेधः[4] ।

स्वमातरि रजस्वलायां जातायामपि चूडाकर्म न कार्यम् इति स्मृतिकाराः[5] । यदि तु चौलादौ मातृशुद्ध्यनन्तरं शुभलग्नाद्यभावप्रसङ्गस्तदा शान्तिं

---

(१) माता कुमारमादायेत्युक्तं कात्यायनादिभिः ।
सा चेद् यदि सगर्भास्यात्तदा चौलं न कारयेत् ॥
सं० प्र० [पृ० ३१२]

गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् ॥
पा० गृ० सू० ग० भा० [ १/२४ ]

(२) नारदः—शिशोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात् प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥
सं० प्र० [ पृ० ३१३], सं० र० मा० [ पृ० ९००], सं० म० [पृ० ३०]

(३) पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् ।
विपद्यते गुरुस्तत्र दम्पती शिशुरब्दतः ॥ वसिष्ठः ॥
चूडाकर्म न कर्त्तव्यं यस्य मातास्ति गुर्विणी ।
करोति यदि मन्दात्मा तदा गर्भस्य नाशनम् ॥
पित्रोर्मृतिं वदन्त्येके चतुरब्दान्तरे स्फुटम् ॥ सं० प्र० [ पृ० ३१२ ]

(४) गर्भिण्यामपि भार्यायां सूनोश्चौलं न कारयेत् ।
भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि ॥
सूनोः सापत्नमाता चेद् भवेद् गर्भवती तदा ।
चौलोपनयने कुर्यादित्याहुः पूर्वसूरयः ॥ सं० र० मा० [ पृ० ९०० ]

(५) मेधातिथिः—विवाहव्रतचूडासु यस्य माता रजस्वला ।
माता रजस्वला यस्य भवेत्तस्य न शोभनम् ॥
सं० म० [ पृ० ३१ ]

वृद्धगार्ग्यः—विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥
सं० र० मा० [पृ० ९००]

विधाय रजस्वलायाम् सत्यामपि कार्यमेव। शान्तिश्चात्र सुवर्णनिर्मितां श्रियं श्रीसूक्तविधिना समभ्यर्च्य पायसेन होमं च कुर्यात् इति[१]।

एतावता प्रवन्धेन धार्मिकत्वमस्य संस्कारस्य यथाशास्त्रं व्यवस्थापितमेव। परन्तु नास्य कर्मणः केवलं धार्मिकमेव महत्त्वमपि तु चिकित्साशास्त्रनुसारेण शारीरे संरक्षणमपि प्रयोजनमस्त्येव। अत एव सुश्रुतेनापि "मष्तकाभ्यन्तोपरियरोष्ठात् शिरासस्वन्धिसन्निपातो रोमावर्त्तोधिपतिस्तत्रापि सद्यो मरणम्"[२] इति वदता मस्तकस्य संरक्षणार्थं शिखाधारणमावश्यकमित्युक्तम्। अत एव च तेनैव केशच्छेदनस्य हर्पलाघवसौभाग्योत्साहकरत्वमुक्तम्[३]। चरकेनापि समर्थितमेतत्[४]।

तस्मात् चूडाकरणं धर्मदृष्टया स्वास्थ्यदृष्टया च श्रेयस्करम् ॥

---

(१) कारिकानिबन्धे—सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्होमपूर्वकम्।
प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न दुष्यति ॥
अलाभे सुमुहूर्त्तस्य रजोदोष उपस्थिते।
श्रियं सम्पूज्य तत् कुर्यात् वृत्रहत्या भयंकरी ॥
हैमीं माषमितां पद्मां श्रीसूक्तविधिना जपेत्।
प्रत्यृचं पायसं हुत्वा निषिच्य शुभमाचरेत् ॥
सं० प्र० [ पृ० ३१४ ]

(२) सुश्रुतसंहिता।

(३) पापोपशमनं केशनखरोमापमार्जनम्।
हर्षलाघवसौभाग्यकरमुत्साहवर्धनम् ॥ सु० सं० चि० स्था० [२४/७२]

(२) पौष्टिकं वृष्यमायुष्यं शुचिरूपं विराजनम्।
केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम् ॥
च० सं० सू० स्था० [५/९९]

# (९) कर्णवेधः

आभूषणपरिधानार्थमेव प्राचीनसमयेऽङ्गवेधः प्रसिद्ध आसीत् प्रायेणादिजातिविशिष्टमानवेषु यानाधुनिका असभ्या इति अर्धसभ्या इति च कथयन्ति। कर्णवेधोऽपि मूलत एवमेवागतः सम्प्रदाय इति नव्यानां विचारः। एतेषामयमाशयः—गृह्यसूत्रे क्वापि कर्णवेधानुल्लेखात् नायं संस्कारः प्राचीनः, अपि तु नितरामर्वाक्कालिक[१] इति।

अस्य संकेतो नोपलभ्यते ऋग्वेदे। परन्त्वथर्ववेदे एकस्मिन् सूक्ते कर्णवेधस्य चर्चा दृश्यते। परमियं चर्चा पशूनां कर्णवेधविषयिणीति प्रायेण मन्यते। अत एवैतच्छूक्तस्य कोपि मन्त्रः कर्णवेधप्रसङ्गे नोपयुक्तः क्वापि। परन्तु स्मृतिग्रन्थेऽस्य पुनश्चर्चा दृश्यत एवेत्यतो वयमेतमपि संस्कारमन्यतमं मत्वा विवेचयामः. स्मृतीनां श्रुत्यविरोधे श्रुतिमूलकत्वानुमानेऽभ्युपगतत्वात् प्रामाण्यस्य। अत एव देवलेन कर्णवेधाभावे पुरातनपुण्यप्रचयानामपि विलय उक्तः[२]।

**कर्णवेधकालः—**

एतच्च बाल्यावस्थायामेव कार्यमिति[३] विष्णुधर्मोत्तरे। तत्र जन्मतो दशमे द्वादशे षोडशे वा वासरे कर्णवेध[४] इत्येकं मतम्। अपरं च प्रथमे[५] सप्तमे

---

(१) हिन्दू संस्कार [पृ० १२९], एतदयुक्तम्, बौधायने समुपलब्धेः—
बौ० गृ० सू [१/१२/१]

(२) देवलः—कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः।
तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः॥
सं० र० मा० [पृ० ८७५], नि० सि० [पृ० ५१७], सं० प्र० [पृ० २६३]

(३) विष्णुधर्मोत्तरे—शिशोरेवाथ कर्त्तव्यं कर्णवेधं यथा शृणु॥
सं० प्र० [पृ० २६२]

(४) बृहस्पतिः—जन्मतो दशमे वाह्नि द्वादशे वाथ षोडशे।
सं० प्र० [पृ० २५८], सं० र० मा० [पृ० ८७२], सं० म० [पृ० २६]

मदनरत्ने वसिष्ठश्रीधरौ—वेध्यौ कर्णौ द्वादशे शोडशेऽह्नि॥
नि० सि० [पृ० ५१७]

मुहूर्त्तसंग्रह—दशमे द्वादशे वाह्नि षोडशे कर्णवेधनम्॥ सं० प्र० [२५८]

(५) मदनरत्ने—प्रथमे सप्तमे मासि अष्टमे दशमेऽथवा।
द्वादशे च तथा कुर्यात् कर्णवेधं शुभावहम्॥
नि० सि० [पृ० ५१७], सं र० मा० [पृ० ८७३], सं० प्र० [पृ० २५८]

अष्टमे दशमे द्वादशे वा मासे कर्णवेधनम् इति मदनरत्ने । यद्यपि व्यवहारोच्चये[1] जन्ममासे कर्णवेधप्रतिषेध उक्तस्तथापि —

"प्रथमे जन्ममासे तु कर्णवेधं शुभं विदुः"

इत्यादिवचनबलेन तन्निषेधो जन्मवर्षातिरिक्तद्वितीयादिवर्षगतजन्ममास-विषय एवेति संस्काररत्नमाला[2] । वस्तुतस्तु प्रथमजन्ममासेऽपि कर्णवेधप्रति-षेध एवोचितः । अत एव व्यासेनापि[3] जन्ममासे कर्णवेधप्रतिषेध उक्तः । न हि सर्वत्र संकोचे सति विशेषानुशासने युक्तः । नापि मदनरत्नस्थैकवचनादृते क्वचिदपि प्रथममासे तद्विधानं सन्दृष्टम् । अत एवान्यत्रापि प्रथमातिरिक्ता एव मासाः षष्ठसप्तमाष्टमदशमद्वादशमासानामेवं ल्लेखो[4] दृश्यते । अत्र जन्ममासो जन्मनक्षत्रादेरप्युपलक्षणम्[5] बोध्यम् ।

---

(१) न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते ।
दिने न रिक्ते न च विष्टियुक्ते कर्णस्य वेधं मुनयो वदन्ति ॥
सं० र० मा० [पृ० ८७३], सं० प्र० [पृ० २५९]

(२) सं० र० मा० [पृ० ८७३], मयूखे (पृ० २६) अप्येवमेवोक्तम् ।

(३) व्यास —यो जन्ममासे क्षुरकर्मयात्रां कर्णस्य वेधं कुरुतेऽतिमोहात् ।
मूढः स रोगी धनपुत्रनाशं प्राप्नोति गूढं निधनं तदाशु ॥
सं० प्र० [पृ० २५६], सं० म० [पृ० २६]

(४) मदनरत्ने वसिष्ठश्रीधरौ—
मासे षष्ठे सप्तमे वाऽष्टमे वा
वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि ॥ नि० सि० [पृ० ५१७]

गर्गः मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ॥ सं० प्र० [पृ० २५८]

संस्काररत्नमालायां तु—
'-मासेऽष्टमे सप्तमे वाप्यष्टमे वत्सरेऽपि वा' इत्यादिपाठः । तत्र "मासेऽष्टमे' इत्यपपाठः । अत एव मयूखेऽपि प्रकाशवदेव पाठः ।

बृहस्पतिः—सप्तमे मासि वा कुर्याद्दशमे मासि वा पुनः ॥
सं० र० मा० [पृ० ८७२], सं० म० [पृ० २६], सं० प्र० [पृ० २५८]

अत्रार्थे षष्ठे सप्तमे वा मासे कर्णवेधं सुश्रुतोऽपि मन्यते । द्र० सुश्रुतसंहिता, सू० स्था० अ० [१६।१]

(५) सं० प्र० [पृ० २५९]

श्रीपतिस्तु मातुरुत्संगसर्पिणो जातदन्तस्य शिशोरेव कर्णवेधमिच्छति[१]। तृतीये पञ्चमे वा वर्षे कर्णवेध इति पारस्करपरिशिष्टे कात्यायनः। अत एव राजमार्त्तण्डादौ अयुग्मवर्षे कर्णवेधविधानमुक्तम्[२]। अत्रापि पूर्वाभावे उत्तरोत्तराश्रयणमित्येव व्यवस्थोचितेति पश्यामः।

अत्र प्रशस्ता मासाः—

कर्णवेधे कार्त्तिकपौषचैत्रफाल्गुनमासाः प्रशस्ता इति व्यासः[३]। गर्गस्याप्येवमेवाशयः[४]। तथा च सति यदुक्तम् 'न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते' इति व्यवहारोच्चये[५] चैत्रपौषप्रतिविधानम् तत् क्रमेण मीनस्थार्कधनुरर्कविषयकमेव[६]। अत एव ज्योतिःसागरेप्येवमेवोक्तम्[७]। अत्र च व्यवहारोच्चये 'न हरौ प्रसुप्ते' इति प्रतिषेधात् कार्त्तिके व्यासोक्तं कर्णवेधविधानं प्रबोधिन्येकादश्युत्तरविषयकमिति न कश्चन विरोधः। तत्रापि शुक्लपक्षः प्रशस्तः[८]। तदभावे तु अन्त्यत्रिकं विना कृष्णेऽपीति[९] नृसिंहः।

दिनानि चात्र कर्मणि सोमबुधगुरुशुक्राणां प्रशस्तानि शनिरविमंगलानां[१०]

(१) श्रीपतिः शिशोरजातदन्तस्य मातुरुत्ससंगसर्पिणः॥ सं० र० मा० [पृ० ८७४], सं० प्र० [पृ० २६१]

(२) राजमार्त्तण्डे-अयुग्मवर्षे शुभदं शिशूनां कर्णस्य वेधं मुनयो वदन्ति। सं० प्र० [पृ० २५९]

(३) मदनरत्ने व्यासः—कार्त्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा॥
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभेदिने॥ नि० सि० [पृ० ५१७], सं० प्र० [पृ० २५९]

(४) सं० र० मा० [पृ० ८७३], सं० म० [पृ० २६]

(५) सं० प्र० [पृ० २५९], सं० र० मा० [पृ०८७३]

(६) सं० प्र० [पृ० २५९], सं० र० मा० [पृ० ८७३]

(७) मीनस्थिते रवौ चैत्रे पौषे चोपस्थिते तथा।
कर्णवेधं नैव कुर्यादिति प्राहुर्मनीषिणः॥ सं० र० मा० [पृ० ८७३]

(८) कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने॥ नि० सि० [पृ० ५१७]
अर्केऽनुकूले शशिनि प्रशस्ते ताराबले चन्द्रविवृद्धिपक्षे॥
सं० प्र० [पृ० २५९]

(९) सं० प्र० [पृ० २६०]

(१०) भूमिजार्कात्मजार्काणां दिवसान् परिवर्जयेत्।
जीवेन्दुजेन्दुशुक्राणां दिवसाः पूजिता मताः॥ सं० प्र० [पृ० २६०]

च वर्ज्यानीति वृहस्पतिः। संस्काररत्नमालायान्तु[१] वृहस्पतिवचनमेकमुद्धृतम् तत्रापि सत्यपि पाठभेदे नार्थभेदः। श्रीधरोऽप्येवमेवाह[२]। काश्यपस्तु गुरु-शुक्रयोरेव[३] प्राशस्त्यं मन्यते। एतदेव चोत्तमं कल्पं वयमपि मन्यामहे, वृहस्पतिना वारफलोपदेशप्रसंगे गुरुशुक्रयोः कर्णवेधस्य[४] सुफलत्वप्रतिपादनात्। तथा चैताभ्यामन्यत्र कर्णवेधो विहितोऽपि नोत्तमः, किन्तु अनयोरभाव एवेति युक्तमुत्पश्यामः। अनयोरपि दिवैव[५] कर्णवेधः प्रशस्तो न कदापि रात्रौ। तत्रापि मध्याह्नात्[६] पूर्वमेवेति विशेषः।

तिथयश्चाष्टमीपर्वरिक्तैकादशीवर्ज्याः[७] विहिताः। तत्रापि रिक्ता-पर्वणी विशेषेण वर्जनीये, श्रीधरीयादौ तयोरेव विशिष्य निषेधात्[८]। विहिता-स्वपि तिथिषु द्वितीया तृतीया पञ्चमी षष्ठी सप्तमी द्वादशी त्रयोदशी चोत्त-

---

(१) सं० र० मा० [पृ० ८७३]

(२) श्रीधरीये—शशिगुरुबुधकान्यानां दिने-नि० सि० [प्र० ५१७],
सं० र० मा० [पृ० ८७४]

(३) काश्यपः—गुरुशुक्रवारे कर्णौ तु वेध्यौ—सं० प्र० [पृ० २६०]

(४) एकं भद्रकमल्परन्ध्रमपरं स्यात् कर्णयुग्मं बुधे।
सोमे शीर्णतनुव्रणेन सहितं शस्तं गुरौ भार्गवे॥ सं० प्र० [पृ० २६०]

(५) वशिष्ठः·········कुर्याद्दिवसे विशेषाद्रात्रौ न कुर्यात्खलु कर्णवेधम्॥
सं० प्र० (पृ० २६१)

अगस्त्यः—रात्रावपि तथा लग्ने नक्षत्रतिथिसन्धिषु।
कर्णवेधं न कुर्वीत कुर्याच्चेत् छेदनं भवेत्॥
सं० र० मा० (पृ० ८७४)

(६) मदनरत्ने वसिष्ठश्रीधरौ—मध्येवाह्नः पूर्वभागे न रात्रौ
नि० सि० [पृ० ५१७]

(७) नृसिंहः—एकादश्यष्टमीपर्वरिक्ता वर्ज्याः शुभावहाः।
शिष्टाश्च तिथयः सर्वाः कृष्णे चान्त्यत्रिकं विना॥
सं० प्र० [पृ० २६०]

संस्काररत्नमालायान्तु [पृ० ८७३] इदमेव वचनं 'मदनरत्ने वृहस्पतिः इति प्रकृत्योद्धृतम्।

(८) श्रीधरः—पर्वरिक्तारहिततिथिषु-नि० सि० [पृ० ५१७],
सं० र० मा० [पृ० ८७४]

मत्वेन ग्राह्या, विशेषेणोपदेशात्[1]। एताश्च तिथयः शुक्लपक्षे[2] उत्तमाः, तदभावे च कृष्णपक्षेऽपि, परन्तु अन्त्यत्रिकं विनेत्युक्तेः त्रयोदशी कृष्णपक्षस्य वर्ज्येति निर्णय । तत्रापि यत्र दिने[3] तिथिद्वयसमावेशः तत्र न कार्यमेवैतत् कर्मेति ध्यातव्यम् ।

अत्र नक्षत्राणि च मृगशिरः, आर्द्रा, पुष्यः, उत्तरात्रयम्, पुनर्वसुः, हस्तः, चित्रा, अश्विनी, श्रवणः, धनिष्ठा, रेवती चेति[4]। चण्डेश्वरेण तु स्वात्यप्युक्ता[5]। श्रीधरीये तु[6] न। तत्र सर्वसम्मतनक्षत्राण्युत्तमानि अन्यत्तु मध्यममिति निर्णयः। स्वात्यास्तु दीपिकायामप्युल्लेखात्तस्या[7] अप्युत्तमत्वमेव वा। परन्तु यस्मिन् नक्षत्रद्वयसमागमस्तस्मिन् कर्णवेधो न कार्य[8] एव।

**योगाः—**

अत्र च शकुनिचतुष्पान्नागकिंस्तुघ्नव्यतीपातादयो योगा अपि वर्ज्याः, तदितरास्तु यथायथं परिग्राह्याः[9]।

---

(१) वृहस्पतिः—द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥
सं० प्र० [पृ० २६०], नि० सि० [पृ० ५१७]

(२) व्यासः—कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने। सं० प्र० [पृ० २५६]

(३) मदनरत्ने वशिष्ठश्रीधरौ—द्वे तिथी वर्जयित्वा ॥ सं० र० मा० [पृ० ८७४], नि० सि० [पृ० ५१७]

(४) वृहस्पतिः—सौम्यार्द्रायोत्तरादित्यहस्तचित्राश्विविष्णुभम्।
श्रविष्ठा रेवती चैव शुभान्येतानि वेधने ॥
सं० र० मा० [पृ० ८७३]

संस्कारप्रकाशेप्येतदुद्धृतम्, कियता पाठान्तरेण सह, न त्वर्थभेदः।

(५) हस्ताश्विनीस्वातिपुनर्वसू च तिष्येन्दुचित्राहरिरेवतीषु ॥
सं० र० मा० [पृ० ८७३]

(६) हरिद्वयकरचित्रासौम्यपौष्णोत्तरार्यादितिवसुषु——कर्णवेधः ॥
नि० सि० [पृ० ५१७], सं० र० मा० [पृ० ८७४]

(७) शस्तेऽर्के लघुविष्णुयुग्ममृदुभास्वात्युत्तरादित्यभे ॥ सं०प्र० [पृ० २५९]

(८) नक्षत्रे द्वे···वर्जयित्वा। नि० सि० [पृ० ५१७]

(९) काश्यपः—शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ॥
सं० प्र० [पृ० २६०]

सुबोधे—दिनच्छिद्राव्यतीपातविष्टिवैधृतिवर्जिते ॥
सं० र० मा० [पृ० ८७४]

**राशयः—**

राशयश्च वृषभमिथुनमीनकर्कंकन्यातुलाधनुःसंज्ञका उत्तमाः, मेषमकरौ मध्यमौ, सिंहवृश्चिककुम्भा अधमाः कर्णवेधे[1]।

**ग्रहाः—**

ग्रहाश्चात्र--षष्ठनवमद्वादशस्थानगतभिन्नो गुरुः, सप्तमाष्टमस्थानादभिन्नः शुक्रः, द्वितीयतृतीयपञ्चमसप्तमनवमदशमस्थः चन्द्रश्च-शुभाः[2]।

**अत्र सूचीनिर्णयः—**

तत्रसुवर्णमयी रजतमयी लौहमयी वा सूची[3] विधातव्या। तत्र च सौवर्णी सूची क्षत्रियाणाम्, राजती विप्रवैश्यानाम्, लौहमयी च शूद्राणां कृते इति विशेषः[4]। इयं च सूची शुक्लतन्तुसमायुक्तापि स्यात्। ज्योतिरर्णवे तु ताम्रमयी सूची निर्दिष्टा[5]। तत्र विकल्पो विज्ञेयः, सौवर्ण्याद्यभावे ताम्रमयी स्यादिति फलितार्थः।

अस्याः सूच्याः प्रमाणं तु 'मध्यमाष्टाङ्गुलात्मिका' इति बृहस्पतिवचनात् 'बालस्य मध्यमाङ्गुलिमध्यपर्वमिताङ्गुलेनाष्टाङ्गुलेत्यर्थः' इति संस्काररत्नमालादयः[6]। न चैतद्युक्तम्। अक्षरैर्णैतादृशार्थलाभात् अत उक्तस्य

---

(१) नारदः—वृषभे मिथुने मीने कुलीरे कन्यकासु च।
तुलाचापे तु कुर्वीत कर्णवेधं शुभं द्वये ॥
मेषश्च मकरश्चैव मध्यमौ गुरुवोदितौ ॥
सिंहवृश्चिककुम्भाश्च अधमत्वाद्विवर्जिताः ॥
सं० प्र० [पृ० २६१], सं० र० मा० [पृ० ८७४]

(२) बृहस्पतिः-रन्ध्ररिव्ययगो नेष्टो गुरुः शेषः सुशोभनः।
सप्ताष्टमगतः शुक्रो न शुभोऽन्यत्र शोभनः॥ सं० प्र० [पृ० १६१]

(३) शातकुम्भमयी सूची वेधने शोभनप्रदा।
राजती चायसी वापि यथाविभवतः शुभा॥
सं० प्र० [पृ० २६],सं० प्र० [२६२], सं० र० मा० [पृ० ८७४]

(४) सौवर्णी राजपुत्रस्य राजती वैश्यशूद्रयोः।
शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका॥ सं० प्र० [पृ २६२],
सं० र० मा० [पृ० ८७४]

(५) शुक्लसूत्रसमायुक्तताम्रसूच्याथ वेधयेत्॥ सं०र० मा० [पृ० ८७४],
सं० प्र० [पृ० २६२]

(६) सं० र० मा० [पृ० ८७४]

वृहस्पतिवचनस्य मध्यमाचासावष्टाङ्गुलेति युक्तोऽर्थः। मध्यमा नातिस्वल्पा नापि अतिदीर्घेति तु फलितोऽर्थः[1]।

## अत्र छिद्रप्रमाणम्—

कर्णवेधने छिद्रप्रमाणविषये शंखेनोक्तम् अङ्गुष्ठमात्रम्[2] इति। तच्च वालस्यैवाङ्गुष्ठमात्रं स्यात्। यद्यपि अद्य कर्णवेधे प्रायेण स्वल्पमेव छिद्रं क्रियमाणं दृश्यते तथापि दाक्षिणात्यैरधुनापि अङ्गुष्ठमात्रं छिद्रं विधीयत एव।

## मुख्यं कृत्यम्—

तत्र पूर्वाभिमुखं शिशुं संस्थाप्य किञ्चिन्मिष्टान्नादि तस्मै प्रदाय 'भद्रं कर्णेभिः शृणुयाम देवाः' इत्यादिमन्त्रेण दक्षिणवामकर्णौ क्रमेण वेधयेत् इति कात्यायनेनोक्तम्। परस्ताच्च संस्कारस्यास्य विधिः कश्चिद्विकासमाप्तवान्। तत्स्वरूपं विष्णुधर्मोत्तरे वर्णितम् - प्रथमतो विष्ण्वादिदेवपूजनम् ततो वरासने शुभ्रवस्त्र-परिष्कृतया धात्र्या (=मात्रा) शिशूपवेशनम्, ततश्च रक्तरसाङ्कितयोर्दक्षिणवामकर्णयोः युगपदेव वैद्ययोषिद्भ्यां वेधनम्, ततः शिशुविनर्धनम् तत्सन्तोषाय, ततश्च ब्राह्मणादिपूजनभोजनेन कर्मसमाप्तिः[3]।

---

(१) सं० प्र० [पृ० २६२]

(२) अङ्गुष्ठमात्रसुषिरौ कर्णौ न भवतो यदि।
तस्मै श्राद्धं न दातव्यं दत्तं चेदासुरं भवेत्॥ नि० सि० [पृ० ५१८]

(३) विष्णुधर्मोत्तरे–शिशोरेवाथ कर्तव्यं कर्णवेधं यथा शृणु।
पूर्वाह्णे पूजनं कुर्यात् केशवस्य हरस्य च॥
ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च।
नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा॥
गुरूणां मण्डनं कृत्वा तत्र दत्वा वरासनम्।
तथोपवेशयेत्तत्र धात्रीं शुक्लाम्बरां तथा॥
अलंकृतं तदुत्संगे वालं धृत्वा तु सान्त्वितम्।
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते॥
विध्येदेवं कृते छिद्रे सकृदेवात्र लाघवात्।
प्राग्दक्षिणे कुमारस्य भिषग्वामे तु योषितः॥
शिशोर्विवर्धनं कार्यं यावदाभरणक्षयम्।
कर्णवेधदिने विप्राः सांवत्सरचिकित्सकौ॥
पूज्याश्चाविधवा नार्यः सुहृदश्च तथा द्विजाः॥
सं० र० मा० [पृ० ८७५], सं० प्र० [पृ० २६३]

सुश्रुते तूक्तम्[1]—जन्मतः षष्ठे सप्तमे वा मासे शुक्ले पक्षे शिशोर्मिष्टान्न-भोजनानन्तरं भिषजा वेधनीयम्, पश्चाच्च तूलवर्त्तिकया छिद्रे तैलप्रक्षेपणं कुर्यात् इति। एतच्च कर्म शिशुरक्षाभूषणार्थमित्यपि तत्रैवोदितम्। अनेन कर्मणा अण्डकोशवृद्धिः अन्त्रवृद्धिश्च निरुध्यते इत्यपि फलमभिहितम्। तथा चेदं प्रतिफलति—पूर्वं स्वास्थ्यहेतुकमेवेदं कर्म क्रियमाणं परस्तात् स्मृतिकृद्भिः धर्मशास्त्रे निबद्धम्।

**कर्णवेधकर्त्ता—**

कात्यायनेन पारस्करपरिशिष्टे पिता कर्म कुर्यात् इत्युक्तम्। परन्तु वेधनमपि पित्रैव कार्यमिति तु नोपलभ्यते तत्र। बालकस्य दक्षिणकर्णस्य भिषजा कन्यायाश्च वामस्य वेधनमुक्तम्—विष्णुधर्मोत्तरे। सुश्रुते तु भिषजा वेधनमुक्तम्। संग्रहे पुनः सौचिकेनाभिहितम्। तत्र सौचिकः सूचीनिर्माता। सूची च यदा सुवर्णादिमयी भवति तदा स्पष्टमेवैतत् स्वर्णकारेण कार्यमिति। सम्प्रति शिष्टाचारो प्येवं रूप एव दृश्यते।

एतच्च कर्म स्त्रीशूद्रयोरपि भवत्येव। अत एव विष्णुधर्मोत्तरे—

विध्येदेवं कृते छिद्रे सकृदेवात्र लाघवात्।

प्रागद्क्षिणे कुमारस्य भिषग्वामे च योषितः[2] ॥ इत्यत्र योषितोऽपि कर्णवेध उक्तः। अतएव च बृहस्पतिनाऽपि—

सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः।

शूद्रस्य चायसी सूची मध्यमष्टाङ्गुलात्मिका[3] ॥ इति।

वक्तव्ये शूद्रार्थमपि सूचीविधानं कृतम्। यदि हि स्त्रीशूद्रयोः कर्णवेधो भवेदेव न शास्त्रीयस्तर्हि तस्याः कन्यायाः वामकर्णवेधनं योषिता, शूद्रार्थं च सूचीपरिमाणादिवर्णनमनर्थकमेव स्यात्। तस्मात् भवत्येवानयोरपि कर्णवेधः। अत एव च मनुनापि संस्कारातिदेशे- अमन्त्रिका[4] तु कार्ये स्त्रीणामावृदशेषतः' इत्यनेन, याज्ञवल्क्येन च 'तूष्णीमेताः[4] क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः' इत्यनेन सामान्येनैवातिदेशः।

---

(१) सं० प्र० [पृ० २६२]
(२) सं० प्र० [पृ० २६२]
(३) म० स्मृ० [२।६६]
(४) या० स्मृ० [१/१३]

# (१०) अक्षरारम्भः

अक्षरस्य लिप्युल्लेखस्य आरम्भो यत्र कर्मणि तत् अक्षरारम्भः। इदमेव कर्म विद्यारम्भादिपदैरप्युपदिश्यते। तथा चेदमपि कर्मनामधेयमेवान्वर्थम् चूडाकरणादिवदिति सिद्धम्।

अयं च संस्कारो नातिप्राचीन ऐतिहासिकदृष्ट्या प्राचीनेषु गृह्यसूत्रादिषु कुत्राप्यस्य नाम विधिर्वा नोपलभ्यते। निबन्धेष्वपि बहुषु नैव दृश्यते। परन्तु निर्णयसिन्धुस्मृतिचन्द्रिकादिषु केषुचन निबन्धग्रन्थेषु अस्य स्पष्टं विवरणमुपलभ्यते। एते च ग्रन्था नवीनाः[1] नातिप्राचीनाः। यान्यपि वचनानि समुद्धृतानि सिन्धवादिषु निबन्धेषु तान्यपि खृस्ताब्दकालस्याष्टम्याः सप्तम्या वा शताब्द्याः प्राक्तनानि न[2] सन्ति। अतो निणतुं शक्यते यदयं संस्कारः परमर्वाक्कालिक एवेति[3]।

अत्रेदमपि विज्ञेयम्—पुराहि वेदाद्यध्ययनं न लिपिज्ञानमपेक्षते स्म। श्रवणपरम्परयैव ह्यध्ययनकर्म प्रचलति स्म। अत एव 'श्रुतिः' इति नामापि संगच्छते। लिपेराविर्भावो भारतभूमौ डा० बूलरमहाशयानुसारेण ई० पू० ८०० वर्षाभ्यन्तरमेव जातः। ओझा महाशयस्तु ई० पू० -१६००-१२०० वर्ष लिपिज्ञानं भारतीयानामासीत् इति प्रमाणयति[4]। अतश्चापि निर्विवादमेतत् यत् विद्यारम्भः पश्चात्कालिक एव न तु जातकर्मादिवत् प्राचीनतमः संस्कार इति।

**अक्षरारम्भकालः—**

अक्षरारम्भश्च चूडाकरणात् पश्चादेव[5] भवति। यत्तु अल्तेकरमहाशयेन चूडाकरणेन सहैवाक्षरारम्भ उक्तः तत् चूडाकरणस्य तृतीयादूर्ध्वं

---

(१) हिस्ट्री आफ धर्मशास्त्र, [पृ० ४४०-३४३, ३२८]

(२) एजूकेशन इन एंश्येण्ट इण्डिया, [पृ० २]

(३) हिन्दू संस्कार, [पृ० १३७-१३८]

(४) हिन्दू संस्कार, [पृ० १३९]

(५) वृत्तचौलकर्मा लिपिं संख्यानञ्चोपयुञ्जीत॥ आ० शा० [१/२], स वृत्तचौलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः। लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्॥ रघु० [२/२८], निवृत्तचौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन मनसा परिनिष्ठापिताः॥ उ० रा० च० [अंकः-१]

सम्पन्नत्वे सत्येव। वस्तुतस्तु चूडाकरणे तृतीये चतुर्थे पञ्चमे तत ऊर्ध्वं वा भवेत् विद्यारम्भचूडाकरणयोर्न सहभूतत्वम् अपि तु चूडाकरणानन्तरमेव अक्षरारम्भ इति निश्चय.। यदि तु केनापि कारणेन पञ्चमवर्षपर्यन्तं चूडाकारणं न वृत्तम् तर्हि तत्पूर्वमपि विद्यारम्भस्यातिप्रयोजनकत्वात् इत्यस्मभ्यं रोचते।

स चायमक्षरारम्भः शिशोः पञ्चमे वर्षे जन्मतः[1] कार्यः। तत्रापि आषाढशुक्लद्वादश्या[2] हरिशयनतिथेः पूर्वमेवेति बोध्यम्[3]। इदं च कर्म यथासम्भवमुत्तरायणगते सूर्ये[4] शुक्ले पक्षे कर्त्तव्यम्, कृष्णेप्यन्त्यत्रयं विना[5]। परन्तु कुम्भमासस्य स्पष्टतः प्रतिषेधात् उदगयनेऽपि मकरादयो मिथुनान्ताः पञ्च मासा एवात्र विहिताः संविज्ञेयाः।

---

(१) मार्कंडेय :—प्राप्तेऽथपञ्चमे वष विद्यारम्भं तु कारयेत्॥
स० म० [३१]

(२) विष्णुधर्मोत्तरे–आषाढशुक्लद्वादश्यां शयनं कुरुते हरिः।
निद्रां त्यजति कार्त्तिक्यां तयोः सम्पूज्यते हरिः ॥
सं० र० मा० [पृ० ९०५]

(३) विश्वामित्रः–प्राप्ते तु पञ्चमे वर्षे त्वप्रसुप्ते जनार्दने।
विद्यारम्भस्तु कर्त्तव्यो यथोक्ततिथिवासरे॥
सं० प्र० [पृ० ३२१]

विष्णुधर्मोत्तरे–प्राप्ते तु पञ्चमे वर्षे अप्रसुप्ते जनार्दने॥
एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत्॥
सं० म० [पृ० ८१]

(४) श्रीधरीये–उदग्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम्॥
स० र० मा० [पृ० ९०४]

(५) अयनविधिरत्ने—बालस्य पञ्चमे वर्षे प्राप्ते भानौ मृगादिगे।
आरभेताक्षरविधिं शुभे काले यथोदिते॥
सं० प्र० [पृ० ३२१]

नृसिंहः—अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने।
उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत्॥
शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिक विना॥
सं० र० मा० [पृ० ९०५], नि० सि० [पृ० ५२९]

मुहूर्त्तसंग्रहे—उत्तरायणगे सूर्ये कुम्भसासं विवर्जयेत्।
पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना॥
सं० प्र० [पृ० ३२२]

यदि तु कथञ्चित् पञ्चमे न कृतस्तर्हि सप्तमे कार्यं इति षोडशसंस्कारपद्धतिकृतः। एतच्च उपनयनात् पूर्वमक्षरारम्भप्रमाणकेन बृहस्पतिवचनेनापि[1] ज्ञायते। परमयं द्वितीयः कल्प एव। प्रथमस्तु पञ्चमवर्षं एवेति ज्ञेयम्।

दिनानि—

दैवरातश्चन्द्रवारमिच्छति[2]। मार्कण्डेयेन तु चन्द्रादिदिनेऽक्षरग्रहणेऽनिष्टमुद्घोष्य रविगुरुशुक्रदिनेषु प्राशस्त्यमुक्तम्[3]। वसिष्ठेन तु बुधगुरुशुक्राणां दिने उत्तमत्वम्, चन्द्रसूर्ययोर्मध्यमत्वम्, शनिमङ्गलयोर्वर्ज्यत्वमभिहितम्[4]। राजमार्तण्डे तु पुनः गुरोरेवोत्तमत्वम्, रविशुक्रयोर्मध्यमत्वम्, शनिभौमयोर्मरणप्रयोजकत्वम्, बुधसोमयोश्चाविद्याजनकत्वमुदितम्[5]। अत्र बुधस्य निषेधो धनुर्विद्यामात्रविषय इति व्याख्यातारो मन्यन्ते, ग्रन्थान्तरे तस्य विद्यान्तरारम्भे प्राशस्त्याभिधानात्। तथा चाह श्रीपतिः[6]। तथा च सर्वेषामविरोधेन रविगुरुबुधशुक्राणां दिनानि अपराह्णकाले च सोमदिनमपि

---

(१) द्वितीयजन्मनः पूर्वमारभेताक्षरान् सुधीः॥ सं० र० मा० [पृ० ९०४]

(२) चन्द्रवारे पराह्णे तु विद्यायुक्तिर्विधीयते॥ सं० प्र० [पृ० ३२२]

(३) वारे दिनेशभृगुपुत्रबृहस्पतीनां विद्वानसौ भवति यातिविमूढबुद्धिः। चन्द्रे च चन्द्रतनये त्वकृशे च सर्वं, विघ्नो भवेदविनिजे रविजे विनाशः॥ सं० र० मा०, [पृ० ९०५]

(४) दिवसांशे दया वर्ज्या यत्नेन कुजसौरयोः।
श्रेष्ठाः सिजज्ञजीवनां मध्यमाश्चन्द्रसूर्ययोः॥
रविवारे तु पूर्वाह्णे विद्यारम्भो विशिष्यते।
चन्द्रवारे पराह्णे तु विद्या गुर्वी विधीयते॥
सं० र० मा० [पृ० ८०५], सं० प्र० [पृ० ३२३]

(५) राजमार्त्तण्डे—विद्यारम्भे गुरुः शस्तो मध्यमौ भृगुभास्मरौ।
मरणं शनिभौमाभ्यामविद्या बुधसोमयोः॥ सं० प्र० [पृ० ३२३]

(६) विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टार्थदायी
कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान् मध्यमोऽत्र।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः॥
सं० प्र० [पृ० ३२३]

विद्यारम्भे प्रशस्तानीति प्रतीयते । शनिमङ्गलौ तु विशिष्य[1] वर्जनीयौ ।

तिथयः—

प्रतिपत्षष्ठ्यष्टमीपञ्चदश्यः रिक्ता च[2] वर्ज्याः । वृहस्पतिस्तु गलग्रहमपि निषेधयति[3] । गलग्रहाश्च त्रयोदशीचतुर्दशीपञ्चदशीप्रतिपदः, सप्तम्यष्टमीनवम्यः चतुर्थी च[4] । परन्तु अक्षरग्रहणे त्रयोदशी प्रशस्तैवेति देवरातेन[5] प्रतिप्रसव उक्तः । तथा च वृहस्पतिवचनगतस्त्रयोदशी प्रतिषेधो विद्यान्तरविषयो वा कर्मान्तरविषयो वा बोध्यः ।

नक्षत्राणि—

हस्तः, पुनर्वसुः, स्वाती, अनुराधा, ज्येष्ठा, रेवती, अश्विनी, चित्रा,

---

(१) विष्णुपुराणे—सौरभौमदिनं तथा (वर्जयित्वा) । सं० म० [पृ० ३१]
मार्कण्डेयः—सौरभौमदिनं तथा (वर्जयित्वा) । सं० प्र० [पृ० ३२२]
दीपिकायाम्—वर्षं पर्जन्यके काले षष्ठीं रिक्तां शनिं कुजम् ।
अनध्यायान् विना नत्वा देवं ग्रन्थकृतं गुरुम् ॥
नि० सि० [पृ० ५२९]

(२) विष्णुपुराणे—षष्ठीं प्रतिप्रदं चैव वर्जयित्वा तथाष्टमीम् ।
रिक्तां पञ्चदशीं चैव सौरभौमदिने तथा ॥
सं० म० [पृ० ३१]
कियता पाठान्तरेण सहायमेव श्लोको मार्कण्डेयेनापि पठितः
संस्कारप्रकाशे । [पृ० ३२२]
श्रीधरः—पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं
षष्ठीमष्टमशुद्धभाजि भवने प्रोक्ताक्षरे स्वीकृतिः ॥
नि० सि० [पृ० ५२९]
नृसिंहः—रिक्तां षष्ठीं प्रतिपदं पर्वाष्टम्यौ च वर्जयेत् ॥
सं० प्र० [पृ० ३२२]

(३) विद्यारम्भो व्रतोद्देशः क्षौरं चैव विशेषतः ।
गलग्रहे न कर्तव्यं यदीच्छेत् पुत्रजीवितम् ॥ सं० प्र० [पृ० ३२२]

(४) राजमार्तण्डे—त्रयोदश्याश्चतुष्कं च सप्तम्यादितिथित्रयम् ।
चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः ॥
सं० प्र० [पृ० ३२२]

(५) त्रयोदश्यक्षरे श्रेष्ठा । सं० र० मा० [पृ० ९०५]

श्रवणश्चेति नक्षत्राणि विहितानि अक्षरारम्भे[1] इति श्रीधरः। अन्येषामाचार्याणमपि[2] मतमेतदेव।

अक्षरारम्भे अनध्याया अपि वर्जनीयाः[3]। तत्रापि विशेषेण प्रतिपदष्टमी चतुर्दशी अमावास्या पूर्णिमा अनध्यायदिनपूर्वगता रात्रिश्चेति हारीतः[4]। टोडरानन्दे तु अनध्यायात्पूर्वे दिने परे च अनध्याय उक्तः[5]। नारदस्तु अयने, विषुवे (तुलामेषयोः), हरिशयिन्याम् द्वादश्यां कार्त्तिकशुक्लपक्षगामिन्याम् प्रबोधिन्यां चाषाढशुक्लद्वादश्याम् मन्वादियुगादिषुं चानध्यायमाह[6]। अनध्यायाश्चाक्षरारम्भानन्तरमपि अध्ययने वर्जनीया एव[7]।

## अक्षरारम्भविधिः—

तत्र प्रथमं सरस्वतीं गणेशं च गुडौदनादिभिः सम्पूज्य अक्षरारम्भं

---

(१) हस्तादित्यसमीरमित्रपुरुजित्पौष्णाशिवचित्राच्युते-
ष्वारार्क्यंशुदिनोदयादिरहिते राशौ स्थिरे चोभये ॥
नि० सि० [पृ० ५२९]

(२) नृसिंहः—हस्तादित्यमरुन्मित्ररौद्रपौष्णाशिवचित्रभम्।
श्रवणं च प्रशस्तं स्यादक्षरग्रहणे शिशोः ॥
भीमपराक्रमः—चित्राश्विनीश्रवणवासवपुष्यपौष्ण-
पूर्वात्रयश्वसनदैवतनैर्ऋतानि ।
मित्रेन्दुतिग्मकिरणादितिदैवतानि
विद्याविवृद्धिमधिकां जनयन्त्यमूनि ॥
सं० प्र० [पृ० ३२३-२४]

(३) अनध्यायाख्यतदाद्यवर्जिततिथौ—महेश्वरः ॥
सं० र० मा० [पृ० ९०५]

(४) प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः।
श्वोऽनध्यायेऽद्यशर्वर्यां नाधीयीत कदाचन ॥ नि० सि० [पृ० ५६३]

(५) अयने विषुवे चैव शयने बोधने हरेः।
अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु ॥ नि० सि० [पृ० ५६३]

(६) अयने विषुवे चैव शयने बोधने हरेः।
अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥ नि० सि० [पृ० ५६३]

(७) ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत् ॥
सं० प्र० [पृ० ३२५], सं० म० [पृ० ३१]

कुर्यादिति श्रीधरीये[1] वसिष्ठः। नृसिंहस्तु[2] तदनन्तरं गुरुपूजनम्, विष्णुधर्मोत्तरे च[3] ब्राह्मणानां धात्र्याश्च पूजनं विधाय पश्चिमाभिमुखः शिशुरक्षरारम्भं कुर्यादित्युक्तम्। गुरवः पित्रादयः, धात्री माता, गुरुराचार्यः क्रमेण विष्णुधर्मोक्तो वोध्यः।

मार्कण्डेयेन तु कश्चिद्विशेष[4] उक्तः—

प्रथममभ्यङ्गस्नानं विधाय शुक्लवस्त्रं परिधाय गन्धादिविभूषितः शिशुः तण्डुलोपरि हरिं लक्ष्मीं सरस्वतीं स्वविद्यासूत्रकारान् स्वां विद्यां चार्चयेत्। ततश्च एतेषामेव देवानां नाम्ना घृताहुतीः दद्यात् विप्रांश्च यथाशक्ति सदक्षिणं सम्पूजयेत्। तदनन्तरं प्राङ्मुख आसीनो गुरुः पश्चिमाभिमुखमासीनं शिशुं पाठयेत्—अक्षरग्रहणं कारयेत्। भविष्यति चानध्यायान् वर्जयेच्च। अत्रापि गुणोपसंहारन्यायेन गुरुधात्रीपूजनं कर्त्तव्यमेवेति युक्तं मन्यामहे

---

(१) सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरभिपूज्य कुर्यात्॥

सं० र० मा० [पृ० १०४]

(२) वाचं गणपतिं चेष्ट्वा गुरुं पश्चाद्यथाक्रमम्।
आददीत गुरोर्विद्यां वारुण्यभिमुखः शिशुः॥

(३) ब्राह्मणानां गुरूणां च देवतानामनन्तरम्।
ततः सम्पूज्य वित्तेन धात्रीं रामगुरुं तथा॥

सं० प्र० [पृ० ३२५], सं०र० मा० [पृ० १०६]

(४) मार्कण्डेयः—अभ्यङ्गस्नानपूर्वं तु गन्धाद्यैश्च विभूषितः।
शुक्लं वस्त्रं समास्तीर्य तण्डुलोपरि पूजयेत्॥
पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम्।
स्वविद्यासूत्रकारांश्च स्वांविद्यां च विशेषतः॥
एतेषामेव देवानां नाम्नापि जुहुयाद् घृतम्।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यं चात्र पूजनम्॥
प्राङ्मुखो गुरुरासीनो वारुण्याशामुखः शिशुः।
अध्यापयीत प्रथमं द्विजाशीर्भिः प्रपूजितम्॥
ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत्॥

सं० र० मा० [पृ० १०५-६], सं० प्र० [पृ० ३२५]

वयम् । सरस्वतीपूजनं च गर्गोक्तविधिना[1] ।

एवमेव शिशोरतिमाङ्गलिकः सर्वार्थसाधकः संस्कारः अक्षरारम्भ-विद्यारम्भादिपदवाच्यो विधेयः ।

अयं संस्कारः स्त्रिया अपि विधेयः शूद्रस्यापि चामन्त्रकः । गुरुश्च ब्राह्मणजातीय एवेति धर्मशास्त्रव्यवस्था । आपत्काले तु अन्येषामपि गुरुत्वमास्थेयम्[2] एव । परन्तु शूद्रस्य सर्वथैव प्रतिषेध उक्तो धर्मशास्त्रनिबन्धादिषु ॥

---

(१) अत्र सरस्वतीपूजनेऽपि विशेषमाह गर्गः—'स्नात्वा शुचौ समे देशे गोचर्ममात्रमुपलिप्य सैकतं स्थण्डिलं कृत्वा पलाशशाखया मृदं खनित्वा तत्र सरस्वतीमावाहयेत्—'भुवनमातः सर्ववाङ्मयरूपे आगच्छ आगच्छेति' । ततः प्रणवेनासनार्घ्यंपाद्याचमनीयस्नानवस्त्र-गन्धपुष्पाक्षतधूपदीपयामसगुडौदननैवेद्यसमर्पणनमस्कारान् कृत्वा विघ्नेशं सम्पूज्य आचार्यं शक्तितो वस्त्रालङ्कारादिभिः पूजयित्वा सरस्वतीविघ्नेशाचार्यान् त्रिः प्रदक्षिणीकृत्य प्रणवपूर्वकमक्षरमारभेत् । ततः आचार्यादिवन्दनं कृत्वा सरस्वत्यादीनावाहनक्रमेणोद्वासयेत् । विद्यावृद्धिर्भवति ।। सं० र० मा० [पृ० ९०६]

(२) अधीयीरंस्त्रयो वर्ण्यः स्वकर्मस्था द्विजातयः ।
प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निश्चयः ॥
अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या तु शुश्रूषा यावदध्ययनं गुरोः ॥
म० स्मृ० [१०/१; २/२४१]

# ( ११ ) उपनयनम्

इदं हि कर्मातिमहत्त्वपूर्णम् वर्तते। अनेनैव कर्मणा 'द्विज' इति शब्दव्यपदेश्याः ब्राह्मणक्षत्रियवैश्याः[1]। अतः कर्मैतत् अतितमं प्रमुखम्। अत्रैव कर्मणि सावित्रीदीक्षा द्विजेभ्यो दीयते। इयं हि सावित्री सकलशास्त्रसारभूता[2], तस्या अत्र कर्मणि दीक्षया इदं कर्मापि महत्।

अत्रेदमप्यवधातव्यम्—दीक्षायाः प्रकारान्तरेण विधानम् प्रायः सर्वत्र दृश्यते। क्वचन असभ्यसमाजे सहनशक्तिपरीक्षणक्रमेण युवा माणवकः समाजे दीक्षितः क्रियते[3]। अन्यत्र च समाजे अस्थाय्येकान्तवासेन कन्या दीक्ष्यन्ते[4]। कस्मिंश्चिच्च वन्यसमाजे किमपि अंगं विनाश्य दीक्षा प्रदीयते[5]। इस्लामधर्मानुयायिनां यवनानान्त्वद्यापि शिश्नाग्रच्छेदः दीक्षितुं क्रियते तस्मिन् धर्मे यवनान्। अस्माकमुपनयनमपि दीक्षैव परा। परन्त्वत्र महती सांस्कृतिकी आध्यात्मिकी च भावना प्रतिष्ठिता वर्त्तते।

उपनयनं वैदिकयुगादेव प्रसिद्धं कर्म। ऋग्वेदे धर्मविद्याध्येत्रर्थे ब्रह्मचर्यशब्दः प्रयुक्तोऽस्ति[6]। सद्य उपनीतस्यापि माणवकस्योल्लेखोऽत्र वर्त्तते[7]। अथर्ववेदे तु उपनयनशब्दस्यापि क्रियास्वरूपं पदं प्रयुक्तमस्ति[8]।

---

(१) मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्।
ब्राह्मणक्षत्रियविशास्तस्मादेते द्विजाः स्मृताः॥ या० स्मृ० [१/३९]

(२) त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥ म० स्मृ० [२/७७]

(३) फ्रेजर-गोल्डेन वाउ, [पृ० ४४२]

(४) ,, ,, ,, [पृ० २०४]

(५) हर्बर्ट स्पेन्सर-प्रिन्सिपुल्स आफ सोशियोलाजी, [१।१८९,२९०]

(६) ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम्॥
ऋ० वे० [१०/१०९/५]

(७) ऋ० वे० [३/८/४-५]

(८) आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्त्ति तं जातं द्रष्टुमभिसयन्ति देवाः॥
अ० वे० [११/५/३]

एवमेवात्रैव सूक्ते मेखलाधारणस्य कृष्णमृगचर्मपरिधानस्य अभिषेकस्य भैक्षचर्यायाश्च स्पष्टमुल्लेखो विद्यतेऽथर्ववेदे[1]।

ब्राह्मणेषु त्वस्य[2] कर्मणः स्वरूपं परिनिष्ठाभिमुखमासीत्। उपनिषदि तु[3] प्रायेण सर्वत्रैव चर्चास्य लभ्यते। अतो वक्तुं शक्यते यदुपनयनं सर्वथैव वैदिकं कर्मेति।

## उपनयनशब्दार्थ :—

अथर्ववेदे[4] ब्रह्मचारिग्रहणमर्थं उपनयनशब्दस्याभिप्रेतः। शतपथ-ब्राह्मणेऽपि[5] एष एवार्थः। आचार्यस्य उप=समीपे नयनम् उपनयमिति[6] गदाधरः। अध्ययनार्थम् आचार्यस्य उप समीपं नीयते येन कर्मणा तदुपनयनम् इति गोभिलभाष्ये भट्टनारायणः[7]। अत्रैव तर्कालङ्कार उद्धृतवान् स्मृतिद्वीयम् करणव्युत्पत्तिप्रसाधनपराम्—

गृह्योक्तकर्मणा येन समीपं नीयते गुरोः।
बालो वेदाय तद्योगात् बालस्योपनयं विदुः॥
गुरोर्व्रताय वेदस्य यमस्य नियमस्य च।
देवतानां समीपं वा येनासौ नीयते द्विजः[8] ॥—इति।

उपनयनं च विधिना आचार्यसमीपनयनम्, अग्निसमीपनयनम्, सावित्रीवाचनं वान्यदङ्गमिति स्मृत्यर्थसारे[9]। उपनयनं नाम यस्मिन् कर्मणि येन कर्मणा वा आचार्येण विद्यार्थं सुमुहूर्ते कुमारस्य स्वसमीपे नयनम् इति संस्कारतत्त्वमालायाम्[10]। एवमेव—

---

(१) अ० वे० [११/५/६-९]
(२) शत० ब्रा० [१/२/१/८]
(३) छा० उ० [४/४,/४/३/५]; वृ० ए० [६/१/६]; श्वे० उ० [६/२३]; तै० उ० [१/११]
(४) अ० वे० [११/५/३]
(५) श० प० ब्रा० [१/४/२]
(६) पा० गृ० ग० भा० [२/२]
(७) गो० गृ० [२/१०/१]
(८) गो० गृ० त० भा० [२/१० १]
(९) पा० गृ० ग० भा० [२/२]
(१०) सं० र० मा० [पृ० १६४]

'वसन्ते ब्राह्मणमुपनयीत'[१] इत्यादिश्रुतौ माणवककर्तृकं गुरुसमीपगमनम् इति प्राञ्चः। नवीनास्तु णिजर्थाविवक्षायां मानाभावादाचार्यकर्तृकं माणवकाधिकारिकमुपनयनमेव विधीयते नोपसमनम्। अत एव छान्दोग्योपनिषदि गुरुकर्तृकोपनयनानुकूलव्यापाररूपोपगमकर्तृकता जावालो[२] मातरमामन्त्र्य आत्मानमुपनाययितुं गौतममाजगाम इत्यादौ स्पष्टमेव दृश्यते। हेमाद्र्युद्धृते 'गर्भाष्टमे वष ब्राह्मणमुनाययेत्' इति बुधवचस्यपि अयमेवार्थः प्रकटीकृतः। एवञ्च मनुव्याख्यायाम् 'उपनयनमेवौपनायनम्। स्वार्थिकोऽण्। "अन्येषामपि दृश्यते" (पा० सू० ६/३/१८७) इत्युत्तरपदस्य दीर्घः। छान्दसत्वाद्वोभयपदवृद्धिः। उपनयनमिति हि एष संस्कारो वेदविदां गृह्यस्मृतिषु प्रसिद्धो मौञ्जीबन्धनापरपर्यायः। उपनीयते समीपं प्राप्यते येनाचार्यस्य स्वाध्यायाध्ययनार्थं न कुड्मं कटं वा कर्तुं तदुपनयनम्'[३] इति मेधातिथ्युक्तम्, 'उपनयनमेवोपनायनम्'। 'अन्येषामपि दृश्यते' (पा० सू० ६/३/१८७) इत्ति दीर्घः[४] इति कुल्लूकभट्टोक्तं च, याज्ञवल्क्यव्याख्याने च 'उपनयनमेवोपनायनम्। स्वार्थे अण्। वृत्तानुसारात्, छन्दोभङ्गात्। आर्षं वा दीर्घत्वम्'[५] इति विज्ञानेश्वरोक्तं च नैव युक्तम् इति। अत एव चैवं विधं कृत्यकल्पतरुकारमतमपि हेयमेव। अत एवोक्तमपरार्केण—'उपनयनं नाम वटोर्गायत्रीसम्बन्धकरणम्। तच्च आचार्यकर्तृकम्। उपनायनं नाम—"अधीहि भोः, अनुब्रूहि" इत्याचार्यं प्रति प्रयोजकव्यापारः। स च वटुकर्तृक इत्युपनयनाद्भिन्नमेवोपनायनम्। तच्च 'अष्टवर्षो ब्राह्मण आत्मानमुपनाययेत्' इति बुधस्मृतौ स्पष्टमेवाभिहितम्'[६] इत्युक्तम्।

संस्काररत्नमालायान्तु मतद्वयमन्यदपि निर्दिष्टम्—

(क) अन्ये तु आचार्यसमीपनयनाङ्गको गायत्र्युपदेशः प्रधानम्, 'गायत्र्या ब्राह्मणमसृजत्' इति श्रुतौ 'गायत्र्या ब्राह्मणमुपनयीत' इति कात्यायनस्मृतौ चोपनयनस्य गायत्र्युपदेशाङ्गत्वप्रदर्शनात्। एवं चोपनयनपदं योगरूढम्। समिद्दर्शादिपदस्येवाङ्गवाचिनोऽप्युपनयनपदस्य तत्संबन्धेन प्रधानसंज्ञोपपत्तेरित्याहुः।

---

(१) बौ० गृ० [२/५/६]
(२) छा० उ० [४/४]
(३) म० मे० भा० [२/३६]
(४) मन्वर्थमुक्तावली [२/३६]
(५) मिताक्षरा [१/१४]
(६) या० अप० [१/१४]

(ख) परे तु पङ्कजपदस्येवैकत्र यौगिकस्य रूढस्य च योगरूढपदवाच्यत्वादत्र तु नयने योगस्य गात्र्युपदेशे च रूढेश्च सद्भावेनैकत्रोभयस्य विद्यमानत्वाभावात् न योगरूढत्वमुपनयपदस्य । तेन समीपनयनस्यैव प्रधानत्वमित्याहुः[1] ।

अत्रास्मभ्यं रोचते—उद्भिन्यायानुसारेणोपनयनपदं[2] यौगिकमेव न तु रूढम् । रूढेः मत्वर्थलक्षणाभवाप्यभेदतत्प्रख्यशास्त्राद्व्यपदेशे तच्चतुष्टयनामधेयत्वनिमित्तानन्तर्भावात् कर्मनामधेयत्वमस्योपनयनपदस्य रूढत्वे नैव स्यात् । इच्छन्त्परेऽपि कर्मनामधेयत्वमस्य शब्दस्य । योगश्च यद्यपि उपसमीपं आचार्यादीनां नयनम् प्रापणमिति भावव्युत्पत्या, उप समीपे आचार्यादीनां नयनं येन कर्मणा यस्मिन् कर्मणि वेति करणाधिकरणव्युत्पत्यापि निर्वाहयितुं शक्यते तथापि भावव्युत्पत्तिरेव साधीयसी प्रतीते । अन्यव्युत्पत्तौ लक्षणापातात् । करणत्वादेश्च विवक्षाधीनतया नैकत्वसम्भवेन उपनीयतेऽनेनेति व्युत्पत्तौ कदाचिच्चलनस्य, कदाचित् पुरुषस्य, कदाचिच्चार्यस्यैवावबोधनेनानेकशास्त्रार्थविप्लवप्रसङ्गात् । तत्माद् भावव्युत्पत्तिरेव गरीयसी । अतश्चोपनयनं नाम आचार्येण माणवकस्य गायत्र्या संस्करणमेव । अत एव 'गायत्र्या ब्राह्मणमुपनयीत' इति पूर्वोदाहृत-कात्यायनवाक्ये ब्राह्मणगायत्र्योः द्वितिया-तृतीयाश्रुतिभ्यां संस्कार्यसंस्कारत्वाभिधानेनोपनयनशब्दस्य संस्कारपरत्वोपदर्शनं संगच्छते । आपस्तम्बोऽप्याह–'उपनयनं विद्यार्थस्य श्रुतितः संस्कारः[3]' इति । एतदेव द्विजत्वप्रयोजकमिति त्ववोचाम पूर्वमेव ।

## उपनयन-प्रयोजनम्—

मूलतः शिक्षैवोपनयनस्य प्रयोजनमासीत् । अत एव छान्दोग्येऽपि श्रूयते–जाबालस्य गौतमं[4] प्रति गमनम् विद्यार्थम् । आपस्तम्बेऽप्येतदेव दर्शितम् । पूर्वोद्धृतकात्यायनादिवाक्यस्याप्य त्रैव तात्पर्यम् । अत एव याज्ञवल्क्योऽप्याह–'उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्[5]' ॥ इति । मनुरप्याह—

---

(१) सं० र० मा० [पृ० १६५-६६]
(२) मी० द० [१/४/२]
(३) आप० ध० [१/१/६]
(४) छा० उ० [४/४]
(५) या० स्मृ० [१/१५]

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च[१] ।। इति ।

परन्तु मन्वाद्यवलोकनेनेदं ज्ञायते यत् शनैः शनैः कर्मकाण्डमपि प्रथमतो वेदाध्ययनसावित्र्युपदेशमात्रप्रयोजनके उपनयनकर्मणि पदमधत्त । अयं च क्रमो गौतमादिकाले[२] प्रायेग प्राधान्यमेवालभत, वेदाध्ययनं क्रमेण गौणं सञ्जातम् । संक्षेपेणेदं वक्तुं शक्यम् यत् उपनयनं प्राक् विद्यार्थमासीत् परस्तात्तु पुरुषार्थमेव सञ्चातम् इति । एवंव गतिः प्रायेगान्येषामपि संस्काराणाम् वर्तते ।

**उपनयनाधिकारिणः—**

इदं चोपनयनम् वर्गत्रयाणामेव न तु शूद्रस्य । न हि शूद्राणामधिकारो विद्यते वेदाध्ययनस्येति श्रुतिस्मृतिनिर्णयात् । अत एव भारते अप्युक्तम्—

स्त्रीशूद्रद्विजवन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ।। इति ।

अत एव स्त्रिया अपि न, तस्या अपि वेदाध्ययनाधिकाराभावात् । विवाहस्यैव स्त्रीणामुपनयत्वातिदेशाच्च । यत्तु विवाहस्तु समन्त्रक इति विधेः स्त्रीणामप्यधिकार इति तन्निषादस्थपत्यधिकरणन्यायेन बोध्यम् । एतेन यदपि हारीतेन—'द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनाम उपनयनम् अग्नीन्धनं वेदाध्ययनं स्वगृहे भैक्षचर्या चेति सद्योवधूनामुपनयनं कृत्वा विवाहः' इत्युक्तम् तदपि युगान्तरपरतया कथंचिन्नेयम् । अत एवोक्तं कूर्मपुराणे[३]—

पुरा कल्पे हि नारीणां मौञ्जीवन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ।। इति ।।

**अथोपनयनकालः —**

तत्र वर्षर्तुमासपक्षायनादिभेदाद्द्विविधः कालो निर्णेतव्यः । एषु प्रथमं वर्षविषये कथ्यते--

---

(१) म० स्मृ० [२/६९]
(२) गौ० ध० [८/१४/२४]
(३) सं० र० मा० [पृ० १६५]

तत्र वार्षिकः कालो द्विविधः—नित्यः, काम्यश्च। नित्योपि द्विविधः—मुख्यः, गौणश्च।

तत्र नित्यमुख्यकालमधिकृत्य विविच्यते—

अत्र 'अष्टवर्षं ब्राह्मणपमुपनयीत एकादशवर्ष राजन्यं द्वादशवर्ष वैश्यम् इति श्रुतेः अष्टमो वर्षः ब्राह्मणानां राजन्यानां तु एकादशः वैश्यानां पुनर्द्वादशो वर्षो मुख्यो नित्यः काल इति लभ्यते। तत्र गर्भादिः संख्या वर्षाणामित्युपदेशो बौधायनादीनाम्[1]। अत एव उक्तश्रुत्यनुरोधेन गर्भाष्टमं ब्राह्मणस्य, गर्भैकादशं क्षत्रियस्य, गर्भद्वादशं च वैश्यस्योपनयनार्थं नित्यं कालं मुख्यं मन्यन्ते[2]। अपरे पुनः जन्मत एव वर्षगणनामनुमन्यमानाः अष्टमे इत्यादीनेव मुख्यं नित्यकालमभ्युपगच्छन्ति[3]। उभयी च त्रिधा वर्षगणने प्रसिद्धा

---

(१) गर्भादिः संख्या वर्षाणाम्–बौधायनः॥ सं० प्र० [पृ० ३४०]

(२) गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम्। बौ० गृ० [ २/५/२ ]

गर्भाष्टमेषु ब्राह्मणमुपनयेत्। गर्भैकादशेषु क्षत्रियम्। गर्भद्वादशेषु वैश्यम्॥ गो० गृ० [ २/१०/१-२ ]

गर्भाष्टमे वा। एकादशे क्षत्रियम्। द्वादशे वैश्यम्॥ आश्व० गृ० [ १ १९/२-४ ]

गर्भाष्टमे ब्राह्मणमुपनयीत। गर्भैकादशेषु राजन्यम्। गर्भद्वादशेषु वैश्यम्॥ आप० गृ० [ ५/१०/२-३ ]

गर्भाष्टमे ब्राह्मणमुपनयेत्।……………गर्भैकादशेषु क्षत्रियम्। गर्भद्वादशेषु वैश्यम्॥ वा० गृ० [ ५/१-३ ]

गर्भाष्टमे वा। एकादशवर्षं राजन्यम्। द्वादशवर्षं वैश्यम्। पा० गृ० [ २/२ ]

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥ म० स्मृ० [ २/३६ ]

(३) अष्टमे वर्षे ब्राह्मणमुपनयेत्।……………एकादशे क्षत्रियम्। द्वादशे वैश्यम्। द्रा० गृ० [ २/४/१-५ ], खा० गृ० [ २/४/१-५ ]

शास्त्रेषु।[1] अत एव याज्ञवल्क्येन स्पष्टमेवोभयमाश्रित्योक्तम्—

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।

राज्ञामेकादशे सैके विशामेके यथाकुलम्[2] ॥ इति।

व्याख्यातं च मिताक्षरायाम् "गर्भग्रहणं सर्वत्रानुवर्त्तते, गर्भादेकादशे राज्ञो गर्भाद्द्वि द्वादशे विशः इति स्मृत्यन्तरदर्शनात्। यथा 'अथ शब्दानुशासनम्। केषां शब्दानाम् ? लौकिकानां वैदिकानाञ्च इति'। अत एवान्यत्रापि विकल्प उक्तः[3]।

अत्रेदमपि वोध्यम् गर्भाष्टमादि वर्षे जन्मतः सप्तमादिरेवेति मत्वा केचन यदाहुः[4] सप्तमे ब्राह्मणस्य, दशमे क्षत्रियस्य, एकादशे वैश्यस्येति तदपि युक्तमेवेति।

अन्यच्च विभावनीयम्—केचन याज्ञवल्क्यादिव्याख्यायाम् गर्भशब्दस्याष्टमशब्देन समस्तत्वात् अन्येनान्वयभावमभिप्रेत्य क्षत्रियादीनां न गर्भैकादशत्वमपि तु जन्मत एवैकादशे वर्षे इत्येव मन्यन्ते[5]। तेषामपि प्रमाणभूतं किमपि[6] गृह्यसूत्रगस्त्येव। परन्तु वयमेतं पक्षं न रोचयामहे, विज्ञानेश्वरादिभिरनादृतत्वात्, मन्वादिप्रामाण्याच्च।

तथा च सिद्धमेतत्—गर्भतो जन्मतो वा अष्टमैकादशद्वादशवर्षाणि

---

(१) आधानादष्टमे वर्षे जन्मतो वाग्रजन्मनाम्।
राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम् ॥ नारदः ॥
प्रायः पाणिग्रहणे वर्षविशुद्धिं व्रतोपनयनेऽपि।
गर्भादिमाहुरेके मुनयो जन्मादिमपरे च ॥
सत्यपरा ये मुनयो गर्भादिमुदीरयन्ति वर्षाणाम्।
परिशुद्धिं परिणयने व्रते च जन्मादितश्चान्ये ॥ भीमपराक्रमः ॥
सं० प्र० [ पृ० ३४१ ]

(२) मा० स्मृ० [ १।१४ ]

(३) अष्टमे वर्षे ब्राह्मणमुपनयेत्। गर्भाष्टमे वा। आश्व गृ० [१ १९।१-२]
अष्टवर्षं ब्राह्मणमुपनयेत् गर्भाष्टमे वा ॥ पा० गृ० [ २।२ ]

(४) सप्तमे वर्षे ब्राह्मणस्योपायनम्। दशमे राजन्यस्य। एकादशे वैशस्य का० गृ०।

(५) सं० प्र० [ पृ० ३४०-४१ ]

(६) सप्तवर्षं ब्राह्मणमुपनयीत एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम् ॥
( हि० गृ० ) सं० र० मा० [ पृ० १६६ ]

क्रमेण ब्राह्मणक्षत्रियविशां मुख्यो नित्यः काल उपनयनस्येति। संस्कार-प्रकाशकृत्तु जन्मत एवाष्टमादिवर्षाणि मुख्यनित्यकालमाह ॥

## अथ गौणो नित्यकालः—

तत्र आषोडशात् ब्राह्मणस्य आद्वाविंशात् क्षत्रियस्य आचतुर्विंशतिवर्षात् वैश्यस्य गौणः कालो नित्यः। अयं च मुख्याभावे एव स्वीकार्य इति स्पष्टमेव¹। इदं च वर्षपरिगणनं गर्भत एव, 'गर्भादिमेऽब्दे' इत्युपक्रम्याषोडशादित्य-भिधानात्। गर्भादिः संख्या वर्षाणाम् इत्यादि बौधायनादिनिरुक्तेश्चापि।

---

(१) आषोडशाद्वर्षात् ब्राह्मणस्यानतीतः कालो भवति आद्वाविंशात् क्षत्रियस्य आचतुर्विंशाद्वैश्यस्य ॥ गो० गृ० [२/१०/३]
तस्य आषोडशादनतीतः कालः।........तस्य आद्वाविंशात्।......
तस्य आचतुर्विंशात् ॥ द्रा० गृ० [२/३/२, ४, ६]
नातिषोडशमुपनीयत—जै० गृ० [१/१२]
आषोडशाद् ब्राह्मणस्यानतिक्रम आद्वाविंशाद्राजन्यस्य आचतु-र्विंशाद् वैश्यस्य ॥ लौ० गृ० [४१/४], का० गृ० [८/२]
आषोडशाद् ब्राह्मणस्यानतीतः कालः। आद्वाविंशात् क्षत्रियस्य। आचतुर्विंशाद् वैश्यस्य ॥ आश्व० गृ० [१/२०/५-६]
प्राक् षोडशाद् वर्षाद् ब्राह्मणस्यापतिता सावित्री। आद्वाविंशात् क्षत्रिस्य। आचतुर्विंशाद् वैश्यस्य ॥ वा० गृ० [५/४-६]
आषोडशाद् ब्राह्मणस्यानत्यय इति। एवमेवेतरयोः द्वाविंशतिश्च चतुर्विंशतिश्च ॥ बौ० गृ० [२/५/३-४]
आषोडशाद् ब्राह्मणस्य नातीतः कालो भवति। आद्वाविंशाद्राजन्यस्य। आचतुर्विंशाद् वैश्यस्य ॥ पा० गृ० [२/२]
आषोडशाद् ब्राह्मणस्य सावित्रीनाति वर्तते। [ आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ म० स्मृ० [२/३८]
आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ या० स्मृ० [१/३७]
व्यासः—औपनायनिकः कालः परः षोडशवार्षिकः।
द्वाविंशतिः परोऽन्यस्य चतुर्विंशतिमः परः ॥ सं०म०प्र० [३३]
शङ्खः—षोडशाब्दानि विप्रस्य राजन्यस्य द्विर्विंशतिः।
विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता ॥
सं० प्र० [पृ० ३४३]

अधुनेदं विचारणीयम्–किमयमाषोडशादित्यादौ मर्यादायामाङ् अभिविधौ वेति। कश्चानयोर्विशेषः ? तद्रहितत्वं मर्यादया, तत्सहितत्वं पुनरभिविधौ। तथा च यदि मर्यादायां स्यात्तर्हि षोडशे वर्षे प्राप्ते एवातिक्रान्तो भवेदुपनयकालः। अथाभिविधौ तर्हि तत ऊर्ध्वम् इति स्यात्।

अत्राचार्या मन्यन्ते–मर्यादायां नात्र आङ् अपि तु अभिविधावेव। असम्भवे हि मर्यादायामिष्यते। यथा 'आपर्वतात् क्षेत्राणीति'। अत्र ह्यगत्या मर्यादायामभ्युपगम्यते पर्वतसहितस्य तात्पर्यविषयीभूतक्षेत्रत्वासम्भवात्। न चाभिविधौ स्वीकृते सति दृश्यते कश्चन विरोधः। तस्मादभिविधावेवेति षोडशाब्दपूर्तिपर्यन्तं नान्तिक्रान्तः कालः[1]। एवमेव क्षत्रियादेरपि। अत एव हि मिताक्षरायाम् 'आषोडशाद्वर्षात् षोडशवर्षं यावत्'[2] इति व्याख्यातम्। अत एव च संस्कारतत्त्वे भट्टाचार्यणापि–"आषोडशादित्यभिविधावाङ्। तथा च विष्णुधर्मोत्तरम्—

षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता॥
सावित्री नातिवर्त्तेत अत ऊर्ध्वं निवर्त्तते॥

अत्र षोडशवर्षाणामुपनयनाङ्गता प्रतीयते"[3] इत्युक्तम्। अत एव च–

पतिता यस्य सावित्री दशवर्षाणि पञ्च च।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥
प्रायश्चित्तं भवेदेषां प्रोवाच वदतांवरः॥

इति यमवचने जन्मतो वर्षगणनमाश्रित्य मन्वाद्यविरोध उपपादितो धर्मप्रकाशे[4] संस्कारतत्त्वे च संगच्छते। संस्कारप्रकाशेऽप्येवमेव[5]।

वयन्तु आङ्मत्रिधिपरमभ्युपगम्यापि यमवचनव्याख्यानमित्थं न युक्तं प्रतीमः। उक्तरीत्या विरोधापादनेऽपि षोडशवर्षान्तिममासद्वये का गतिः ? किन्त्वोक्तयमवचनस्यायं शेषः—

---

(१) गो॰ गृ॰ ना॰ भा॰ [२/१०/३]

(२) मिताक्षरा [१/३७]

(३) सं॰ त॰ [पृ॰ ८१७]

(४) सं॰ म॰ [पृ॰ ३३]

(५) सं॰ प्र॰ [पृ॰३४३]

विवस्वतः सुतः श्रीमान् यमो धर्मार्थतत्त्ववित् ॥
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः ।
हविष्यं भक्षयेदन्नं ब्राह्मणान् पञ्च सप्त वा ॥
एकत्रिंशतिरात्रन्तु पिबेत् प्रसृतयावकम् ।
अतो यावकशुद्धस्य तस्योपनयनं स्मृतम्[1] ॥ इति ॥

तथा चैतत्स्पष्टमेव यदिदं यमवचनं पतितसावित्रीकत्वाभावेऽपि पञ्चदशवर्षोपरि प्रायश्चित्तविशेषोपदेशार्थम्, न पुनः पञ्चदशवर्षोपरि पतितसावित्रीकत्वमस्यार्थः तथाविधवचनव्यक्तेरभावात्, लघुनः प्रायश्चित्तस्योपदेशाच्च। पतितसावित्रीकाणां हि 'व्रात्यस्तोमः' क्रतुः प्रायश्चित्तम्। व्रात्यस्तोमे हि सपादनवधेनूनाम् अत्र हि यमोक्तप्रायश्चित्ते तदभावस्य स्पष्टमेव प्रतिपत्तेः उभयोरेकत्वाभावाच्च। किञ्च यमवचने "तथा राजन्यवैश्ययोः" इत्यतिदेशाद्यमोक्तप्रायश्चित्तं पञ्चदशवर्षोपरि राजन्यवैश्ययोरप्यविशेषेण प्राप्तम्। न हि राजन्यो वैश्यो वा षोडशे वर्षे कथमपि व्रात्यत्वमाप्नोति मन्तुं शक्यते। तथा च यदि यमोक्तेरर्थः पञ्चदशवर्षोपरि सावित्रीपतितत्वमेव स्यात्तर्हि कथमतिदेशार्थो घटते? अत एव विज्ञानेश्वरेणापि 'यस्योपनयने आपद्भावेन तत्कालातिक्रमस्तस्य यमोक्तप्रायश्चित्तम् अभिधाय अनापद्यतिक्रमे तु मानवं त्रैमासिकम्, तत्रैव पञ्चदशवर्षादूर्ध्वमपि कियत्कालातिक्रमे तूद्दालकव्रतं व्रात्यस्तोमो वा प्रायश्चित्तमित्युक्तं[2] संगच्छते। अतो यमवचनात् आङ्मर्यादायामेव न त्वभिविधाविति शूलपाण्युक्तं कुल्लूकोक्तं[3] चायुक्तमेव।

किञ्च स्वयमेव रघुनन्दनेन पतितसावित्रीकत्वाभावेऽपि द्वादशषोडशविंशतीश्चेदतीता अवरुद्धकाला[4] भवन्तीति पैठीनसिवचनात् द्वादशवर्षाद्युपरि प्रत्यवायाल्पत्वज्ञानं वर्णितम्, तत् कथम् अत्रापि पञ्चदशवर्षोपरि स्वल्पं प्रायचित्तं वर्णयितुं युक्तम्।

वस्तुतस्तु द्वादशवर्षोपरि ब्राह्मणस्य पैठीनसिवचनबलेन महाव्याहृतिहोमप्रायश्चित्तमपि रघुनन्दनोक्तं नोचितं प्रतीमः, अष्टवर्षोपरि एव तस्यो-

---

(१) मिताक्षरा [३/२६५]
(२) तत्रैव
(३) म० मु० [२/३८]
(४) अत्र संस्कारप्रकाशे [पृ० ३४२] पाठान्तरम्।

चितत्वात्। यतो हि 'अष्टवर्षं ब्राह्मणमुपनयीत' इति श्रुतेरष्टमस्य मुख्यकालत्वेन तदूर्ध्वमेव प्रायश्चित्तस्यौचित्यात्। तस्मात् ब्राह्मणस्याष्टवर्षोपरि, क्षत्रियस्यैकादशवर्षोपरि वैश्यस्य द्वादशवर्षोपरि महाव्याहृतिहोमः प्रायश्चित्तमित्येव युक्तम्। तथा च गोभिलीयतर्कालङ्कारभाष्ये वचनम्—

गौणेषु तेषु कालेषु कर्म चोदितमारभेत्।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरत्[1] ॥ इति।

यत्तु देवतानां विपर्यासे जुहोतिषु कथं भवेत्।
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः ॥
संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन।

हुत्वैतदेव कर्तव्या ये तूपनयनादधः[2] ॥ इति कर्मप्रदीपवाक्ये 'उपनयनादधः' इति कथनादुपनयनकालातिपातेन महाव्याहृतिहोमः प्रायश्चित्तमिति प्रतीयते तद् गौणकालातिपातेन निमित्तेन बोध्यम्, अविरोधात् उपनयनकालातिपाते च तदभावागतेः। षोडशवर्षादिपर्यन्तम् अननीतकालतोपनयनस्याचार्येणोच्यते। 'एतदेव' इत्येवकारकरणात् चोपनयनात् पूर्वं महाव्याहृतिहोम एव प्रायश्चित्तम्, उपनयने तु न तन्मात्रम् अपि तु व्रात्यस्तोमोऽपि इति तात्पर्यमेव कर्मप्रदीपस्य।

तथा च पैठीनसिवचनेन ब्राह्मणस्य द्वादशवर्षोपरि प्रायश्चित्तान्तरमेवेष्टव्यम्। यमवचनात्तु सर्वेषामेव पञ्चविंशवर्षोपरि एकविंशतिरात्रव्रतम्। क्षत्रियवैश्ययोरपि पैठीनसिवचनानुसारेण षोडशविंशतिवर्षादूर्ध्वम् प्रायश्चित्तान्तरमेवोन्नेयम्। सर्वेषान्तु उत्तराववेरूर्ध्वं व्रात्यस्तोम एव प्रायश्चित्तम्, उद्दालकव्रतं[3] वा। शास्त्रद्वैविध्याद्विकल्पः स्वीकर्तव्य एव। यद्वा शाखान्तरविषयतया पैठीनसिवचनं व्याख्येयम्।

तदेवं सति आ षोडशादित्यत्राभिविधावेवाङ् न मर्यादायाम् इति सिद्धम्। अत्रार्थे मेधातिथिः[4] श्रुतिमप्युदाजहार—"सावित्र्या ब्राह्मणमुप-

---

(१) गो० गृ० त० भा० [२/१०/३]
(२) कर्मप्रदीपः [३ ६/१६–१७]
(३) अत्रापस्तम्बेनोदकोपस्पर्शनं प्रायश्चित्तमुक्तम् ऋतुं यावद् ब्रह्मचर्यानुष्ठानोत्तरमुपयनात् पश्चात् अध्यापनात् पूर्वम्। एतच्च शक्तस्य त्रिषवणं अन्यस्य तु यथाशक्ति। एतच्च संवत्सरपर्यन्तम् भवति इति।
(४) म० मे० भा० [१/३८]

नयीत त्रिष्टुभा राजन्यम् जगत्या वैश्यम्" इति। एतेषां छन्दसामियता कालेन द्वौ पादौ पूर्यते। तावन्तं कालम् बलवन्ति न त्यजन्ति स्वाश्रयभूतान् वर्गान्। तृतीये तु पादेऽपक्रान्ते गतरसाचातिवयांसि न्यूनसामर्थ्यानि भवन्ति समाप्तिमुपयान्ति। यथा 'पञ्चाशता स्थविरो मनुष्यः' इति। अतश्च नैतेन वयमुपासितानीति त्यजन्ति तं वर्णम्। ततो न गायत्री ब्राह्मणो न त्रैष्टुभो राजन्यो न जागती वैश्य इति।

उक्तयैव श्रुत्या संस्कारप्रकाशकृतो मन्यन्ते[1]–गायत्र्याः पादे अष्टाक्षराणि भवन्ति, तेन ब्राह्मणस्याष्टमे वर्षे उपनयनम्। त्रिष्टुभः पादे एकादशाक्षराणि भवन्ति, तेन क्षत्रियस्यैकादशे वर्षे। जगत्याः पादे द्वादशाक्षराणि भवन्ति, तेन वैश्यस्य द्वादशे वर्षे इति। अत एव हेतोरयं कालनियमो ब्राह्मणानां यदृच्छया दम्भेन चेति केचन[2] अन्ये पुनः[3] ब्राह्मणशिशूनामन्यजातीयशिशुभ्यः प्रतिभावत्तरत्वेन निमित्तेनेति मन्यन्ते। परमेतन्न युक्तिसहम्, मेधातिथ्यादेः नितरामाधुनिकत्वेन एतेषां कल्पनयैवातिप्राचीनस्य सिद्धान्तस्य व्याख्यानमभ्युपगम्य तत्राक्षेपो न युक्तः। नापि प्रतिभावत्तरत्वमात्रमत्र हेतुं विद्मः, बौधायनादिभिः अष्टमादारभ्य षोडशं यावदुपनयस्य विहिततयाऽष्टमे एवेत्यस्य समर्थनमेतेन निमित्तेन नोचितं कर्तुम्। अतः इदमेव युक्ततरं प्रतीयते यत् ब्राह्मणानां स्वपितुरेव मुख्यतो वेदाध्यनाद् गृहाद् बहिर्गमनस्यानावश्यकत्वेनाष्टमे तमुपनीयाध्यापनारम्भं युक्तं मत्वा तदोपनयनविधानम्, क्षत्रियादेः पुनराचार्यकुलगमनावश्यम्भावात् अल्पायुषि स्वगृहं परित्यज्यान्यत्र गमनेऽशक्तत्वाच्च द्वादशादौ वर्षे उपनयविधानं कृतमिति तर्कयन्ति पाण्डेयमहानुभावाः[4]। वयन्त्वत्र 'वृद्धास्ते न विचारणीयचरिताः' इति नीतिमवलम्ब्यात्रविषये मौनावलम्बनमेव श्रेयो मन्यामहे। यदि संस्कारानुष्ठाने शास्त्रप्रमाणका वयं तर्हि तत्फलाभिसन्धावपि तत्प्रमाणकैरेवास्माभिर्भाव्यम्। तत्र फलं क्वचिद्दृष्टं क्वचिच्च तदभावेऽदृष्टमेवेति विशेष उक्तप्राय एवेत्यलं विवादपरिग्रहेण॥

**अथ काम्यकाल :—**

तत्र ब्रह्मवर्चसकामस्य ब्राह्मणस्य पञ्चमे, बलार्थिनो राजन्यस्य षष्ठे,

(१) सं० प्र० [पृ० ३४४]
(२) केई—एन्श्येण्ट इण्डियन एडुकेशन [पृ० २९]
(३) ए० के० दास—दि एडुकेशनल सिस्टम्स आफ दि एन्श्येण्ट इण्डिया [पृ० २७]
(४) हिन्दू संस्कार [पृ० १५-२५३]

बहुकृष्यादिचेष्टार्थिनो वैश्यस्याष्टमे कार्यमुपनयनम् इति मनुः[१]। एषा च कामना बालकस्यासम्भवात्तत्पित्रादेरेवेति बोध्यम्। अत एवाह भट्टः—

हितकारिभिरेवासौ ज्ञायमानः प्रयोजकः।
कर्त्ता विज्ञायमानोऽपि नैव स्यादप्रयोजकः[२] ॥ इति ॥

तथा च विप्रस्य वटोर्ब्रह्मवर्चसकामेन पित्रा पञ्चमेऽब्दे उपनयनं कार्यमिति तृतीयार्थषष्ठ्या व्यधिकरणषष्ठ्या वा मनूक्तवाक्यार्थ उपपादनीयः। ब्रह्मवर्चसकाममित्यादि क्वचित् श्रुता द्वितीया तु ब्रह्मवर्चसं कामयते पिता यस्येति रूपेण व्याख्येया ॥

उशना तु बलार्थिन एव त्रैवर्णिकस्य क्रमेण पञ्चषष्ठसप्तमवर्षेषूपनायनमाह[३]।

वशिष्ठस्तु गर्भाष्टमे जन्माष्टमे वा ब्राह्मणस्य ब्रह्मवर्चसकामेन पित्रोपनयनं विधेयम्, अन्नाद्यकामेन नवमे, धीकामेन दशमे, रत्नकामेन एकादशे, पुष्टिकामेन द्वादशे उपनयनमाचष्टे[४]।

अङ्गिरा पुनराह—षष्ठद्वादशयोः क्रमेण बलायुषोर्वृद्धिः क्षत्रियस्य, चतुर्थाष्टमयोः पुनर्वैश्यस्य क्रमेणेहायुषोरभिवृद्धिः[५]। अत्रेहा कृष्यादिविषयिणी चेष्टा।

आपस्तम्बस्तु—'अथ काम्यानि—सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकामम् एकादशे इन्द्रियकामम् द्वादशे पशुकामम्[६]

---

(१) ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ म० स्मृ० [२/३७]

(२) श्लो० वा० (मी० द० ) [१/१/१]

(३) जन्मतः पञ्चमे वर्षे ब्राह्मणस्योपनायनम्।
राज्ञस्तु षष्ठे वैश्यस्य सप्तमे तु बलार्थिनः ॥ सं० प्र० [पृ० ३४५]

(४) कुमारस्याष्टमे वर्षे गर्भाद्वा जन्मतस्ततः।
ब्रह्मवर्चसकामस्तु नित्यं विप्रो विशेषतः ॥
अन्नाद्यकामो नवमे धीकामो दशवत्सरे।
एकादशे रत्नकामो द्वादशे पुष्टिकामनः ॥ सं० प्र० [पृ० ३४५]

(५) षष्ठे तथा द्वादशे च राज्ञो वृद्धिर्बलायुषोः।
ईहायुषोस्तु वैश्यस्य ह्यष्टमे च चतुर्थके ॥ सं० प्र० [पृ० ३४६]

(६) आप० ध० [१/१/२०-२६]

इत्युक्तवान्। बौधायनोऽपि एवमेवाह, केवलं द्वादशे पशुकाममित्यनन्तरम्[1] 'त्रयोदशे मेधाकामम् चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाम-मित्यधिकं तत्र दृश्यते।

अन्यत्र तु—सप्तम आयुष्कामम् अष्टमे ब्रह्मवर्चसकाममिति भेद आपस्तम्बादिभ्यो दृश्यते[2]।

विष्णुस्तु वदति—षष्ठे धनकामस्य सप्तमे विद्याकामस्य अष्टमे सर्वकामस्य नवमे कान्तिकामस्योपनयनमिति[3]।

अत्रातीन्द्रियार्थे मौनमेवास्माकमवलम्बनम्, शास्त्रैकगोचरत्वादेवं विधफलानाम्।

## अथातीतकालानामुपनयने प्रायश्चित्तम्—

षोडशादिवर्षादूर्ध्वं सावित्रीपतिता भवन्ति ब्राह्मणादयः। एते 'व्रात्या' सर्वकर्मविवर्जिताः विवाहादिसम्बन्धायोग्याश्च भवन्ति[4]। एते हि व्रात्याः शूद्रसमा उच्यन्ते, यत एतेषां वेदाध्ययनाद्यधिकाराभावः[5]। शूद्रोचितकर्माधिकारस्तु न निवर्त्तते।

---

(१) बौ० गृ० [२/५/५]

(२) सं० र० मा० [पृ० १६७]

(३) षष्ठे तु धनकामस्य विद्याकमस्य सप्तमे।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः॥ नि० सि० [पृ० ५४२], पा० गृ० ग०भा० [२/२]

(४) अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणैः सह॥
म० स्मृ० [२/३९-४०]

अत ऊर्ध्वं पतितसावित्रीका भवन्ति। नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुः न चैभिर्व्यवहरेयुः॥ पा० गृ० [२/२]

आश्वलायनः-मन्त्रयोन्यर्थसम्बन्धस्तैर्न कार्यः कथंचन।
शिष्टेन धर्मनिष्ठेन शुभकर्मप्रयत्नतः॥ सं० प्र० [पृ० ३४९]

(५) न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्।
नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते॥
शूद्रेण हि समस्तावत् यावद्वेदे न जायते॥ म० स्मृ० [२/१७१-७२]
इदं चानुपतीनां व्रात्यानां च कृतेऽप्ययमेव बोध्यम्॥

तत्र सप्तदशे उपनयनं कर्त्तव्यम् चेत् तदा प्रायश्चित्तमाह यमः—

सावित्री पतिता यस्य दशवर्षाणि पञ्च च।
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः॥
एकविंशतिरात्रं च पिबेत् प्रसृतियावकम्।
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्[1]॥ इति॥

एतच्च प्रायश्चित्तं सप्तदश उपनयने कर्तव्य इति यद्यपि स्पष्टतो नोक्तं यमवाक्ये तथापि निमित्तप्रायश्चित्तयोरल्पत्वात् सम्बन्धावगतिरिति प्रकाशः।

अष्टादशे तूपनयने कर्तव्ये प्राजापत्यत्रयम् प्रायश्चित्तम्। तथा चाह मनुः—

येषां द्विजानां सावित्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्[2]॥ इति।

अत्र व्रात्यप्रायश्चित्तविधौ स्पष्टमुल्लेखाभावेऽपि दोषप्रायश्चित्तयोर्लाघवगौरवानुसन्धानेनेयं व्यवस्था शास्त्रकारैः कृता। तथा चाहापस्तम्बोऽपि - 'गुरुणि गुरूणि लघुनि लघूनि'[3] इति। मनुव्याख्यायां कुल्लूकभट्टादयोऽप्येवमेवाहुः[4]।

अत्रैव प्रायश्चित्तान्तरं बोध्यमाश्वलायनोक्तमपि—

-- गवां दानेन भूम्या वा प्राजापत्यत्रयेण वा।
चान्द्रायणेन वा शुद्धास्ते भवन्तीह सत्तमाः॥[5] इति।

एकोनविंशे वर्षे तूपनयने विधातव्ये प्रायश्चित्तमाहापस्तम्बः—'अतिक्रान्ते सावित्र्या काले ऋतुं त्रैविद्यकं ब्रह्मचर्यम् चरेत्तत उपनयनम्, ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्यः[6]' इति। अस्यायमाशयः—यस्य यः सावित्रीदानकालस्तदतिक्रमे कथञ्चिज्जाते त्रैविद्यकम्—त्र्यवयवा विद्या त्रिविद्या, तामधीयते ये ते त्रैविद्यास्तेषामिदं त्रैविद्यकम्; चरणाद्धर्माम्नाययोः[7] इति वुन् प्रत्ययः। एवं भूतं ब्रह्मचर्यम्—अग्नीन्धनं चाध्ययनं च गुरुशुश्रूषां

(१) मिताक्षरा [३/२६५], मन्वर्थमुक्तावली [२/३८], गो० गृ० त० भा० [२/१०/४]

(२) म० स्मृ० [११/१९१]
(३) स० प्र० [पृ० ३५०]
(४) मन्वर्थमुक्तावली [११/१९१]
(५) सं० प्र० [पृ० ३५०]
(६) आप० ध० [१/१/२८-२९]
(७) द्र० पा० सू० [४/२/४६]

च विहायान्यत् सर्वं ब्रह्मचर्यधर्मम्-चरेत् । तस्यावधिमाह—ऋतुमिति । ऋतुर्मासद्वयम् । 'कालाध्वनोरत्यन्तसंयोगे' द्वितीया । अत्र ऋतुमिति वचनात् ऋत्वारम्भे एव प्रायश्चित्तारम्भ इत्यवगम्यते । तत उपनयनम् । ततः संवत्सरं यावत् उदकोपस्पर्शनं स्नानम् कर्तव्यम्, ततश्च अध्याप्य इति भावः । अत्र चोदकोपस्पर्शनं स्नानं शक्तस्य त्रिषवणम्, अशक्तस्य तु यथाशक्ति इत्यपि बोध्यम् ।

विंशे पुनर्वर्षे उपनयने कर्तव्ये सति मनूक्तमुपपातकसामान्यप्रायश्चित्तम् त्रैमासिकम्[1] । एकविंशे वर्षे उपनयने चातुर्मासिकम् उद्दालकव्रतं[2] प्रायश्चित्तम् । तथा च वसिष्ठः—'पतितसावित्रीकः उद्दालकव्रतं चरेत् द्वौ मासौ यावकेन वर्तयेत् मासं पयसः पक्षमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत्, अश्वमेधावभृथं वा गच्छेत्, व्रात्यस्तोमेन वा यजेत्[3]' इति । अतश्च दोषगौरवानुसारेण द्वाविंशेऽश्वमेधावभृथं गच्छेदिति प्रायश्चित्तम्, त्रयोविंशे तु वर्षे व्रात्यस्तोमाख्यक्रत्वनुष्ठानम् एव प्रायश्चित्तं बोध्यम् ।

एवमेव राजन्यवैश्ययोरपि द्वाविंशाच्चतुर्विंशात् ऊर्ध्वं प्रोक्तक्रमेणैव प्रायश्चित्तानि पादपादहान्या योजनीयानि । अत उर्ध्वं तु दक्षिणाधिक्यपक्षाश्रयणपूर्वकं व्रात्यस्तोम एव प्रायश्चित्तम्, प्रायश्चित्तान्तराभावात् शास्त्रे । इति प्रायश्चित्तम् ।

## अथोपनयनम्—

उपनयनं हि उत्तरायणे एव कर्तव्यम् इति[4] उत्सर्गः । परन्तु विशामुपनयनं दक्षिणेऽपि इति बृहस्पतिः[5] ।

---

(१) मिताक्षरा—[३/२६५], सं० प्र० [पृ० ३५०]

(२) अशक्तौ चैव यज्ञस्य चरेदौद्दालकं व्रतम् ।
द्वौ मासौ यावकाहारौ मासमेकं पयः पिबेत् ॥
दध्ना च पक्षमेकन्तु सप्तरात्रं घृतेन तु ।
अयाचितेन षड्रात्रं त्रिरात्रं वर्त्तयेत् जलैः ॥
अहोरात्रं न भुञ्जीत ततः संस्कारमर्हति ॥ गो०गृ०टि० [पृ०४५८]

(३) सं० प्र० [पृ० २५१], मिताक्षरा [३/२६५]

(४) नृसिंहः—उत्तरायणगे सूर्ये कर्त्तव्यं ह्यौपनायनम् ॥ पा०गृ०ग०भा० [२/२]
उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥
आश्व० गृ० [१/४/१]

(५) विप्रस्य क्षत्रियस्यापि मौञ्जीस्यादुत्तरायणे ।
दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ॥ सं० र० मा० [पृ० १७०]

**अथ ऋतुः—**

तत्र वसन्ते ब्राह्मणस्य, ग्रीष्मे क्षत्रियस्य, शरदि वैश्यस्येति, रथकारस्य च वर्षासु इति च श्रुतिः[१]। बौधायनादिरप्येवमेवाहुः[२]। तत्रायं विशेषो बौधायनेनोक्तो यत्सर्वेषामेव वा वसन्त इति। बृहस्पतिस्तु वैश्यस्यापि ग्रीष्म एवाह।

**अथ मासाः—**

तत्र माघादिषण्मासाः[३] प्रशस्ता उपनयने सर्ववर्णानाम्। तत्रापि राजमार्तण्डानुसारेण माघे मास्युपनीतो महाधनः, प्रज्ञायुतः फाल्गुने, चैत्रे मेधावी वेदान्वितः, वैशाखे सकलोपभोगसम्पन्नः, ज्येष्ठे वरिष्ठो विद्वान्, आषाढे तु सुमहाविपक्षविजयी प्रसिद्धो महापण्डितः इति मासफलम्[४]। नारदचण्डेश्वराभ्यां[५] चात्र कश्चिद्विशेष उक्तः।

एतेन माघादिमासानां नित्यत्वेऽपि काम्यत्वमुक्तं भवति। अत्रेदम् बोध्यम्—वसन्तस्यैव मुख्यकालतया कृते ब्राह्मणानामेषामाषाढे न भवति उपनयनम्। अत एव बृहस्पतिना मिथुनार्कस्याधमत्वमुक्तम्[६]। अत एव च गर्गेणापि माघादिपञ्चमासा एवोक्ता[७] विहितत्वेन। परन्तु यत इमे पञ्च मासाः केवलं ब्राह्मणानां कृत एवेतरेषान्तु मिथुनस्थे रवावपि (आषाढे मासे) अतः पञ्चमासषण्मासद्वैधप्रतिपादकवचनयोर्विरोध उपपन्न एव।

---

(१) सं० प्र० [पृ० ३५४], पा० गृ० ग० भा० [२/२]
(२) बौ० गृ० [२/५/६]
(३) वृद्धगार्ग्यः—माघादिमासषट्के तु मेखलाबन्धनं मतम्॥ सं०प्र० [पृ० ३५४]
(४), (५) सं० प्र० [३५४], माघे मासि महाधनो धनपतिः प्रज्ञायुतः फाल्गुने,
मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः।
वैशाखे निखिलोपभोगसहितो ज्येष्ठे वरिष्ठो बुध-
स्त्वाषाढे सुमहाविपक्षविजयी ख्यातो महान् पण्डितः॥
इति राजमार्त्तण्डोद्धृत श्लोकः स० प्र० [३५४]
(६) मृगकुम्भगते भानौ मध्यमं मीनमेषयोः।
उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम्॥ सं० र० मा० [पृ० १७१]
(७) माघादिशुक्लान्तिकपञ्चमासाः साधारणा वा सकलद्विजानाम्॥ गर्गः॥
माघादिषु च मासेसु मौञ्जी पञ्चसु शस्यते॥ ज्योतिषे॥ पा० गृ० ग० भा० [२/२], नि० सि० [पृ० ५४२]

एतेषु चापि पञ्चसु मासेषु ब्राह्मणस्य कृते चैत्र उत्तमः। अत एवान्यगुणाभावेऽपि चैत्रमासिकमुपनायनं शास्त्रे विहितम्[1]। अवशिष्टेष्वपि चतुर्षु मासेषु ज्येष्ठमासो ज्येष्ठपुत्रोपनयने प्रतिषिद्धः, तस्योपनीतमृत्युजनकत्वस्य स्मृत्यादौ प्रतिपादनात्[2]।

## अथ जन्ममासप्रतिषेधाऽप्रतिषेधव्यवस्था—

तत्र सामान्येन जन्ममासे मौञ्जीव्रतं[3] प्रतिषिद्धमेव।

तत्रापि विशेषेण जन्मपक्षः प्रतिषिद्धो वसिष्ठाद्यैर्महर्षिभिः[4]। जन्ममासश्च जन्मदिवसात्त्रिंशद्दिनानि[5] यावत्। तथापि अयं प्रतिषेधो न वसन्तर्तौ अपि तु तद्भिन्ने मध्यमकाले एवेति राजमार्तण्डादिमतम्[6]। तत्रापि

---

(१) बृहस्पतिः—गुरौ भृगौ नष्टगते च चैत्रे कार्यं न मङ्गल्यमनर्थकारि।
मीनस्थितेऽर्के खलु चैत्रमासे शुभप्रदं ब्राह्मणमौञ्जिबन्धः॥
गोचराष्टमवर्गाभ्यां गुरुशुद्धिर्न लभ्यते।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ॥
शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे।
व्रतोपनयनं कार्यं चैत्रे मीनगते रवौ॥
जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ।
मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ।
अतीव नष्टे सुरराजपूज्ये सिंहस्थिते वा द्विजपुङ्गवानाम्।
व्रतं प्रशस्तं खलु मासि चैत्रे कर्तुश्चिरायुः सुखसम्पदे स्यात्॥
सं० प्र० [पृ० ३५७]

(२) गर्गः—ज्येष्ठमासे विशेषेण ज्येष्ठपुत्रस्य नैव हि।
मौञ्जीबन्धं प्रकुर्वीत कृतश्चेन्मृत्युदो भवेत्॥ सं० र० मा० [पृ० १७१]

(३) न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीनदिने विदध्यात्।
न ज्येष्ठमासि प्रथमस्य सूनोस्तथा सुताया अपि मंगलानि॥
सं० र० मा० [पृ० १७२,] पा० गृ० ग० भा० [२/२]

(४) गर्गः—विवाहे मेखलाबन्धे जन्ममासं विवर्जयेत्।
विशेषाज्जन्मपक्षं च वसिष्ठाद्यैरुदाहृतम्॥ सं० प्र० [पृ० ३५८]

(५) आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनानि हि।
जन्ममासः सविज्ञेयो गर्हितः सर्वकर्मसु॥ सं० र० मा० [पृ० १७२]

(६) वसन्तसमये दद्यादब्दे गर्भाष्टमेऽष्टमे।
मेखलां जन्ममासेऽपि जन्मभे च तिथावपि॥ सं० र० मा० [पृ० १७२]

विशेषोऽप्युक्तस्तत्रैव[1]। अतो वयन्त्ववगच्छामः—वसन्तर्त्तावपि यथासम्भवं जन्ममासो वर्ज्य एव। यदि तु जन्ममासं परिहाय प्राप्तकाले, वसन्ततौ न शुभनक्षत्राद्युपलभ्यते तर्हि जन्ममासे अपि कार्यमुपनयनम् इति।

**अथ पक्षः—**

पूर्वोपदर्शिताश्वलायनवचनादापूर्यमाणपक्षे=शुक्ले पक्षे उपनयनम् विधेयम्। अन्यत्रापि तथैवोक्तम्। तदभावे तु अन्त्यत्रिकमपहाय कृष्णपक्षेऽपि मौञ्जीव्रतमाचरणीयमेव[2]। तत्रोत्तममध्यमभावो गुणान्तरसमावेशाऽसमावेशाभ्यां निर्णेय इति तत्त्वम्। गुणाश्च शुभनक्षत्रतिथ्यादयः शास्त्रोक्ता एव।

**अथ तिथयः—**

तत्र द्वितीया तृतीया पञ्चमी षष्ठी सप्तमी त्रयोदशी च इत्येतास्तिथयः पक्षद्वयेऽपि प्रशस्ता उक्ताः[3]। तत्र कृष्णपक्षे चन्द्रप्राबल्ये सत्येवेति विशेषः। शुक्लद्वादशी एकादशी च मध्यमे, कृष्णेऽपि चन्द्रप्राबल्ये सति तथा। नृसिंहस्तु उभयोः पक्षयोः प्रतिपद्दशम्येकादशीरपि[4] शुभा मन्यते। नारदस्तु[5] षष्ठीमपि

---

(१) जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः।
जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि॥
जन्ममासे तिथौ भे च विपरीतदले सति।
कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः॥
जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत्।
आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे॥ नि० सि० [पृ० ५४४]

(२) शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना॥ सं० प्र० [पृ० ३५९]

(३) द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा।
त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः॥
द्वादश्येकादशी चैव मध्यमास्तिथयस्तथा।
मध्यमाश्च प्रशंसन्ति चन्द्रे च बलसंयुते॥
कृष्णे चैव प्रशस्ताः स्यु तिथयश्चोपनायने॥ सं० प्र० [पृ० ३५९]

(४) तृतीया पञ्चमी षष्ठी द्वितीया वापि सप्तमी।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः॥
धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा॥ सं० र० मा० [पृ० १७२]

(५) एकादशी तथा षष्ठी द्वादश्येतास्तु मध्यमाः॥ सं० प्र० [पृ० ३६०]

मध्यममामाह । यद्यपि स्मृतिचन्द्रिकायां गलग्रहस्यापि प्रतिषिद्धत्वात्सप्तम्यादेर्न[1] प्रशस्तत्वं तथापि गलग्रहनिषेधो न वसन्तसमय इति निर्णयसिन्धौ[2] । मूकाद्युपनयनविषय एव गलग्रहोऽपवाद इत्यपि केचन[3] मन्यन्ते । एवमेवानध्यायेऽपि प्रतिषेधः सामान्येन कृतो विद्यते । तत्र च मन्वादियुगादिसंग्रहोऽपि भवत्येव । तथापि चैत्रवैशाखशुक्लतृतीययोः माघशुक्लसप्तम्याः फाल्गुनकृष्णद्वितीयायाश्च न निषेध इति भरद्वाज[4] आह । एषु चैत्रशुक्लतृतीयामाघशुक्लसप्तम्यौ मन्वादी इतरे युगादी इति विशेषः । अनध्यायनिषेधे अयमपि विशेषो विज्ञेयो यत् अनध्यायात् पूर्वापरदिवसयोरपि[5] अनध्यायत्वातिदेशात् तावपि परित्याज्यौ । अनध्यायश्च वेदारम्भे विचारयिष्यन्ते । एवमेव सोपपदास्वपि तिथिषु प्रतिषिद्धमुपनयनम् । सोपपदास्तिथयश्च[6]—

ज्येष्ठशुक्लद्वितीया, आश्विनशुक्लदशमी, [7]माघशुक्लचतुर्थीद्वादश्यौ च । परन्तु यजुर्वेदिनां नायं निषेध इति स्मृतिदर्पणे[8] ।

---

(१) नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।
कर्तव्यमौपनयनं नानध्याये गलग्रहे ॥
त्रयोदशीचतुष्कं तु सप्तम्यादित्रयं तथा ।
चतुर्थ्येकादशी प्रोक्ता अष्टावेते गलग्रहाः ॥ स्मृ० च० [पृ० २७], भा० [१]

(२) नि० सि० [पृ० ५४५]

(३) सं० र० मा० [पृ० १७४]

(४) या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥
सं० र० मा० [पृ० १७४]

(५) अनध्यायस्य पूर्वे द्युरनध्यायात्परेहनि ।
व्रतारम्भंविसर्गं च विद्यारम्भं च वर्जयेत् ॥ सं० म० [पृ० ३४]

(६) सोपपदासूपनीतस्तु पुनः संस्कारमर्हति ॥ सं० र० मा० [पृ० १७४]

(७) सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ सं० म० [पृ० ५४]

(८) वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्यापनेऽपि च ॥ सं० र० मा० [पृ० १७४]

अत्र तिथिफलान्यपि द्रष्टव्यानि[१]—प्रतिपद्युपनीतो मदिरासक्तः, द्वितीयायाम् विद्वान् मेधावी च, तृतीयायाम् नीतिज्ञो मेधावी शत्रुविजयी च, चतुर्थ्याम् मन्दधीर्निरुत्साहो दीनश्चपलश्च, पञ्चम्यां धनवान् दीर्घायुः मतिमांश्च, षष्ठ्यामशुचिः, सप्तम्यां नित्यरुग्णः, अष्टम्यामल्पायुः, नवम्यां दरिद्रः, दशम्यामर्थयुक्त, एकादश्यां गुणवान्, द्वादश्यां नीतिशास्त्राभिज्ञः, त्रयोदश्यां शीघ्रमृत्यु, चतर्दशीपञ्चदश्योरपि तथैवेति ॥

**अथ दिवसाः—**

तत्र शुक्रार्कवृहस्पतीनाम् वाराः प्रशस्ता इति मदनपारिजाते[२]। नारदादयस्तु गुरुशुक्रबुधानां वारा उत्तमाः, रवेर्मध्यमः, सोमस्याधमः इत्युक्त्वा कृष्णपक्षे द्विजन्मनामुपनायने सति शनिभौमयोः, कृष्णे चन्द्रस्य, अस्तंगतस्य च बुधस्य वारा वर्ज्या[३] इत्याहु। वृहन्नारदीये तु गुरुशुक्रबुधानामुत्तमा, शनिसूर्ययोर्मध्यमौ, सोममङ्गलयोस्तु वर्ज्यविवेति वर्णितम्[४]।

अत्र शाखाधिपे केन्द्रगते सति बलिनि तस्मिन् शाखाधिपदिने शाखाधिपतिलग्ने चोपनयनमतिप्रशस्तमिति नारदेनोक्तो विशेष[५]। शाखाधिपे च

---

(१) बादरायण—प्रतिपदि मदिरासक्तः श्रुतिमेधाधिको द्वितीयायाम् ।
नीतिज्ञो मेधावी जितसकलारिस्तृतीयायाम् ॥
मन्दधिया हृतचित्तो दीनश्चपलश्चतुर्थ्यां स्यात् ।
पञ्चम्यां बहुवित्तः पूर्णायुर्धनपतिर्मतिमान् ॥
षष्ठ्यामशुचिः सततं सप्तम्यां व्याधिसन्तप्तः ।
अल्पायुरथाष्टम्यां नवमे धनवर्जितः सदा पुरुषः ॥
दशम्यामर्थसम्पत्तिरेकादश्यां गुणान्वितः ।
द्वादश्यां नीतिशास्त्रज्ञो निधनाय त्रयोदशी ॥
चतुर्दश्यां भवेन्नाशः पञ्चदश्यां क्षयी भवेत् ॥
सं० प्र० [पृ० ३६३]

(२) वारेषु शुक्रार्कवृहस्पतीनां हितानुवन्धी द्विजमौञ्जिबन्ध ॥
पा० गृ० ग० भा० [२/२]

(३) गुरुशुक्रबुधानान्तु वाराः श्रेष्ठतमाः स्मृताः ।
अधमः सोमवारस्तु सूर्यवारस्तु मध्यमः ॥
वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः ।
अस्तं गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनाम् ॥ सं० र० मा० [पृ० १७५]

(४) आचार्यकाव्यसौम्यानां वाराः शस्ताः शनीनयोः ।
वारौ मध्यफलौ प्रोक्तौ निन्दितावितरौ व्रते ॥ सं० प्र० [पृ० ३६४]

(५) शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते ॥ सं० र० मा० [पृ० १७५]

दुर्बले सति तदीयदिवसे उपनयनं वर्णसंकरकारि भवतीति वृद्धगार्ग्यः[1]। शाखाधिपाश्चोक्ता नारदेन—

दृश्यमाने गुरौ शुक्रे शाखेशे चोत्तरायणे।
वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात्[2]॥ इति।

अतश्च कुजस्य निषेधस्तस्यैव कृते यस्यायं न शाखाधिपः। अत्र शाखाधिपबलेन सह वर्णाधिपवलमपि द्रष्टव्यम्[3]। यस्य वर्णस्य योऽधिपस्तस्मिन् दिने तस्योपनयनं प्रशस्तमित्याशयः।

वराहे[4] तु क्रमेण बृहस्पतिशुक्रमङ्गलरविवासराः क्रमेण ऋग्यजुसामाथर्ववेदिनां व्रते प्रशस्ता इत्युक्तम्। बृहस्पतिरप्येवमेव[5]।

अथ तत्तद्वारफलान्यपि सामान्यत उक्तानि राजमार्त्तण्डे—सूर्यदिने उपनीतो मेधां लभते, चन्द्रदिने जडत्वम्, बुधे बोधम्, कुजशन्योर्मृत्युम्, शुक्रे वाग्मित्वबलवत्वशुचित्वानि, बृहस्पतिवासरे तु षट्कर्माभिरतिम्, सुखम्, विद्वत्त्वं चिरायुष्ट्वं च, पापनक्षत्रयुते पुनश्चन्द्रवासरे[6] गतायुष्ट्वं चेति। परन्तु समावेदिनां कृते कुजवासरः[7] प्रशस्त एव।

---

(१) शाखाधिपे बलिनि केन्द्रगते च मौञ्जीबन्धस्तदीयदिवसेषु शुभाय क्लृप्तः। अस्मिन् बलेन रहिते तु पुनर्द्विजानां स्याद् वर्णसंकर इति प्रवदन्ति तज्ज्ञाः॥ तत्रैव॥

(२) सं० प्र० [पृ० ३६४]

(३) सदानुकूले चैकस्मिन् वर्णेशे बलशालिनि।
ब्राह्मणादेः प्रकुर्वीत कुमारं व्रतचारिणम्॥
पती सितेज्यौ विप्राणां नृपाणां कुजभास्करौ।
वैश्यानां शशभृत्सौम्याविति वर्णाधिपाः स्मृताः॥ सं०र० मा० [पृ० १७५]

(४) गुरोः कवेर्लोहितस्य मिहिरस्य च वासराः।
ऋग्यजुःसामाथर्विणां शस्ताः स्युर्व्रतबन्धने॥ सं० प्र० [पृ० ३६५]

(५) बह्वृचानां गुरोर्वारो यजुर्वेदजुषां कवेः।
सामगानां धरासूनोरथर्वविदुषां रवेः॥ तत्रैव॥

(६) मेधा भानुदिने जडः शिशिरगौ, चन्द्रात्मजे बोधवान्
पञ्चत्वं कुजमन्दयोर्भृगुसुते वाग्मी बलीयान् शुचिः।
षट्कर्माऽभिरतः सुखी सुरगुरौ विद्वांश्चिरायुर्भवेत्
धिष्ण्ये पापनिपीडितेऽथ हिमगौ मूढो गतायुर्भवेत्॥ सं० प्र० [पृ० ३६५]

(७) सामगानां शुभः कुजः। सं० प्र० [पृ० ३६५]

## अथ नक्षत्राणि—

हस्त, चित्रा, स्वाती, पुष्यः, धनिष्ठा, रेवती अश्विनी, मृगशिरः, पुनर्वसुः, श्रवण इत्येतानि प्रशस्तानि इति हेमाद्रिः[1]। हस्तः, चित्रा, स्वाती, रेवती, तिष्यः (पुष्यः) मृगशिरः, पुनर्वसुः, उत्तरात्रयम्, श्रवण, धनिष्ठा, शतभिषक्, अश्विनी, रोहिणी, अनुराधा, इति ज्योतिर्निबन्धे[2] नारदः। बृहस्पतिस्तु उत्तरात्रयम्, रोहिणी, हस्तः, अनुराधा, धनिष्ठा, चित्रा मृगशिरः, पुनर्वसुः इत्येतान्युत्तमानि, वारणम् (शतभिषक्), वैष्णवम् (श्रवणः), पुष्यः, वायव्यम्, रेवती, अश्विनी चेति षट् मध्यमानीति[3] प्राह। शार्ङ्गधरपद्धतौ तु श्रवणः, पुनर्वसुः, रेवती, अश्विनी, हस्तः, चित्रा, स्वाती, मृगशिरः, इत्येतानि शुभानि प्रोक्तानि[4]। अत्र राजमार्त्तण्डे[5] ब्राह्मणस्योपनयनं प्रतिषिद्धम्। परन्तु ज्योतिर्वित्प्रसिद्धवसिष्ठादिसंहितास्वदर्शनात् हेमाद्र्यादिनिबन्धेषु पुनर्वसोर्विधानाच्च निर्मूलमेतदिति प्रतिपत्तिरेव जायते। यद्वा यजुर्वेदाथर्ववेदाध्यायिनो ऋते निषेधो मन्तव्यः। तथा चोक्तम् —

---

(१) हस्तत्रयेपुष्यधनिष्ठयोश्च पौष्णाश्विसौम्यादितिविष्णुभेषु।
शस्ते तिथौ चन्द्रबलेन युक्ते कार्यो द्विजानां व्रतबन्धमोक्षौ॥
नि० सि० [पृ० ५४७]

(२) श्रेष्ठान्यर्कत्रयान्त्येष्यचन्द्रादित्युत्तराणि च।
विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने॥ सं० र० मा० [पृ० १७७]

(३) त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे।
त्वाष्ट्रे सौम्यपुनर्वस्वोः प्रशस्तं ह्युपनायनम्॥
वारुणे वैणवे पुष्ये वायव्ये पौष्णभे तथा।
अश्विभे षट्सु भेषूक्तं मध्यमं व्रतबन्धनम्॥ सं० प्र० [पृ० ३६६-६७]

(४) श्रवणादित्यपौष्णादिद्वये हस्तत्रये मृगे।
सर्वेषां मेखलाबन्धः शुभः प्रोक्तो द्विजन्मनाम्॥ सं० र० मा० [पृ० १७७]

(५) ताराचन्द्रानुकूलेषु ग्रहाब्देषु शुभेष्वपि।
पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति॥ नि०सि० [पृ० ५४७], पा० गृ० ग० भा० [२/२], सं० र० मा० [पृ० १७८]

मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां शस्तं मेखलाबन्धनं बुधैः ॥
पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद् यजुषां मौञ्जिबन्धनम् ॥
पुष्यवासवहस्ताश्विशिवविष्णूत्तरात्रयम् ।
प्रशस्तं मेखलाबन्धे वटूनां सामवेदिनाम् ॥
मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्ववेदिनां शस्तो भगणोऽयं व्रतार्पणे[1] ॥ इति ॥

अत एव बृहस्पत्युक्तः—

कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः ।
पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम्[2] ॥ इति निषेधः तत्तच्छाखातिरिक्तविषयो बोध्यः ॥

अत्र च हस्तत्रयम्—हस्तचित्रास्वातयः, सार्पमाश्लेषा, शैवमार्द्रा, पौष्णं रेवती, मैत्रमनुराधा, शशाङ्कभम् मृगशिरः, ध्रुवाण्युत्तरात्रयं रोहिणी च, वासवं धनिष्ठा, शिवोऽप्यार्द्रैव, विष्णुः श्रवणः, अदितिः पुनर्वसुः ॥

उक्तेषु नक्षत्रेषु यथासम्भवं सर्वेषामविरुद्धेषु मौञ्जी-व्रतं कार्यमिति निर्णयः। तत्रापि 'विशेषेण पुन्नामधेये' इति गृह्योक्तेः पुरुषनक्षत्रेषु प्रशस्तम्। पुन्नक्षत्राणि च अश्विना, पुनर्वसुः, पुष्यः, हस्तः, शतभिषक् प्रोष्ठपदा चेति[3] । गर्गेण तु श्रवणाभिजिदनुराधा अपि पूर्वैः सहोक्ताः पुन्नक्षत्रतया[4] । यदि तु विहितनक्षत्रासम्भवः कथञ्चित्तर्हि मघाम्, कृत्तिकाम्, विशाखाम्, ज्येष्ठाम, भरणीम्, शतभिषजं च विहाय यथायथमन्यत्र नक्षत्रेषूपनयनं कार्यम्[5] इति व्यवस्था । एवमेव योगादिरपि शुभो ज्ञेयः ॥

---

(१) सं० र० मा० [पृ० १७७], द्र० नि० सि० [पृ० ५४७]

(२ सं० प्र० [पृ० ३६६]

(३) अश्वयुक्पुनर्वसू तिष्यो हस्तः शतभिषक्प्रोष्ठपदाः ॥ सं० र० मा० [पृ० १६६]

(४) पुन्नाग श्रवणस्तिष्यो हस्तश्चैव पुनर्वसुः ।
अभिजित् प्रोष्ठपाच्चैव अनुराधा तथाश्वयुक् ॥ सं० म० [पृ० ६३]

(५) मघाग्नेयविशाखेन्द्रयाम्यं हित्वा च वारुणम् ।
व्रते शस्तानि सर्वेषां चेद्वेदोक्तं न लभ्यते ॥ सं० प्र० [पृ० ३६९]

अथोपनयनोपयोगिपदार्थाः —

तत्र मण्डपः—

तत्र महति गृहे महान् स्वल्पे च स्वल्प इति सामान्यतो व्यवस्था। विशेषतस्तु षोडशहस्तपरिमितः, द्वादशहस्तः, दशहस्तः, अत्यन्तापदि तु अष्टहस्तोऽपि मण्डपः कार्यः। तत्र मध्ये वेदिः प्रतिष्ठापयितव्या[१]।

अथ वस्त्रम्—

तत्र वस्त्रं कौपीनात्मकमेव ब्रह्मचारिणाम् प्राधान्येन। तदप्यहतं स्यात्[२]। अहतं वस्त्रं च यमेनोक्तम् —

ईषद्धौतं नवश्वेतं सदृशं यन्न धारितम्।
अहतं तद्विजानीयात् सर्वकर्मसु पावनम्[३] ॥ इति।

इदं च कौपीनम् क्रमेण ब्राह्मणक्षत्रियविशां शाणीक्षौमाजिनानि इत्यापस्तम्बादयः[४]। तत्र शाणक्षौमाविकानीति पारस्करादयः[५]। गोभिलस्तु क्षौमं शाणं वा ब्राह्मणस्य, कार्पासं क्षत्रियस्य, और्णं (कम्वलं) वैश्यस्येत्याह[६]। शुक्लमहतं वासो ब्राह्मणस्य, माञ्जिष्ठं क्षत्रियस्य, हारिद्रं कौशेयं वा वैश्यस्येति निगद्य सर्वेषां वा तान्तवमरक्तम् इति वसिष्ठः[७]। आपस्तम्बेनापि काषायं चैके वस्त्रमुपदिशन्ति, माञ्जिष्ठं राजन्यस्य, हारिद्रं वैश्यस्येत्युक्तो विकल्पः

---

(१) मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः।
कार्यः षोडशहस्तस्तु न्यूनस्तु स्याद्दशावधिः॥
स्तम्भैश्चतुर्भिरेवात्र वेदिमंध्ये प्रतिष्ठिता॥
षोडशारत्निकं कार्यं चतुर्द्वारोपशोभितम्।
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत्॥
अष्टहस्तं तु रचयेत् मण्डपं वा द्विषट्करम्॥ सं० र० मा० [पृ० १८४]

(२) अहतेन वाससा संवीतम्—आश्व० गृ० [१९/१]

(३) सं० र० मा० [पृ० १९१]

(४) स० प्र० [पृ० ४११]

(५) पा० गृ० [२/२], म० स्मृ० [२]

(६) [२/१०/७], [११]

(७) वसिष्ठ० [११/४-६७]

कथितोऽस्ति[१]। आश्वलायनोऽप्येवमेवाह[२]। सर्वेषां वा कार्पासमिति गौतमस्यापि[३] मतम् ॥

अत्राजिनधारणमपि कर्तव्यम्। तत्राजिनमुत्तरीयरूपेण धारणीयम्, ऐणमजिनमुत्तरीयं ब्राह्मणस्येति[४] पारस्करादिवचनात्। तत्र—'ऐणेयेन वाऽजिनेन ब्राह्मणम्, रौरवेण क्षत्रियम् अजेन वैश्यम्' इत्याश्वलायनवचनाद्[५] यद्यपि विन्दुरहितमृग्याश्चर्मैव ब्राह्मणस्य विज्ञायते तथापि कार्ष्णंरौरववांस्तानि चर्माणि ब्रह्मचारिण।

वसीरन्नानुपूर्व्येण[६] इत्यादि वचनात् मृगचर्मणा सहास्य विकल्पो ज्ञेयः। अत एव गाभिलादिकथनेऽपि[७] मत्वाद्यनुसारेण 'ऐणेयस्य विकल्पो बोध्य। आपस्तम्बेन तु आविकं सार्ववर्णिकं कम्बलश्चेति,[८] यमेन सर्वेषां रौरवं वेति[९], सर्वेषां वा गव्यमिति च[१०]पारस्करेण विकल्पो विज्ञेयः। अत्र कृष्णादयो मृगविशेषाः, वस्तः छाग इत्यर्थो ज्ञातव्यः। बौधायनस्तु सर्वेषां वा कृष्णाजिनम् (२/५/१६) इत्याह।

अत्रेदमवधातव्यम् -अजिनधारणस्य वस्त्र(=कौपीन)कौपीनधारणस्य च विकल्पोऽभिप्रेत आचार्याणाम्। अत एव 'ऐणेयेन वाऽजिनेन[११]' इत्याश्वलायनेन, आपस्तम्बादिभिश्च विकल्प उक्तः। तत्र ब्रह्मवृद्धिमिच्छताऽजिनानि, क्षत्रवृद्धिमिच्छता कौपीनानि, उभयवृद्धिमिच्छतोभयान्यपि धार्याणि इति विशेष आपस्तम्बादिभिरभिहितः[१२]। गोपथब्राह्मणे

---

(१) आप० ध० [१/१/२/३९-४१]
(२) आश्व० गृ० [१/२०/९]
(३) गौ० ध० [१/३/१७]
(४) पा० गृ० [२/२]
(५) आश्व० गृ० [१/१९/८]
(६) म० स्मृ० [२/४१]
(७) गो० गृ० [२/१०/८]
(८) आप० ध० [१/१/३/७-८]
(९) सं० प्र० [पृ० ४१४]
(१०) सर्वेषां वा गव्यमसति प्रधानत्वात् ॥ पा० गृ० [२/२]
(११) आश्व० गृ० [१९/१]
(१२) ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन्वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणम् ॥ आ० ध० [१/१/३/९-१०], यदजिनं धारयेत् ब्रह्मवर्चसवद्वासो धारयेत् क्षत्रं वर्धयेत् उभयं धार्यमुभयोर्वृद्ध्यै ॥ भा० गृ० [१/१]

तु[1] क्षत्रवृद्धिरनभिप्रेतत्वेनोक्ताऽपि पक्षपातादिदोषदूषिततयोपेक्षणीया ।

**अथ मेखला—**

तत्र मनुः—

मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला ।

क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी[2] ॥ इत्युपदिष्टवान् । आश्वलायन[3]बौधायना[4]पस्तम्ब[5]हिरण्यकेशिसूत्रे[6] तु आवीसूत्रं वैश्यस्योक्तम् । गोभिल[7]वसिष्ठ[8]पैठीनसि[9]यमा[10]दिभिस्तु मनुरेवानुसृतः। आपस्तम्बेन वैश्यस्य

---

(१) न तान्तवं वसीत यस्तान्तवं वस्ते क्षत्रं वर्धते न ब्रह्म, तस्मात्तान्तवं न वसीत, ब्रह्म वर्धतां मा क्षत्रम् ॥ गो० ब्रा० [२ ४]

(२) म० स्मृ० [२/४२]

(३) तेषां मेखला मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य आवी वैश्वस्य ॥ आश्व० गृ० [१/१९/११]

(४) मौञ्जीं ब्राह्मणस्य । ज्यामौर्वी राजन्यस्य । आवीसूत्रं वैश्यस्य ॥ बौ० गृ० [२/५/१३]

(५) मौञ्जी मेखला त्रिवृद् ब्राह्मणस्य शक्तिविषये दक्षिणावृतानां ज्या राजन्यस्य मौञ्जी वा योऽमिश्राऽऽवीसूत्रं वैश्यस्य । सैरी तामली वेत्येके ॥ आप० ध० [१/१/२/३४-३७]

(६) मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य, ज्यां राजन्यस्यावीसूत्रं वैश्यस्य ॥ (हि० गृ०) सं० र० मा० [पृ० १९२]

(७) मुञ्जकाशताम्बल्यो रशनाः ॥ गो० गृ० [२/१०/६]

(८) मौञ्जीरशना ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य शणतान्तवी वैश्यस्य ॥ (वसिष्ठ) सं० प्र० [पृ० ४३०]

(९) मौञ्जी मेखलाऽश्मन्तकजा वा ब्राह्मणस्य वैल्वजा मौर्वी वा राजन्यस्य शाणी क्षौमी वा वैश्यस्य ॥ सं० प्र० [पृ० ४३१]

(१०) विप्रस्य मेखला मौञ्जो ज्या मौर्वी क्षत्रियस्य तु ।
शणसूत्री तु वैश्यस्य मेखला धर्मतः स्मृताः ॥ सं० प्र० [पृ० ४३३]
मौञ्जी रशना ब्राहमणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्य ॥ पा० गृ० [२/२]
मौञ्जीं त्रिवृतं ब्राह्मणाय प्रयच्छति मौर्वीं धनुर्ज्यां राजन्याय सौत्रीं वैश्याय ॥ लौ० गृ० [४१/१६]
( सामान्याभिधानेऽपि स्मृत्यनुसारेण कार्पाससूत्रमयीम् इति देवपालभाष्यम् )

सैरी तामली वेति विकल्पोऽप्युक्तः । तत्र सैरी तामली च क्रमेण सीरवाहयो-क्त्ररज्जुर्निर्मिता सैरी, तामलः शणः, तस्येति तामली उच्यते । यदि वा क्षत्रियस्यापि कालायसेन क्वचिद्विद्धा मौञ्जी एव मेखला विधातव्येति च तत्रैवोक्तम् । अत्र बौधायनेन सर्वेषां वा[1] मौञ्जीत्युक्तम्, शङ्खेनापि[2] । मनुना तु विकल्परूपेण[3] कुशाश्मन्तकवल्वजैः क्रमेण मेखला विधातव्येत्युक्तम् । पारस्करयमावप्येवमेवाहतुः[4] ।

अत्र च यथायथं प्रवरसंख्यानुसारेण ग्रन्थिव्यवस्था । मौञ्जी च मेखला सप्तमुञ्जनिर्मितेति[5] च बोध्यम् ।

**अथ दण्डः—**

अत्र ब्रह्मचारिभिर्दण्डधारणं स्वरक्षार्थम्[6] आश्रयणीयमेवं तमोऽवगाहनं गवादिनिवारणमप्सु प्रवेशनं चैतद्धारणस्य[7] फलम् । दण्डश्च सरलः, अव्रणः, कण्टकादिरहितः, अनग्निदग्धश्च स्यात् येन ग्रहीतुर्द्रष्टुर्वा उद्वेगो नैव स्यादिति[8] ।

दण्डश्च वैल्वः पालाशो वा ब्राह्मणस्य, वटस्य खदिरस्य वा क्षत्रियस्य, पीलोः उदुम्बरस्य वा वैश्यस्येति[9] मनुः । क्रमेण पालाशौदुम्बरवैल्वानीति आश्वलायनः[10] । पालाशन्यग्रोधबदरोदुम्बराणि आपस्तम्बः[11] । पालाशं वैल्वं

(१) सर्वेषामेव वा मौञ्जीम् ।। बौ० गृ० [२/५/१३]
(२) सर्वेषां वा मौञ्जीति ।। सं० प्र० [पृ० ४३४]
(३) मुञ्जालाभे तु कर्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ।। म० स्मृ० [२/४३]
(४) मुञ्जाभावे कुशाश्मन्तकबल्वजानाम् ।। पा० गृ० [२/२]
एतासामप्यभावे तु कुशाश्मन्तकबल्वजैः ।। सं० प्र० [पृ० ४३३]
(५) मौञ्जीं सप्तमुञ्जनिर्मिताम् ।। लौ० गृ० देवपालभाष्यम् [४१/१६]
(६) दण्डः करेस्थितो यस्मात्तस्माद्रक्षा यतो भयम् ।। सं० प्र० [पृ० ४३७]
(७) तत्र दण्डस्य कार्यमवलम्बनं गवादिनिवारणम् तमोऽवगाहनमप्सु प्रवेशनम् इत्यादि ।। अपरार्कः [१]
(८) ऋजवस्ते तु सर्वेस्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ।। म० स्मृ० [२/४७]
(९) ब्राह्मणो वैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ।। म० स्मृ० [२/४५]
(१०) आश्व० गृ० [१/१९/१३]
(११) आप० गृ० [१/११५-१६], आप० ध० [१/१/२/३८]

वा ब्राह्मणस्य, नैयग्रोधं स्कन्धममाङ्ग्रं रौहीतकं वा राजन्यस्य, बादरमौदुम्बरं वा वैश्यस्य, सर्वेषां वार्क्षम् इति बौधायन[1]। पालाशवैल्वाश्वत्थाः क्रमेणेति गोभिलः[2]। पालाशवैल्वौदुम्बराः क्रमेणेति पारस्करः[3]। पालाशखादिरौदुम्बरा इति विष्णुः[4]। तत्र शाखाभेदात् पूर्वपूर्वालाभे उत्तरोत्तरस्य वा यथासम्भवं व्यवस्था बोध्या।

अयं च दण्डः केशान्तिको ब्राह्मणस्य, ललाटसम्मितो राज्ञः, नासाग्रसम्मितो वैश्यस्येति मनुः[5]। तत्र केशान्तिक इत्यस्य मूर्धप्रमाण इत्यर्थः। अत एव 'मूर्धललाटनासाग्रप्रमाणाः' इति गौतमः[6] प्राह। आश्व[7]लायनपारस्कर[8]शंख[9] विष्णु[10]बौधाय[11]नादयोऽप्येवमेवाहुः। सांख्यायने[12] तु गृह्यसूत्रे विपर्यस्तो यं क्रमः। तत्र सर्वेषां श्रुतिस्मृत्यादीनामविरोधेन सांख्यायनोक्तंशाखाभेदपरतया कथंचिद् व्याख्येयम्।

विहितदण्डाभावे लाभे वा सर्वे सेर्वेषाम्[13] इति व्यबस्था। गौतमस्तु याज्ञियो वा[14] सर्वेषामित्याह। यमशौनकयोरप्येतदेवाभिमतम्[15]।

---

(१) बौ० गृ० [२/५/१७]
(२) गो० गृ० [२।१०।१०]
(३) पा० गृ० [२।२]
(४) पालाशखादिरौदुम्बरा दण्डाः॥ सं० प्र० [पृ० ४३४]
(५) केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः॥ म० स्मृ० [२।४६]
(६) गो० ध० [१।२५]
(७) आश्व० गृ० [१।१९।१३]
(८) पा० गृ० [२।५]
(९) केशावधिललाटान्तास्तुल्याः प्रोक्ताः क्रमेण तु॥ सं० प्र० [पृ० ४३७]
(१०) मूर्धललाटनासाग्रप्रमाणो यज्ञियस्य वृक्षस्य दण्डः॥ सं० र० मा० [पृ० १९३]
(११) सं० प्र० [पृ० ४३७]
(१२) गो० गृ० [२।१०।१३], आश्व० गृ० [१।२०।१]
(१३) गो० गृ० [२।१०।१३], आश्व० गृ० [१।२०।१]
(१४) याज्ञियो वा सर्वेषाम्॥ गौ० ध० [१।१।२३]
(१५) एतेषामत्यलाभे तु सर्वेषामेव याज्ञियाः॥ यमः॥
एतेषामप्यलाभे तु सर्वेषां यज्ञियाः स्मृताः॥ शौनकः॥ सं०प्र०[पृ०४३५]

यदि च दण्डादयो ध्वस्ताः कथञ्चित् तदा तान् जले प्रक्षिप्य स्वस्व-गृह्योक्तमन्त्रेण पुनर्गृहणीयात्[1]। सांख्यायने तु प्रायश्चित्तमप्युक्तम्[2]॥ विष्णुधर्मसूत्रेऽप्येवमेवावेदितम्[3]॥

**यज्ञोपवीतम्—**

एतदप्यन्यतममङ्गमुपनयनस्येति शास्त्रसिद्धान्तः। तत्र हि मनुष्याणां निवीतं पितृणां प्राचीनावीतम्, देवानामुपनीतमित्युक्तम्[4]। तत्र दक्षिणे पाणौ उद्धृते सति सव्येंऽसेप्रतिष्ठितं दक्षिणस्कन्धावलग्नमुपवीतम्, सव्ये पाणावुद्धृते सति दक्षिणेंऽसे प्रतिष्ठितं सव्यकक्षावलम्बि प्राचीनावीतम्, अनुद्धृत्यैव बाहू कण्ठमात्रसज्जितं निवीतमिति[5] परिभाषा। अत्र विषये शतपथब्राह्मणमप्यवलोकनीयं वर्तते[6]। परन्तु यज्ञोपवीतपरिधानविधिः तत्र-तत्र परिधानसंहितायां ब्राह्मणग्रन्थे च नोपलभ्यते। गृह्यसूत्रे क्वापि यज्ञोपवीत-विधिर्नोपलभ्यत[7] इति वदन्ते पाण्डेयमहाशयास्तु भ्रान्ता एव। अस्माभिः बोधायनीये[8] गृह्यसूत्रे स्पष्टमुपलम्भात्। परन्तु ब्राह्मणसंहिताद्वयालोकनेनेदं ज्ञायते यत् पुरा देवपूजनकाले वस्त्रस्यैवोपवीतादिरूपेण परिधानं क्रियते स्म, न तु सूत्रमयं किञ्चिदासीद् यदधुना दृश्यते स्मृत्यादिषु इति काणे महाभागाः[9]

(१) मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्राश्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥ म० स्मृ० [२ ६४]

(२) सां० गृ० [२।१३।२-३]

(३) वि० ध० सू० [२७ २९]

(४) निवीतं मनुष्याणां प्राचीनावीनं पितृणामुपवीतं देवनाम्॥ तै० सं० [२।५।११।१]

(५) दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बनं भवत्येवं यज्ञोपवीती भवति। सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्लनं भवत्येवं प्राचीनावीती भवति॥ गो० गृ० [१/२/२–३]
उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने॥ म० स्मृ० [२/६३]
ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति। सव्यं प्राचीनावीती भवति। खा० गृ० [१/१/७–८]

(६) श० प० ब्रा० [२/४/२/१]

(७) हिन्दू संस्कार [पृ० १६९]

(८) बौ० गृ० [२/५/७], तै० ब्रा० [३/१०/९]

(९) धर्मशास्त्र का इतिहास [पृ० २१६], [भा० १]

प्रवदन्ति। तैत्तिरीयारण्यके श्रूयते--यज्ञोपवीती सन् यो यज्ञं कुरुते यज्ञस्तस्य विसृत्वरो भवति, किन्तु यो न धारयति यज्ञोपवीतं तस्य यज्ञो नैवं भवति, परिधाय यज्ञोपवीतं ब्राह्मणो यत्किञ्चन कुरुते यज्ञो वै स भवति। अतोऽध्ययनकाले यज्ञकाले आचार्य-करणकाले च यज्ञोपवीतं धारयेत्। मृगचर्मण वस्त्रेण वा प्राचीनावीतिना संवीतिना च भाव्यमिति[1]। एतेनेदं प्रतीयते यत् प्राचीनसमये मृगचर्म वस्त्रं वा यज्ञोपवीतमासीत् पराशरमाधवीयेऽपि[2] एतदेवारण्यकवचनं निर्दिश्यांशत उक्तम् एतदेव। अत इदं प्रयीयते यत् पुरा यज्ञोपयीतं न सूत्रात्मकमेवेदानीन्तनमिवाभिप्रेतमासीदपि तु उत्तरीयवासोऽपि। अत एवापस्तम्बधर्मसूत्रे कथितम्—

"नित्यमुत्तरं वासः कार्यम्। अपि वा सूत्रमेवोपवीतार्थे[3]"॥

तत्रैव—

"सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत[4]" इति।

अत्रोज्ज्वलाकारो हरदत्तः—'उत्तराच्छादनमुपरि वासः। तेन यज्ञोपवीतेन यज्ञोतवीतं कृत्वा भुञ्जीत। नास्य भोजने 'अपि वा सूत्रमेवोपवीतार्थे' इत्ययं कल्पो भवतीत्येके। समुच्चय इत्यन्ये।

पुनस्तत्रैवापस्तम्बीये धर्मसूत्रे—

"यज्ञोपवीती द्विवस्त्रः। अथो निवीतस्त्वेकवस्त्रः[5]"॥ इति।

"उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात्[6]" इति च।

अत्रापि हरदत्त आह—'वासो विन्यासविशेषो यज्ञोपवीतम्। दक्षिणं वाहुमुद्धरत इति ब्राह्मणविहितम्। वाससोऽसम्भवेऽनुकल्पं वक्ष्यति—'अपि वा सूत्रमेवोपवीतार्थे, इति। एषु विधानात् कालान्तरे नावश्यं भावः।' इति।

एतावता मूलतो यज्ञोपवीतस्य वस्त्ररूपत्वमुपपादितं भवति। 'यज्ञोपवीतं कुरुते सूत्रं वा वस्त्रं अपि वा कुशरज्जुमेव' इति वदन् गोभिलोऽपि[7] अर्थममुं

(१) तै० आ० [२/१]
(२) पराशरमाधवीयम् [पृ० १७३], [भा० १]
(३) आ० ध० [२/२।४।२२-२३]
(४) ,, [२।८।१९।१२]
(५) ,, [१।२।६।१८-१९]
(६) ,, [१।५।१५।१]
(७) गो० गृ० [१।२।१]

समर्थयत्येव। एतेन सूत्रमिति प्रकृत्य 'मुख्यश्चायं कल्पः; इह वा शब्दाभावादुत्तरत्र च वा शब्दाम्नायात्' इति वदन्[१] व्याख्याकारो गोभिलस्य हेय एवेति विभावयामः। अत्रार्थे स्मृतिचन्द्रिकाप्यनुकूला[२]।

सम्प्रति परस्ताद् वर्णितमुपवीतं सूत्रात्मकं प्रकृत्य किञ्चिद् विवेचयामः-

तत्र कार्पासमुपवीतं विप्रस्य, शणसूत्रमयं क्षत्रियस्य, वैश्यस्य आविकसूत्रमयमिति मनुः[३]। तदभावे देवलः आह—

कार्पासक्षौमगोवालशाणवल्कतृणादिकम्।
यथासम्भवतो धार्यमुपवीतं द्विजातिभिः[४]॥ इति॥

अत्र चोपवीते सूत्रत्रयम् प्रत्येकं च नवतन्तुकं[५] भवति। अयं च क्रमः अयुग्मशरं सूत्रं त्रिगुणीकृत्य बलितं पुनस्त्रिगुणीकृत्य सम्पादनीयः। त्रैगुण्याभावे तु द्वैगुण्यमप्याह देवलः[६]। तथा च सति षट्तन्तुकमेवोपवीतं भवति। अत्र पैठीनसिरप्येवमेवाह[७]। तदप्यूर्ध्ववृतं कार्यम् इति स्मृतिसंग्रहे[८]। तत्रापि देवताभेदाः[९] देवलेनैव प्रदर्शिताः।

---

(१) गो० गृ० ना० भा० [१/२/१]

(२) सूत्रमपि वस्त्राभावाद् वेदितव्यमिति। 'अति वाससा यज्ञोपवीतार्थान् कुर्यात्तदभावे त्रिवृता सूत्रेण' इति ऋष्यशृंगस्मरणात्॥ स्मृ० च० [पृ० ३२], [भा० १]

(३) कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम्॥ म० स्मृ० [२/४४]

(४) सं० र० मा० [पृ० १८७]

(५) यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम्॥ स्मृ० च० [पृ० ३१], [भा० १]

(६) एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथ वा॥ सं० प्र० [पृ० ४१६]

(७) कार्पासमुपवीतं षट्तन्तुकं त्रिवृतं ब्राह्मणस्य क्षौमं राजन्यस्य आविकं वैश्यस्य॥ तत्रैव॥

(८) करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम्।
बलितं ब्राह्मणैः सूत्रं शास्त्र ऊर्ध्ववृतं स्मृतम्॥ सं० र० मा० [पृ० १८७]

(९) ओंकारः प्रथमः तन्तुर्द्वितीयोऽग्निस्तथैव च। तृतीयो नागदैवत्यश्चतुर्थः सोमदैवतः॥ पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः। सप्तमो वायुदैवत्यः सूर्यश्चाष्टम एव च। नवमः सर्वदैवत्य इत्येते नव तन्तवः॥ स्मृ च० [पृ० ३१] [भा० १]

इदं च यज्ञोपवीतं सधवया ब्राह्मण्या स्त्रिया निर्मातव्यम्। यद्यपि देवलेन 'ब्राह्मण्या सूत्रकं कृतम्'[१] इति सामान्येनैव निर्देशः कृतः तथापि

"विधवारचितं सूत्रमनध्यायकृतं च यत्।
त्रिच्छिन्नं चाप्यधो यातं मुक्तनिर्मितमाचरेत्[२]॥"

इति स्कन्दनपुराणस्य वचनेन विधवायाः प्रतिषेध उक्तः। स चायं सति सम्भवे सधवाकर्तृकयज्ञसूत्रस्य। अन्यथा तु विधवाकृतमपि ग्राह्यमेवेति बोध्यम्।

एतच्चोपवीतसूत्रं वटोरेकमेव, गृहस्थवानप्रस्थयोर्द्वे, सन्यासिनः त्रिदण्डिनश्चैकमेवेति व्यवस्था सामान्येन[३] भृगूक्ता। आयुष्कामोऽधिकमपीति[४]। तत्रायुष्कामस्योक्ते बहुयज्ञोपवीतधारणे कपिञ्जलन्यायेन त्रीण्येवेति पर्यवस्यति। तत्रापि पुत्रकामादिभिः पञ्चादिकमपि कार्यमेव,[५] शास्त्रविशेषात्।

---

(१) सं० प्र० वृ० [४१७]

(२) सं० र० मा० [पृ० १८७]

(३) उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते।
एकमेव यतीनां स्यादितिशास्त्रस्य निश्चयः॥ सं० प्र० [पृ० ४२१]
एकैकमुपवीतं तु यतीनां ब्रह्मचारिणाम्।
गृहिणां च वनस्थानामुवीतद्वयं स्मृतम्॥ वृ० हा० स्मृ० [८/४४]
स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम्।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः॥ वसिष्ठ [१२/१४]

(४) बहूनि चायुष्कामस्येत्यादि काम्यं प्रचक्षते॥ सं० प्र० [पृ० ४२१]

(५) त्रीणि चत्वारि पञ्चाष्ट गृहिणः स्युर्दशापि वा।
उत्तमाश्रमिणस्त्वेकं व्रतिनस्त्वेकमेव हि॥
आयुष्कामैः सदा धार्यं बहुयज्ञोपवीतकम्।
पञ्चभिः पुत्रकामी स्यात् धर्मकामी तथैव च॥ सं० प्र० [पृ० ४२१]
( इदं च ब्रह्मचारिणोऽपि भवति। आयुष्कामनाया अविशेषात् इत्येके। अन्ये तु गृहस्थस्यैवेत्याहुः, पुत्रकामादिसाहचर्यात्। कामनासिद्धिरपि यावज्जीवधारणादेव, न सकृद्धारणात्, 'सदा' पदश्रवणात्–इत्यपि प्रकाशोक्ता व्यवस्थात्र प्रसंगे स्मरणीयैव। )

एवमेव उत्तरीयाभावेऽपि[१] तत्स्थाने तृतीयं यज्ञोपवीतं धार्यम्।

नित्यं तु यज्ञोपवीतं यथायथमेकं वा स्याद्वयं वा, अवश्यमेव धारणीयं द्विजातिभिः, तदभावे सर्वकर्मणां निष्फलत्वात्[२], प्रायश्चित्तश्रवणाच्च। प्रायश्चित्तं च स्नानं प्रार्थनम्[३], उपवासश्च। एतेन विना विण्मूत्रादि-विसर्जनेऽपि प्रायश्चित्तव्यवस्था मिताक्षरोक्ता ज्ञेया[४]। यदि तु कथञ्चिदस्य विनाशः तदा जले विनष्टं भग्नमुपवीतं विक्षिप्य स्वशाखोक्तमन्त्रेण उपनीतान्तरं गृह्णीयात्[५]। परन्तु परोपभुक्तमुपीतं कदापि नैव[६] गृह्णीयात् अपितु नवमन्यैरनुपभुक्तमेव[७] यथायथमेकं द्वयं त्रयं वेति निर्णयः।

---

(१) यज्ञोपवीते द्वे धार्ये श्रौते स्मार्त्ते च कर्मणि।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते॥ नि॰ सि॰ [पृ॰ ५५७]

(२) सदोपवीतिना भाव्यं सदा बद्धशिखेन तु।
विशिखो व्युपवीतश्च यत् करोति न तत् कृतम्॥ सं॰म॰ [पृ॰३९]

(३) लघु—हा॰ स्मृ॰ [२३]

(४) ब्रह्मसूत्रं विना विण्मूत्रोत्सर्गादौ स्मृत्यन्तरे प्रायश्चित्तमुक्तम्-
विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः।
प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा॥
तत्र ऊर्ध्वोच्छिष्टे उपवासः, अधरोच्छिष्टस्योदकपानादिषु गायत्रीजप इति व्यवस्था। अकामतस्तु—
यः पिबेन्मोहतश्चैव भुञ्जतोऽनुपवीतिनः।
प्राणायामत्रिकं षट्कं नक्तं च त्रितयं क्रमात्॥ इति स्मृत्यन्तरोक्तं द्रष्टव्यम्॥ मिताक्षरा-[३/२९२]

(५) मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्राश्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥
म॰ स्मृ॰ [२/६४]

(६) उपानहौ च वासश्च धृतमन्यैर्न धारयेत्।
उपवीतमलङ्कारं स्रजं कारकमेव च॥ म॰ स्मृ॰ [४/६६]

(७) पाटितं त्रुटितं वापि ब्रह्मसूत्रं यदा भवेत्।
नूतनं धारयेद्विप्रः स्नानसंकल्पपूर्वकम्॥
आचम्य प्रतिसूत्रं तु त्रिगुणीकृत्य यत्नतः।
यज्ञोपवीतमेकैकं प्रतिमन्त्रेण धारयेत्॥ सं॰ प्र॰ [पृ॰ ४२३]
छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम्।
विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचिः॥ सं॰ र॰ मा॰ [पृ॰ १८८]
विधवेत्यापत्कल्पः, स्कान्दे निषेधादिति बोध्यम्॥

## अथ सावित्र्युपदेशः—

सावित्र्युपदेशो हि मुख्यतमः। तत्र शतपथब्राह्मणे श्रूयते—सार्वैकवर्षादूर्ध्वं पश्चादुपनयात् चतुर्विंशद्दिनेषु द्वादशसु दिनेषु त्रिषु वाऽतीतेषु आचार्यो सावित्रीमुपदिशति ब्रह्मचारिणे, ब्राह्मणब्रह्मचारिणे त्वत्यवधानेनैवेति[1]। पारस्करादयोऽप्येवमाहुः[2]। परन्तु इदानीमुपनयनदिन एव सावित्र्युपदेशः क्रियते। बहवो गृह्यसूत्रकारा अपि अग्नेरुत्तरतः[3] पूर्वाभिमुखेणाचार्येण पश्चिमाभिमुखाय ब्रह्मचारिणे सावित्र्युपदेशमनुजानन्ति।

उपदेशश्च प्रथमं पादस्य तदनु पादद्वयस्य ततश्च तृतीयावृत्तौ सम्पूर्णाया गायत्र्याः त्रिपदायाः[4]। सापि गायत्री ओंकारपूर्विकेत्येको विशेषः तत्परा च। आदावन्ते च ओङ्कारमुच्चारयेदेव। यदाह मनुः—

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति[5]॥ इति।

अस्यायमर्थः - ओङ्कारः प्राचीनादेव वैदिकाद्युगात् परमात्मप्रतीकभूतो मन्यते। तैत्तिरीयोपनिषदि ओमित्यस्य ब्रह्मत्वमभिहितम्[6]। ओमित्येतदक्षरमित्युच्यते[7]। अक्षरं च न क्षरतीति हेतोः। आपस्तम्बेन हि ओमिति स्वर्गद्वारतयोक्तम्[8]। मनुना हि अत्र अकारोकारमकारा दृश्यमानाः प्रजापतिना क्रमेण वेदत्रयाददुदुग्धा[9] इत्युक्तम्। कठवल्ल्यामपि प्रतिपादितोऽयमर्थः भङ्ग्यन्तरेण। वृद्धहारीतेन च विष्णोः लक्ष्म्याः जीवस्य च वाचका

---

(१) श० प० ब्रा० [११/५/४/१-१७]

(२) संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा॥ सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात् आग्नेयो वै ब्राह्मण इति श्रुतेः॥ पा०गृ० [२/३/६-७], मा०गृ० [१/२२ १५], सा०गृ० [२/५], भा०गृ० [१/६]

(३) अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायासन्नाय समीक्षमाणाय समीक्षिताय। पा० गृ० [२/३/४]

(४) पा०गृ० [२/३/५], आश्व० गृ० [१/२६/५], बौ० गृ० [२/५/४०]

(५) म० स्मृ० [२/७४]

(६) तै० उ० [१/८], द्र० म० स्मृ० [२/८३]

(७) ऋ० वे० [१/१६४/३९], म० स्मृ० [२/७८]

(८) आ० ध० [१/४/१३/६]

(९) म० स्मृ० [२/७७]

इमे वर्णाः त्रयः क्रमेणेत्युक्तम्[1]। 'अकारोकारमकारा ब्रह्मविष्णुमहेश्वराः[2]' इत्यपि प्रसिद्धमेव। 'एतद्वै तत्[3] परमपरं च ब्रह्म यदोङ्कारः' इति प्रश्नोपनिषद्यपि दृश्यते। योगसूत्रेऽपि तस्य वाचकः प्रणवः[4]' इत्युक्तम्। लिङ्गपुराणे चोक्तम्—

प्रणवो वाचकस्तस्य शिवस्य परमात्मनः।
शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः[5] ॥ इति।

योगियाज्ञवल्क्येनाप्यस्य परमात्मनामत्वं स्पष्टमुक्तमेव[6]।

तस्मादतीव प्रशस्त ओङ्कार इति युक्तमस्यादावन्ते च सम्बन्धो गायत्र्याः।

अपरश्चात्र विशेषो महाव्याहृतिप्रयोगविषयकः। गायत्र्याः आदौ ओंकारानन्तरं महाव्याहृतयः प्रयोक्तव्या[7] एव। महाव्याहृतयश्च सामान्यतः सप्त प्रसिद्धाः[8]। परन्तु वसिष्ठ[9]वैखानस[10]गौतमैः[11] पञ्चैवोक्ताः—भूः, भुवः, स्वः, पुरुषः, सत्यम् इति। मनुस्तु तिस्रो महाव्याहृतयः--भूः, भुवः, स्वः, इत्याह[12]। आपस्तम्बेन[13]बौधायनेन[14] च महाव्याहृतिप्रयोगे आदावन्ते वा गायत्र्या इति विकल्प उक्तः। तथा च गायत्र्युपदेशस्य यत् प्रकारद्वयमिष्टमाश्वलायनस्य

---

(१) बृ० हा० स्मृ० [६/५९-६२], गरुडपुराणे त्वत्र विशेष उक्तः—
व्यक्ताव्यक्तं च पुरुषस्तिस्रो मात्राः प्रकीर्तिताः।
अर्धमात्रा परं ब्रह्म ज्ञेयमध्यात्मचिन्तकैः ॥ यो० वा० [पृ० ८४]
(२) यो० वा० [पृ० ११४]
(३) प्र० उ० [५/२]
(४) यो० सू० [१ २०]
(५) लि० पु० (उत्तरार्धम्) [६ ५०]
(६) अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ॥ बृ०यो०या० स्मृ० [२ ६१]
(७) एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।
सन्ध्ययोर्वेदविद् विप्रो वेदपुण्येन युज्यते ॥ म० स्मृ० [२/७८]
(८) भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम् इति सप्त महाव्याहृतयः।
(९) (१०) (११) वसिष्ठ [२/९], वैखानस [७/६], गौ० ध० [१ १ ५२]
(१२) तिस्रो महाव्याहृतयोऽव्ययाः। म० स्मृ० [२/८१]
(१३) व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथर्धर्चयोरुत्तमां कृत्स्नायाम ॥
आ०गृ० [३ ११ ११]
(१४) बौ० गृ० [२/५/४०]

तदाह तद्व्याख्याता सुदर्शनाचार्यः[1]—

ओम् भूस्तत्सवितुर्वरेण्यम् । ओम् भुवः भर्गो देवस्य धीमहि । ओम् स्वो धियो योनः प्रचोदयात् । ओम् भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । ओम् धियो यो नः प्रचोदयात् । ओम् स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥

ओम् तत्सवितुर्वरेण्यं भूः । ओम् भर्गो देवस्य धीमहि भुवः । ओम् धियो यो नः प्रचोदयात् स्वः । ओम् तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि भूः । ओम् धियो यो नः प्रचोदयात् भुवः । ओम् तत्सवितुर्वरेण्य भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् स्वः ॥ इति ॥

## सावित्रीस्वरूपम्—

अत्र मतद्वयम्—ब्राह्मणक्षत्रियविशां क्रमेण गायत्री, त्रिष्टुप्, जगती च सावित्री भवतीत्येकः[2], सर्वेषां गायत्र्येवेत्यपरः[3]। तत्रापि गायत्र्यां निबद्धायां सावित्र्यां 'तत्सवितुः' इत्यादिस्वरूपायां विवादाभावेऽपि राजन्यवैश्ययोः सावित्र्योः किं स्वरूपमित्यत्र भिन्नं भिन्नं मतं दृश्यते। तत्र 'देव[4]सवित.' इति क्षत्रियस्य, 'विश्वा रूपाणि[5] प्रति०' इति वैश्यस्येति शातातपः। पारस्करभाष्यकारौ जयरामगदाधरावप्येवमेवाहतुः। लौगाक्षिकाठकव्याख्यातारश्च 'अदब्धेभिः[6] सविता०' इति क्षत्रियस्य, विश्वा रूपाणि०' इति वैश्यस्येति[7] वदन्ति। 'तां[8]सवितु.' इति क्षत्रियस्य, 'युञ्जते[9] मनः' इति

---

(१) आश्व० सु० भा० [२/२]

(२) सद्यस्त्वेव गायत्रीं ब्रह्मणायानुब्रूयात्....। त्रिष्टुभं राजन्यस्य। जगतीं वैश्यस्य ॥ पा० गृ० [२ ३/७-९], वा० गृ० [५/४३]

(३) सर्वेषां वा गायत्रीम् ॥ पा० गृ० [२/३/१०], सर्वेषां वा सावित्री ॥ कात्यायनः ॥ सं० प्र० [पृ० ४२६]

(४) पा० गृ० हृ० भा० [३/३/७-९]

(५) विश्वारूपाणि प्रतिमुञ्चते कविः प्रवासीद् भद्रं द्विपदे चतुष्पदे।
विनाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥
ऋ० वे० [५ ८१/२]

(६) अदब्धेभिः सविता पायुमिष्ट्वं शिवेभिरद्य परिपाहि नो गयम्।
हिरण्यजिह्वः सुविताय नव्यसे रक्ष मा किर्नो अघशंस ईशत ॥
[ लौ० गृ० दे० भा० ४१/३० ]

(७) (८) लौ० गृ० दे० भा० [४१/३०]

(९) युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥
ऋ० वे० [५/८१/१]

वैश्यस्येति भर्तृयज्ञः। 'देवो याति[1] सविता' इति क्षत्रियस्य, 'युञ्जते मनः' इति वैश्यस्येति वाराहगृह्यसूत्रम्। शांखायनटीकाकारेण तु 'आकृष्णेन रजसा[2]' इति क्षत्रियस्य, 'हिरण्यपाणिः सविता[3]' इति 'हंसः शुचिषद्[4]' इति वा वैश्यस्येत्युक्तम्। तत्र शाखाभेदाद् व्यवस्था। अपरः पक्षस्तु स्पष्ट एव 'तत्सवितुः[5]' इत्येव सर्वेषां सावित्रीति। तत्र पूर्वकल्पबीजन्तु 'गायत्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्' इति श्रुतिः[6], स्मृतिश्च[7]। द्वितीयपक्षस्याशयस्तु गायत्र्युपनिबद्धायाः सावित्र्या महनीयार्थ-प्रकाशकत्वम्। अत एवेयं 'वेदमाता[8]' इति गीयते। अत एव लौगाक्ष्या[द]-गृह्यसूत्रेष्वपि 'तत्सवितु' इत्यस्यैव सामान्येनोत्सर्गः[9] कृतः।

## भिक्षाचरणम्

तत्र 'सायं प्रातर्भिक्षेत' इत्याश्वलायनाद्युक्तेर्भिक्षाचरणमप्येकं कर्तव्यं

---

(१) वा० गृ० [५/४३]

(२) आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥ ऋ०वे०[१/३५/२]

(३) हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति॥
ऋ० वे० [१/३५/९]

(४) हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद् वरसदृतसद् व्योमसद्धा गोजा ऋतजा अद्रिजा ऋतम्॥
ऋ० वे० [४/४०/५]

(५) तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ ऋ० वे० [३/६२/१०], साम० [१४६२], तै० सं० [१/५/६/४], [४/१/११/१], वा० सं० [३/३५,२२/९, ३०/२, ३६/३]

(६) द्र० म० मे० भा० [२/३८]

(७) सावित्र्या ब्राह्मणमुपनयेत् त्रिष्टुभा राजन्यं जगत्या वैश्यम्॥ कात्यायनः सं० प्र० [पृ० ४२९]
गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यम्॥ व०स्मृ० [४/३]

(८) म०स्मृ० [२/७७-८३], आप०ध० [१/१/१/१०], संवर्त्तस्मृतिः [२१६-२२३] विष्णुधर्मसूत्रम्–[५५-११-१७], शंखस्मृतिः [१२], बृ० उ० [१४/१-६]

(९) लौ० गृ० [४१/३०]

ब्रह्मचारिणः[1]। एतच्च दण्डग्रहणसूर्योपस्थानाग्निप्रदक्षिणानन्तरं कार्यम्[2]। आश्वलायनेनात्रोक्तम् तमेव पुरुषं वा स्त्रियं प्रथमं भिक्षां याचेत यो 'न' इति न ब्रूयात्[3]। (एतच्च न केवलं मौञ्जीव्रताङ्गभिक्षापरम् अपि तु यावद् ब्रह्मचर्यंक्रियमाणभैक्षानुष्ठानपरम्।) अत एव मनुना अन्यत्र प्रतिषेधाशङ्कायाः सत्त्वात् प्रथमं मात्रादेव भिक्षामुपदिदेश[4]। तत्रापि 'भवति भिक्षां देहि' इति ब्राह्मणः, 'भिक्षां भवति देहि' इति राजन्यः 'देहि भिक्षां भवति' इति वैश्यो ब्रूयात्[5]।

(१) अकृत्वा भैक्षचरणमसमिध्य च पावकम्।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥ म० स्मृ० [२/१८७]
भैक्ष्याग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम्॥
उपस्थानं ततः कुर्यात् समासिञ्चन् त्वनेन तु॥ या० स्मृ० [३/२८१-८२]

(२) प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद् भैक्षं यथाविधि॥ म० स्मृ० [२/४८]

(३) अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा॥ आश्व०गृ० [१ २२ ७-८]
अप्रत्याख्यायिनीं नारीमप्रत्याख्यायिनं नरम्।
ब्रह्मौदनार्थं विप्रार्थं सुशुद्धान् याचयेत् तदा॥ आश्वलायनः॥
[सं० प्र० पृ० ४३८]

ब्रह्मचारी निशारम्भे पक्तुं ब्रह्मौदनं चरुम्।
द्विजान् भोजयितुं पश्चात् द्रव्यं भिक्षेत बान्धवात्॥
अप्रत्याख्यायिनः पुंसः स्त्रियो वा तादृशीः पुनः।
भिक्षेत पात्रहस्तः सन् प्राप्य प्राप्यतदन्तिकम्॥ शौनकः॥ तत्रैव॥

(४) मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत् भिक्षां प्रथमं या चैनं नावमानयेत्॥ म० स्मृ० [२/५०]
अथास्मै अरिक्तं पात्रं प्रयच्छन्नाह--मातरमेवाग्रे भिक्षस्वेति।
स मातरमेवाग्रे भिक्षति॥ बौ० गृ० [२,५४७-४८]
अग्रे भिक्षेत जननीमप्रत्याख्यायिनी च या।
पश्चात् पितरमन्येऽपि ये वा स्युर्बान्धवादयः॥ शौनकः॥सं०प्र०[पृ०४३८]

(५) भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ म० स्मृ० [२/४९]
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम्॥ या० स्मृ० [१३०]
गो० गृ० [२ १० ४२-४४], खा० गृ० [२ ४ २८-३१], गां० गृ० [२,६/५ ८],
बौ० गृ० [२ ५ ४९-५१]

तत्रौपनयनाङ्गभूतायां भिक्षायां याचितो याचिता वा सुवर्णं रजतं रत्नं वा दद्यात्[1]। अन्यदा तु हविष्यान्नादि। भिक्षार्जितं ह्यन्नं शुद्धं भवति। साधुसमाहृतभिक्षान्नमश्नन् गुर्वनुज्ञया वटुः उपवासफलं[2] लभते। एवं विध एवोपवासो वटोर्विहितः, अनश्नतः सिद्ध्यभावश्रवणात्[3]। ब्रह्मचारिणे भिक्षादानं गृहस्थस्यापि पूतं कर्त्तव्यम् शास्त्रे प्रतिपादितम्। तच्च 'स्वस्ति' शब्दमुच्चारयन् सजलं (भोजनं) दद्यादिति स्मृत्यादौ[4] स्पष्टमभिहितम्। इयं भिक्षा ग्राससम्मिता[5]। ग्रासश्च मयूराण्डपरिमाणः विज्ञानेश्वर आह। प्रमाणयति चात्र शातातपम् --

ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्चतुर्गुणम्।
हन्तस्तु तैश्चतुर्भिः स्यात् अग्रं तत्त्रिगुणं स्मृतम्[6] ॥ इति ॥

इयं भिक्षा चाण्डालादिभ्योऽपपात्रेभ्यः अभिशस्तेभ्यो वा न स्वीकार्या[7], नापि शूद्रेभ्यः। ब्राह्मणादिद्विजातिभ्योऽप्राप्तायां सत्यान्तु शूद्रादप्यामान्नं ग्राह्यम्[8] इत्याङ्गिरा। पक्वान्नं तु आपत्कालेऽपि न[9] ग्राह्यम्। एवमेव गुरोः कुले ज्ञातिजनस्य कुलेऽपि भिक्षा नैव ग्राह्या। अलाभे तु यथायथं

---

(१) सुवर्णं रजतं रत्नं सा पात्रेऽस्य विनिक्षिपेत्॥ सं० प्र० [पृ० ४३९]

(२) भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता॥ म० स्मृ० [२/१८८]

(३) आहिताग्निरनड्वांश्च ब्रह्मचारीति ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरश्नताम्॥ सं० म० प्र० [६१]

(४) अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः॥
सत्कृत्य भिक्षवे भिक्षा दातव्या सव्रताय च।
भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान्॥ या० स्मृ० [१/१०७-८]

(५), (६) मिताक्षरा [१/१०८]

(७) भिक्षमाणोऽन्यत्रापापेभ्योऽभिशस्ताच्च॥ आप० ध० [१ ३/२५]
भैक्षचरणमभिशस्तपतितवर्जम्॥ गौ० ध० [१.२/४१]

(८) यस्तु वेदमधीयानः शूद्रान्नमुपजीवति।
शूद्रो वेदफलं याति शूद्रत्वं सोऽधिगच्छति॥
तस्मादामं ग्रहीतव्य शूद्रादप्यङ्गिरा ब्रवीत्॥ सं० म० [पृ० ६०]

(९) पराशरमाधवीयम् [१ २]

पूर्वंपूर्वपरित्यागेन भिक्षाचरणं कार्यम् इत्येव निर्णयः[1] ।

भिक्षापि भोजनार्थमपेक्षितेति तदधिका नैव स्वीकरणीया। अन्यथा-स्तेयव्रतभङ्गः[2] ।

आहृतां च भिक्षां पूर्वं गुरवे निवेदयेत् पश्चाच्च गुर्वनुज्ञातः तां भुञ्जीत। गुरोरनुपस्थितौ तत्कुलस्थस्य गुरुभार्यापुत्रादेरनुज्ञया[3] । तेषामप्यभावे श्रोत्रियान्तरानुमत एव भिक्षां भुञ्जीत न तु स्वार्थमात्रप्रयोजनो भैक्षचर्यं कुर्यात्[4] । श्रोत्रियान्तरस्याप्यभावे तु भिक्षांशं प्रथमतो निक्षिपेदग्नौ तत उपभुञ्जीत। भुक्त्वा च स्वभोजनपात्रं स्वयमेव प्रक्षालयेत्। भोजनपात्रं च तावदेव निक्षिपेत् यावत् भोक्तुं शक्नुयात्, न कदापि उच्छिष्टमवशेषयेत्। अशक्तौ सत्यां भूमौ निखनेत्, जले वा प्रक्षिपेत्[5] । भोजनकाले च मौनव्रतमवलम्बेत उदकं च स्वसन्निधौ स्थापयेदेव[6] ।

एवं भिक्षाचरणं विधिवदनुष्ठेयमाब्रह्मचर्यसमाप्तेः।

**सन्ध्यावन्दनम्—**

उपनयनदिने मध्याह्नादारभ्य सन्ध्याया वन्दनं कर्तव्यम्। इतरथा स

---

(१) आचार्यज्ञातिगुरुष्वलाभेऽन्यत्र। तेषां पूर्वं पूर्वं परिहरेत्॥
गौ० ध० [१/२ ४३-४४]

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अलाभेत्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत्॥
सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसंभवे॥
नियम्य प्रयतो वाचमभिशस्तांश्च वर्जयेत्॥ म०स्मृ० [२/१८४-८५]

(२) आहारमात्रादधिकं न क्वचिद् भैक्षमाहरेत्।
युज्यते स्तेयदोषेण कामतोऽधिकमाहरन्। यमः॥ सं० म० [पृ० ६१]

(३) तत्समाहृत्योपनिधायाचार्याय प्रब्रूयात्। तेन प्रदिष्टं भुञ्जीत। विप्रवासे गुरोराचार्यकुलाय॥ आप० ध० [१,२/२१-२३],
निवेद्य गुरवेऽनुज्ञातो भुञ्जीत। असन्निधौ तद्भार्यापुत्रसब्रह्मचारिभ्यः॥ गौ० ध० [१/२ ४५-४६]

(४) तैर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः॥ नात्मप्रयोजनश्चरेत्॥
आप० ध० [१/३/३४-३५]

(५) भुक्त्वा स्वयममंत्र प्रक्षालयीत। न चोच्छिष्टं कुर्यात्। अशक्तौ भूमौ निखनेत्। अप्सु वा प्रवेशयेत्॥ आप० ध० [१/३/३६-३९]

(६) वाग्यतस्तृप्यन्नलोलुप्यमानः सन्निधायोदकम्॥ गौ० ध० [१ २ ४७]

शूद्रवत् सर्वस्मात् द्विजकर्मणो बहिष्कार्यः[1]। इयं च सन्ध्या प्रायेण सायं प्रातश्च कर्तव्येति सामान्येन[2] विधानम्। तत्रापि अत्रिवचनं यत् आत्मज्ञानिना प्रातः मध्याह्ने सायं च सन्ध्या करणीया। तत्र प्रातःसन्ध्या 'गायत्री' मध्याह्नसन्ध्या 'सावित्री' सायंसन्ध्या 'सरस्वती' इति कथ्यते[3]।

पूर्वा च सन्ध्या तत्र ऋक्षदर्शनकालादारभ्य सूर्यदर्शनान्तः कालः पूर्वसन्ध्यायाः (प्रातः)। सायं च पश्चिमा सन्ध्याऽनुष्ठेया। अस्याश्च कालः सूर्यदर्शनकालादारभ्य नक्षत्रदर्शनपर्यन्तः[4]। इमे द्वे अपि 'सन्ध्या' इति कथ्यते, अहोरात्रयोः सन्धौ क्रियमाणत्वात्। सन्धिश्च खण्डमण्डलोपलकाल इति मिताक्षरा[5]। तत्र पूर्वा सन्ध्या अज्ञानकृतं नैशं पापं निहन्ति, पश्चिमा तु दिवाकृतम्[6]। ज्ञानकृतस्य तु पापस्य दिवा वा रात्रौ तत्प्रायश्चित्तानुष्ठानात् विनाशः।

अत्र सन्ध्यानुष्ठानकालेऽयं विशेषो मनूक्तो बोद्धव्यः यत् प्रज्ञां यशः दीर्घायुष्ट्वं ब्रह्मवर्चसं च प्राप्तुमुत्कैर्द्विजैः दीर्घकाल पर्यन्तं पूर्वोक्त-नक्षत्रदर्शनान्तादिकालादूर्ध्वमपि सन्ध्या समनुष्ठेया[7]।

इयं च सन्ध्या ग्रामाद्बहिरेव कर्त्तव्येति गौतमादयः[8]। तत्र निष्प्रपञ्च-

---

(१) न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् बहिकार्यः सर्वस्माद् द्विजकर्मणः॥ म० स्मृ० [२/१०३]

(२) म० स्मृ० [२/१०१], या० स्मृ० [१/२४-२५], गौ० ध० [१/२ १७]

(३) धर्मशास्त्र का इतिहास—[पृ० २२७, भा० १]

(४) तिष्ठेत् पूर्वामासीतोत्तरां सज्योमिष्पाज्योतिषो दर्शनाद्वाग्यतः॥
गौ० ध० [२/१७]

पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमर्कदर्शनात्।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात्॥ म० स्मृ० [२/१०१]
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्।
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्॥ या०स्मृ०[१/२४-२५]

(५) मिताक्षरा—[१/२४-२५]

(६) पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम्॥ म० स्मृ० [२ १०२]

(७) ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवाप्नुयुः।
प्रज्ञां यशश्च कीर्त्तिं च ब्रह्मवर्चसमेव च॥ म० स्मृ० [४ ९४]

(८) बहिः सन्ध्यत्वं च॥ गौ० ध० [२/१६], ग्रामाद्बहिरेव सन्ध्योपासनं कर्तव्यम् इति हरदत्तः। मा० गृ० [१/२/२]

त्वादिर्हेतुर्बहिर्देशस्येति प्रतीयते। अत एव शांखायनगृह्ये[1] एकान्ते स्थाने वौधायनीये[2] च नदीतटे पूते वा स्थानान्तरे सन्ध्यानुष्ठेयेत्युक्तम्।

सन्ध्यायां च गायत्रीजप एव प्रमुखं कर्म, तदङ्गभूततयाऽघमर्षणसूक्तादिजपोऽपि कार्य इति विशेषः। सूर्यायार्घ्यमपि अत्र देयम् समन्त्रकम्। मन्त्रस्य स्वरूपं च स्वस्वगृह्यानुसारेण विज्ञेयम्।

## अथाग्निकार्यम्—

सन्ध्यानन्तरमग्निकार्यमनुष्ठेयम् इति याज्ञवल्क्यादयः[3]। अन्यथा प्रायश्चित्तश्रवणात्[4]। एतच्चाग्निकार्यं सायं प्रातश्च कुर्यादिति मन्वादयः[5]। केचन सायमेवेति मन्वते[6]। अत्राहुत्यर्थं समिदाहरणमप्यङ्गम्। समिधाहरेत्[7] दूरादपि। परन्तु अस्तमिते सूर्ये समिदाहरणाय[8] न गच्छेत्। अत्र वने गुरुकुले निवसतां ब्रह्मचारिणां संरक्षणमेव कारणम्। रात्रौ प्राणसङ्कटादिसम्भावनायाः सत्त्वात्।

समिच्च पलाशस्येति प्रथमः कल्पः। तदलाभे खदिरस्य। तस्याप्यलाभे शमीरोहितकाश्वत्थानाम्, तेषामप्यलाभे अर्कवेतसयोरिति वायुपुराणम्[9]। तेषामप्यलाभे यस्य कस्यापि यज्ञियवृक्षस्यसामद् ग्राह्या। यज्ञियवृक्षाश्च ब्रह्मपुराणोक्ताः—

---

(१) शा० गृ० [२/९/१]
(२) बौ० गृ० [२ ४/१]
(३) अग्निकार्यं ततः कुर्यात् सन्ध्ययोरुभयोरपि॥ या० स्मृ० [१/२५], संवर्त्तः—अग्निकार्यं च कुर्वीत मेधावी तदनन्तरम्॥ सं०प्र० [पृ० ४४८]
(४) अकृत्वा भैक्ष्यचरणमसमिध्य च पातकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥ म० स्मृ० [२/१८७], द्र० या० स्मृ० [३/२८१]
(५) सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः॥ म० स्मृ० [२ १८६]
(६) सायमेवाग्निपूजेत्येके॥ आप० ध० [१/४/१७]
(७) दूरादाहृत्य समिधः—म० स्मृ० [२/१८६]
(८) नास्तमिते समिद्धारो गच्छेत्॥ आप० ध० [१/४ १५]
(९) पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः। शमीरोहितकाश्वत्थास्तदलाभेऽर्कवेतसौ॥ सं० प्र० [पृ० ४४८]

शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थौदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः[1] ॥ इति ।

समिच्च प्रोक्षणानन्तरमेवाग्नौ प्रक्षेप्तव्या । समिद्धेनाग्निना समूहिन्या अथवा पाणिना परिसमूहितेन च भाव्यम् । परन्तु समिद्धेसति पाणिनैव परिसमूहेत्[2] ।

समिच्चाङ्गुष्ठादधिकस्थूलतरा न स्यात्[3] । नापि त्वग्रहिता, नापि कीटादिदष्टा, प्रादेशमात्रमिता, न द्विशाखिका, न पर्णयुक्ता, अन्यथा कर्मविनाशः फलालाभो विपरीतफलं वा ।

एवं विधाग्निपरिचरणस्य विषये हारीतोक्तं न विस्मर्त्तव्यम्—

पुराजग्राह वै मृत्युर्हिंसयन् ब्रह्मचारिणम् ।
अग्निस्तं मोक्षयामास तस्मात् परिचरेद्धि तम् ॥
ब्रह्मचारी यदा त्वग्नावादध्यात् समिधो नहि ।
गृह्णीयात्तं तथा मृत्युरादध्यात् समिधस्ततः[4] ॥ इति ॥

अत एव सर्वेषु गृह्यसूत्रेषु स्मृतिषु च अग्नीन्धनस्य अवश्यकर्त्तव्यत्वमुक्तम्[5] । तस्मादग्नीन्धनमन्यतमं कृत्यं समुपनीतस्य ब्रह्मचारिणः । एवमन्येऽपि शास्त्रोक्ताः धर्माः ब्रह्मचारिणाऽनुष्ठेयाः ॥

---

(१) सं० प्र० [पृ० ४४६]

(२) अग्निमिद्ध्वा परिसमूह्य समिध आदध्यात् सायं प्रातर्यथोपदेशम् ।
समिद्धमग्निं पाणिना परिसमूहेन्न समूहिन्या । प्राग्वा यथाकामी ॥
आप० ध० [२/१६, १८, १९]

(३) नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतरा क्वचित् ।
न विमुक्तात्वचश्चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका न्यूना तथा न स्याद् द्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥
विशीर्णा विदला ह्रस्वा वक्राः सशुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥
सं० प्र० [पृ० ४३]

(४) सं० प्र० [पृ० ४४९]

(५) समिधमादध्यादग्नये समिधमिति—खा० गृ० [२/४, २७]
अग्नीन्धनभैक्षरणे । गौ० ध० [१/२ १२]
सायं प्रातः समिधमादध्यात् ॥ आश्व० गृ० [१ २२ ६]
सायं प्रातरग्निं परिचरेत् ॥ वा० गृ० [१/५/२३]

## अथ त्रिरात्रव्रतम्—

उपनयसम्बन्धिनि विधौ सम्पन्ने सति ब्रह्मचारिणा त्रिरात्रव्रतमनुष्ठेयं भवति। अस्य व्रतस्यानुष्ठानेऽनेके नियमा उक्ताः। अस्य व्रतस्यावधिः त्रीणि, द्वादश दिनानि यावत् वर्षं वा[1]। अस्यारम्भत एव विद्यार्थिजीवनस्य कृते बहवोऽनुशासनविधयोऽनुष्ठेयाः भवन्ति। एतदवधौ क्षारभोजनं मांसादि च निषिद्धम्। दिवाशयनं प्रतिषिद्धम्। अधः शयनं च विहितम् न शय्यादिषु। अस्य च व्रतस्यान्ते बुद्धिं स्मृतिं प्रज्ञां च ब्रह्मचारिणो वर्धयितुमीश्वरानुग्रहाय मेधाजननं क्रियते[2]। इदं च कर्म मेधाजननमित्यभिधीयते यतोऽत्र वेदविद्या-ग्रहणानुकूलां मेधां लभते ब्रह्मचारी। अत एव शौनकेनोक्तम् - इयं सावित्री जगद्धात्री स्वयमेव मेधास्वरूपिणी आस्ते। विद्यासिद्ध्यर्थम् मेधाभिवृद्ध्यर्थं च ब्रह्मचारी सावित्रीमेवार्चयेत्[3]। अत एव च मनुनापि स्पष्टमेव कथितम् यत् इयं सावित्री त्रिपदा ब्रह्मणो मुखम् एव ब्रह्मावगतिद्वारम् यतः प्रजापतिः त्रिभ्यो वेदेभ्योऽस्याः पादत्रयमदूदुहत्। अत एव अस्य सप्रणवव्याहृतिकायाः सहस्रकृत्वः अभ्यासेन महतोऽपि महतः पापात् द्विजो विमुच्यते[4]। तस्मा-दस्याः सावित्र्याः समाराधनेन विद्वान् ब्रह्मचारी वा सर्वं मेधादिकं नचिरादे-वाधिगच्छतीति किमाश्चर्यम्।

परमद्येदं कर्मोपनयनात्मकं साङ्गं नानुष्ठीयते सम्यक् द्विजातिभिः। ईदृश्येवास्य कर्मणो महती विश्रुतिः, तथापि सम्प्रति पाश्चात्याधिभौतिका-कर्षणलुब्धाः भारतीया द्विजा नानुतिष्ठन्ति इति दौर्भाग्यमेवास्माकम्।

---

(१) आश्व० गृ० [१/२२ १७], हि० गृ० [१/८/१६]

(२) भा० गृ० [१/१०], आश्व० गृ० [१/२२ १८]

(३) या सावित्री जगद्धात्री सैव मेधास्वरूपिणी।
मेधाप्रसिद्धये पूज्या विद्यासिद्धिमभीप्सता॥ सं० प्र० [पृ० ४४४]

(४) त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्॥
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥
एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥
सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्॥ म० स्मृ० [२/७७-७९,८१]

अथोपनेतृनिर्णयः—

तत्र पिता प्रथम उपनेता पुत्रस्य । तदभावे पितामहादयोऽपि । तत्रापि पित्रभावे पितामहः, तदभावे पितुर्भ्राता पितृव्यः, तदभावे ज्ञातयः सपिण्डाः, तदभावे सगोत्रेषु ये वटोरग्रजास्ते इति गर्गः[१] । पितामहस्यापि एतदेव सम्मतम् इति प्रयोगपारिजातस्थतदीयवचनेन विज्ञायते[२] ।

अत्रायं विशेषो बोध्यः—विदुष एवोपनयनाधिकाराद्धर्मसूत्रादौ अविद्वत्कर्तृकोपनयने दोष श्रवणात्[३] तदैव पिता भवेदुपनेता यदा स विद्वान्, न तु यथा तथापि । तथा च यदि पिता जीवन्नप्यविद्वान् तर्हि तम्परित्यज्य पितामहादिभिरूपनयनं कार्यम् । अत एव 'तदभावे परः परः' इत्यत्राभावपदमधिकाराभावे इत्यर्थकतयैव नेयम्, न तु मृतादौ इत्यर्थकम् । इदमपि च ज्ञेयम्—पितृव्येष्वनधिकृते सोदरः स्यादुपनेतेति[४] । सपिण्डेषु चात एवाधिकारिषु अन्तरङ्गवहिरङ्गपरीक्षावश्यमेत्र कर्तव्या, गुरुशिष्यभावस्य तथा सत्येव साधुनिर्वाहसम्भवात् । यदि तु पूर्वोक्तानामेकोऽपि न लभ्यते तर्हि गुणसम्पन्नो विद्वान् स्वशाखीयः[५] तदभावेऽन्योऽपि[६] स्यादुपनेता कश्चन वेदवित्सदाचारपरायणः ।

अत्रेदमपि बोध्यम्—उपर्युक्ताधिकारिव्यवस्था केवलं ब्राह्मणविषया, उपनयनेऽध्यापनस्य सद्भावात् । न हि ब्राह्मणाद्भिन्नादध्ययनमुक्तम्

---

(१) पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपायनेऽधिकारी स्यात्पूर्वाभावे परः परः ॥ सं० र० मा० [पृ० १८०], नि० सि० [पृ० ५५०]

(२) पितैवोपनयेत् पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥ सं० प्र० [४०७], नि० सि० [पृ० ५५०]

(३) तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् । तस्मिन्नभिजनविद्यासमुदिते समाहितं संस्कारं कुर्यात् ॥ श्रुतिः ॥ सं० प्र० [पृ० ४०८]

(४) तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥ सं० र० मा० [पृ०१८०]

(५) व्यासः—वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखाध्ययमनालस्यं विप्रं कर्त्तारमीप्सितम् ॥ सं०प्र० [पृ०४०८]

(६) शौनकः—कुमारस्योपनयनं श्रुताभिजनवृत्तवान् ।
तपसा धूतनिश्शेषपाप्मा कुर्याद्द्विजोत्तमः ॥ सं०र०मा०[पृ०१८१]

शास्त्रे[1]। यद्यपि पालकाप्यसंहितायाम्[2] ब्राह्मणस्य वर्णत्रयाध्यापनाधिकारः, क्षत्रियस्य क्षत्रवैश्याध्यापनाधिकारः, वैश्यस्य तु वैश्यमात्राध्यापनाधिकार इत्युक्तम्; तथापि मन्वादिप्रामाण्यादेतत्[3] सर्वमापत्कालिकमेवेति मन्यामहे वयम्। तस्मात् असत्यापत्काले ब्राह्मणस्यैवाध्यापनाधिकारित्वात् क्षत्रिय-वैश्ययोरुपनेता पुरोहितो वेदज्ञो ब्राह्मण एव भवेदिति निर्णयः[4]।

अत्र चोपनेतृत्वोपनेयत्वाधिकारलाभार्थं कृच्छ्रत्रयं कार्यम् उपनेत्रुपनेयाभ्याम् इति विष्णुः। आचार्येण तु पुनः कृच्छ्रत्रयानुष्ठानम् सावित्र्यभ्यासः, अग्निप्रभृतिपावनपदार्थस्पर्शनम् च कार्यमिति विशेषमपि विष्णुनैव प्रतिपादितम्[5]॥

तदेवं संक्षेपेणोपनयनं निरूपितम्॥

---

(१) अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः।
प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निर्णयः॥ म० स्मृ० [१०।१]

(२) ब्राह्मणस्त्वथ वर्णांस्त्रीन् अध्यापयितुमर्हति।
द्वौ क्षत्रियस्तथा वैश्य एकमध्यापयेत् सदा॥ सं० प्र० [पृ० ५१३]

(३) अब्राह्मणादध्ययनमापत्काले विधीयते।
अनुव्रज्या तु शुश्रूषा यावदध्ययनं गुरोः॥ म० स्मृ० [२/२४१]

(४) एतद्वचनद्वयं विप्रपरं न क्षत्रियवैश्यपरम्, गायत्रीवाचनस्याध्यापनरूपत्वेन तत्र तयोरनधिकारात्। एतदर्थमेव वेदैकनिष्ठं धर्मज्ञम् इति व्यासवाक्ये विप्रग्रहणं कृतम्। अतः पुरोहित एवोपनेतैतयोरिति ज्ञेयम्॥
सं० र० मा० [पृ० १८०]

पितेति विप्रपरं न क्षत्रियादेः। तेषां पुरोहित एव उपनयनस्य दृष्टार्थत्वात्। तेषां चाध्यापनेऽनधिकारात्॥ नि० सि० [पृ० ५५०]

(५) तत्र वृद्धविष्णुः—

कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांश्च वटुश्चरेत्।
(आचार्याय विशेषः) सावित्रीमभ्यसेदग्निपवित्राणि च संस्पृशेत्॥
सहस्रं द्वादशावृत्तं सावित्रीं प्रजपेद् बुधः।
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत् स्मृतम्॥
सं० प्र० [पृ० ४०६]

# (११) वेदारम्भः

अथ वेदाध्ययनं त्रैवर्णिकानां विहितम्--स्वाध्यायोऽध्येतव्यः इत्यनेन। मनुरपि[1] वेदमनधीत्य शास्त्रान्तराध्यायिनः सकुलस्य शूद्रत्वापत्तिमुदाहरति। स्वाध्यायविधिमूलकमेत्र याज्ञवल्क्यस्यापि वचनम्—

वेद एव द्विजातीनां निःश्रेयसकरः परः।
यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम्॥
त्रिवित्तपूर्णपृथिवीदानस्य फलमश्नुते।
तपसश्च परस्येह नित्यं स्वाध्यायवान् द्विजः[2]॥ इति॥

स्मृतिसारसमुच्चयेऽपि[3] वेदज्ञस्य प्रसंशा इतरस्य च निन्दा श्रूयते—

वेदो यस्य शरीरस्थे न स पापेन लिप्यते।
वेदात्मा स तु विज्ञेयः शरीरैः किं प्रयोजनम्॥
वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः।
तावन्ति हरिनामानि कीर्त्तितानि न संशयः॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः॥
नित्यं नैमित्तिकं काम्यं यच्चान्यत् कर्म वैदिकम्।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम्॥
अनधीतो द्विजो यस्तु शास्त्राणि सुबहून्यपि।
शृणोत्याब्रह्मणो नाशं नरकं स प्रपद्यते॥
नाधीतवेदो यो विप्र आचारेभ्यः प्रवर्त्तते।
नाचारफलमाप्नोति यथा शूद्रस्तथैव सः॥
अनधीतस्य विप्रस्य पुत्रो वाऽध्ययनान्वितः।
शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते॥

एतावता वेदाध्ययनमनिवार्यम् कृते द्विजातीनामिति सिद्धम्। सम्प्रति संस्कारत्वं स्वातन्त्र्येणास्य कदा स्वीकृतम् इति विवेचनीयम्—

---

(१) योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ म० स्मृ० [२/१६८]

(२) या० स्मृ० [१/४०, ४७-४८]

(३) ग्रं० र० मा० [पृ० ३०४]

तत्र प्रथमं हि उपनयनेन सार्धमेव वेदाध्ययनारम्भः सञ्जायते स्म। अत एव याज्ञवल्क्येनोक्तम्—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्[1]॥ इति।

अतो वस्तुत इदमध्ययनं पुरोपनयनाङ्गमेवासीत्। अत एव गौतमेन[2] वेदारम्भस्य न पृथग्गणना कृता संस्काररूपेण। गौतममते हि वेदारम्भो वेदव्रतान्तर्गत एवासीत्। कालक्रमेण वेदव्रतानुष्ठाने क्षीणे जाते उपनयनात् प्रागेव च वेदेतराध्ययने प्रारब्धे वेदारम्भस्य संस्काररूपेण परिगणनं प्रारब्धम्[3]। अस्य संस्कारत्वेन उल्लेखः सर्वप्रथमं व्यासेन कृतः[4]। पश्चाच्चान्यैरपि कियद्भिर्धर्मशास्त्रकारैः। अयं च संस्कारोऽनुष्ठेयः समावर्त्तनात् पूर्वमेव—

गुरवे तु वरं दत्वा स्नायाद्वा तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा[5]॥ इत्यादि-

याज्ञवल्क्यस्मरणात्। उपनयनात् पश्चादिति च सिद्धमेव, ततः पूर्वं वेदाध्ययनाधिकाराभावात्।

तत्र 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिः स्वशाखाया एवाध्ययनं विधत्ते। अत एव कुमारिलेनोक्तम्—

अत्र स्वाध्यायशब्देन स्वशाखैका तु गृह्यते[6]॥ इति।

स्वशाखा चात्र स्वपरम्परागता शाखैव गीयते[7]। स्वशाखाध्ययनमकृत्वैव परशाखाध्ययनं नैव कदापि कार्यम्[8]।

---

(१) या० स्मृ० [१/१५]
(२) गौ० ध० [१८/१४-२२]
(३) हिन्दू-संस्कार [पृ० १८१-८२]
(४) व्या० स्मृ० [१/१४]
(५) या० स्मृ० [१/५१]
(६) श्लो० वा० (मी० द०) [१/१/१]
(७) वसिष्ठः—पारम्पर्यागतो येषां वेदः सपरिबृंहणः।
प्रथमं तमधीयीत तच्छाख कर्म चाचरेत्॥ सं०र०मा०[पृ० ३०४]
कल्पकारिकायाम्—स्वेन पित्रादिभिर्वापि यः कल्पादिः पुराहृतः।
स तु नैव परित्याज्य इति वेदानुशासनम्॥ सं० प्र० [पृ० ५०६]
(८) पारम्पर्यागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम्।
शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे॥ श्लो०वा०(मी०द०) [१/१/२]

यस्तु मोहादज्ञानाद्वा स्वशाखामुत्सृज्य परशाखामधीते स 'शाखारण्डः' इत्युपाधिभाक, सर्वकर्मभिः शूद्रवत् बहिः कार्यः, वंशनाशकः, रौरवगामी, ब्रह्महा, अन्धे तमसि च मज्जति[1] । अतः स्वशाखां प्रथमं पठेत् । न चैतावता विज्ञेयम् यत्परशाखाध्ययनं प्रतिषिद्धमेतावतेति; स्वशाखाध्ययनादूर्ध्वं परशाखाध्ययनस्यापि —

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्[2]" इत्यादिमन्वादिवाक्येन[3] स्पष्टं विहितत्वात् । तत्र वेदान्तरीयाऽपि शाखा प्रथमं सैवाध्येया या पूर्वपरिगृहीता न तु या काचिदपि[4] । न चैतावता मन्तव्यं यदन्याः शाखा नाध्येतव्या एव, स्वीयपरम्परागृहीतस्वशाखाध्ययनानन्तरं पितृपितामहादिपरिगृहीत-शाखान्तराध्ययने संवृत्ते शाखान्तराध्ययनस्य सति सम्भवे समुचितत्वात् । अत एव मनुनापि कथितम्—

---

(१) वसिष्ठः— एकवेदऽपि शाखानां मध्ये योऽन्यतमां श्रयेत् ।
स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते ॥
यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥
आत्मशाखां परित्यज्य परशाखासु वर्तते ।
उच्छेता तस्य वंशस्य रौरवं नरकं व्रजेत् ॥
स्वीया शाखोज्झिता येन ब्रह्मतेजोऽर्थिनापरम् ।
ब्रह्महैव स विज्ञेयः सर्वकर्मसु गर्हितः ॥
सं० प्र० [पृ० ५०६], सं० र० मा० [पृ० ३०५]

वसिष्ठः—न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥
कात्यायनः—स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ।
कर्त्तुमिच्छति दुर्मधा मोघं तत्तस्य चेष्टितम् ॥
सं० प्र० [पृ० ५०६-७]

(२) म० स्मृ० [३/२]

(३) वसिष्ठः—यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ।
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ॥
सं० प्र० [पृ० ६०७]

वाराहे—स्वशाखां प्रथमं यस्तु पठित्वान्यं पठेद्यदि ।
प्रत्यक्षरं तु लभते गायत्र्या द्विगुणं फलम् ॥ सं०र०मा० [पृ० ३०५]

(४) सं० प्र० [पृ० ५०६]

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना[1] ॥ इति । अत्र प्रकाशकृतो वर्णयन्ति—'कृत्स्न इति वेदविशेषणं वेदशब्दस्य शाखापरत्वेन तस्या एव कृत्स्नत्वमभिवक्तुं[2]' इति । तत्तु न युक्तम् । असति विशेषानुशासने संकोचस्यानुचितत्वात् । अत एव मन्वर्थमुक्तावलीकृतापि 'समग्रवेदो मन्त्रब्राह्मणात्मकः सोपनिषत्कोऽध्यध्येतव्य.' इत्युक्तम् । अत एव च 'इच्छातस्त्वनेकवेदाध्ययनम्' इति मेधातिथिरपि प्राह ।

तच्चेदं वेदाध्ययनं साङ्गं विधेयम्, तैर्विना तदर्थज्ञानानुदयात् । अत एव श्रुतिः—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति । अत्रायं विशेषः—येषां गौतमादीनां[3] मते साङ्गस्य वेदत्वं तेषां वेदाध्ययनविधिनैवाङ्गानामप्यध्ययनं सिध्यति, येषां पुनर्बौधायनादीनां[4] मन्त्रब्राह्मणयोरेव वेदत्वं तेषां कृते ब्राह्मणेनेत्यादिरेवाङ्गविधिरिति ।

अत्र स्वाध्यायविधिविहितं वेदाध्ययनमर्थाववोधपर्यन्तं भट्टगुर्वादयो मन्यन्ते । सायणेन पुनरक्षरग्रहणान्तत्वमेव स्वाध्यायविधेर्मत्वा ब्राह्मणेनेत्यादिविधिनार्थज्ञानस्य विहितत्वं स्वीकृतम्[5] । तत्रानयोः पक्षयोर्मध्ये पूर्वमतमेव स्मृतिकारादिसम्मतम् । अत एव पराशरेण[6], लघुव्यासेन[7]

(१) म० स्मृ० [२/१६५]

(२) सं० प्र० [पृ० ५०५]

(३) मन्त्रब्राह्मणयोर्वेदः षडङ्गमेके—गौ० ध०

(४) मन्त्रब्राह्मणं वेद इत्याचक्षते ॥ बौ० गृ० [३/२/६३]

(५) ऋ० वे० भा० भू० [पृ० ४३]

(६) ज्ञातव्यः सर्ववेदार्थो वेदानां कर्मसिद्धये ।
पाठमात्रमधीते यः पङ्के गौरिव सीदति ॥
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव हि ।
अजानतोऽर्थं तद् व्यर्थं तुषाणां कण्डनं यथा ॥
पाठमात्ररतान्नित्यं द्विजांश्चार्थविवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ सं० प्र० [पृ० ५०७-८]

(७) न वेदपाठमात्रेण सन्तोषं कारयेद् द्विजः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारहारी न तस्य लभते फलम् ।
द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥ सं० प्र० [पृ० ५०८]

निरुक्तादौ[1] चार्थज्ञानस्य भूयोभूयः प्रशंसनम् कृतम्। मनूक्तस्य वेदाभ्यासस्याप्ययमेवार्थः[2], अभ्यासस्यार्थज्ञाननियतत्वावगमात्[3]।

स चायं वेदारम्भः विद्यारम्भप्रसङ्गोदिते शुभसमये मातृपूजनाभ्युदयिकश्राद्धानन्तरं गुरुणाऽग्निस्थापनपूर्वकं कारयितव्यः। अग्नेः पश्चिमतो हि शिष्य उपविशेत् गुर्वनुज्ञातः। ततश्च सर्वप्रायश्चित्तादिहोमः। तदनन्तरं ऋग्वेदपिपठिषुणा अग्नये पृथिव्यै चाज्याहुतिद्वयं, यजुःपाठिना चान्तरिक्षवायुभ्याम्, सामवेदाध्यायिना द्युसूर्याभ्याम्, अथर्ववेदाध्यायिना च दिक्चन्द्राभ्यां देयम्। सर्वारम्भे सर्वेभ्यो युगपदेवाज्याहुतीः दद्यात्। ब्रह्मछन्दः प्रजापतिभ्योऽपि आज्याहुतीः दद्यात्। अन्ते च दक्षिणामधिगत्याचार्यो वेदमध्यापयेत्[4]। अत्राध्येतुः विषये मनूक्तं स्मर्त्तव्यम्—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः॥
अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।
'अधीष्व भोः' इति ब्रूयाद्विरामोऽस्त्विति चारभेत्॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
क्षरत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति"[5]॥ इति।

अध्यापकश्चात्र ब्राह्मण एव नेतरः[6]। क्षत्रियोऽपि क्षत्रियवैश्ययोः, वैश्यो

---

(१) स्थाणुरयं भारहारः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥
यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैन्धो न तज्ज्वलति कर्हिचित्॥ निरुक्तम्॥ [१/१८]

(२) वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥

(३) दक्षः—वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः।
तद्दानं चैव विप्रेभ्यो वेदाभ्यासो हि पञ्चधा॥ सं० र० मा० [पृ० ३०४]

(४) गर्गपद्धतिः।

(५) म० स्मृ० [२ ७०, ७२-७४]

(६) अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः।
प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निश्चयः॥ म० स्मृ० [१०/१]
शंखः—एतानि ब्राह्मणोऽधिकुरुते, स च दर्शयतीतरेषाम्। सं०प्र० [पृ० ५१२-१३]

वैश्यमात्रस्य । ब्राह्मणः पुनस्त्रयाणामपि वर्णानामध्यापनेऽधिकृतः[१]। परन्तु क्षत्रियादिभ्योऽपि ब्राह्मणादध्ययनमेव मुख्यम्, क्षत्रियादिभ्यस्तु आपत्काल एवेति धर्मशास्त्रसिद्धान्तः।

अध्यापकश्च वेदस्य द्विविधः—आचार्य उपाध्यायश्च । तत्राचार्यः—

उपनीय तु यः शिष्यं शिक्षयेच्छौचमादितः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते[२]॥ इति मनूक्तः।

उपाध्यायोऽपि तदुक्त एव—

एकदेशं तु वेदस्य वेदाङ्गान्यथवा पुनः।
योऽध्यापयति वृत्यर्थमुपाध्यायः स उच्यते[३]॥

आभ्यामतिरिक्तः पिता एकोऽध्यापको गुरुपदवाच्यः[४]।

वेदाध्यापको हि नित्यकृत्यं विधिवत्समाप्यैवाध्यापयेत्[५]। न कदापि शय्यारूढ अध्यापयेत्[६]। यदि शिष्यः कदाचिदुल्लंघयेत् तदाज्ञां तर्हि रज्ज्वा वंशदण्डेन वा ताडनीयोऽपि सः[७]। परन्तूत्तमाङ्गे ताडनं प्रतिषिद्धम्[८]।

---

(१) पालकाप्यसंहितायाम् –

ब्राह्मणस्त्वथवर्णांस्त्रीन् अध्यापयितुमर्हति ।
द्वौ क्षत्रियस्तथा वैश्य एकमध्यापयेत् सदा ॥
गुणवत्स्वपि शूद्रेषु मा बुधं कर्त्तुमर्हति ।
एषा ह्यनुपमा विद्या वेदवेदाङ्गसम्मिता ॥ सं० प्र० [पृ० ५१३]

(२) अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या तु शुश्रूषा यावदध्ययनं गुरोः ॥ म० स्मृ० [२/२४१]

(३) म० स्मृ० [२/१४०-४१]

(४) निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ स्मृ० [१/१४२]
पितुरेवायं गुरुत्वापदेशः—
मन्वर्थमुक्तावली ।

(५) यमः—सततं प्रातरुत्थाय दन्तधावनपूर्वकम् ।
स्नात्वा हुत्वाथ शिष्येभ्यः कुर्यादध्यापनंततः ॥ सं० प्र० [पृ० ५१४]

(६) शयनाच्चाध्यापनं वर्जयेत्—आप० ध० [१/१/११]

(७) भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताडयाः स्यू रज्ज्वा वेणुदलेन वा ॥

(८) पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम् ॥ म०स्मृ०[८/२९९-३००]

एतावता सर्वेणेदमेव सिध्यति यत् शिष्यशिक्षकाभ्यां यथायथमाचार-परिपालनं कुर्वद्भ्यामेवाध्ययनाध्यापने कार्ये । शिक्षकस्याचरणं हि शिष्य-शिक्षाजनकं यथा स्यात्तथाचरणीयं शिक्षकेण । शिष्योऽपि शिक्षकेण सह सर्वदैव सम्मानपरिष्कृतं व्यवहारं नम्रः सन् कुर्यात् । एतेन गुरुशिष्ययोरानुकूल्येना-ध्ययनादिकार्यं क्रियमाणं शीघ्रं सफलं भवति । इतरथा तु फलाभावः । अत एवाह मनुः—

धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा ।
तत्र विद्या न वक्तव्या उप्तं बीजमिवोषरे[1] ॥ इति ।

याज्ञवल्क्योऽप्याह—

कृतज्ञाद्रोहिमेधाविशुचिकल्पानुसूयकाः ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः[2] ॥ इति ।

श्रुतिरपि[3]—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकानृजवेऽयताय न मां ब्रूया वीर्यवती तथास्याम् ॥ इति ।
यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्च नाह तस्मै मां ब्रूया निधिपाय ब्रह्मन् ॥
। इति च ।

---

(१) म० स्मृ० [२/११२]
(२) या० स्मृ० [१/२८]
(३) एताः श्रुतयः चतस्रः उदाहृताः शाखान्तरगता यास्केन निरुक्ते [२/४]

# (१३) केशान्तः (गोदानम्)

केशस्य श्मश्रु प्रभृतेः अन्तः यत्र तत् कर्मेति अन्वर्थमिदमपि नामधेयं संस्कारस्य। केशानां श्मश्रु कूर्चयोश्चात्र वपनं करणीयं भवति[1]।

केशान्तश्च गोदानमित्यस्यैव नामान्तरम्। गोदानं चैतदुच्यते यतोऽत्र कर्मणि आचार्याय गोदानं क्रियते[2]।

अयं च संस्कारो गौतमेन न पृथगुक्तोऽपि तु वेदव्रतानां मध्ये एव परिगणितः। चत्वारि हि वेदव्रतानि—महानाम्नी, महाव्रतम्, उपनिषत्, गोदानम्[3] इति च। गृह्यान्तरे पुनः गोभिलेन[4], द्राह्यायणेन[5], पारस्करेण[6], जैमिनिना[7], आश्वलायनेन[8], आपस्तम्बेन[9], बोधायनेन[10] च पृथगुक्तमेतत्। अतो ज्ञायते यत् इदं कर्म तदैव संस्कारत्वमाप्तवत् यदा अन्येषां वेदव्रतानां समनुष्ठानं शिथिलं संवृत्तम्। अन्येषां वेदव्रतानां ह्रासेऽपि गोदानस्य तथाभावाऽभावोऽस्य शरीरसंस्कार्यत्वेनाधिकोपयोगित्वानुभवादिति[11]।

---

(१) केशश्मश्रिवति च केशान्ते॥ पा० गृ० [१/२४/७]
प्रतिपत्तौ सर्वान् केशान् वापयति॥ बौ० गृ० [३/२/५५]

(२) गां केशान्ते॥ पा० गृ० सू० [१/२४/२३]
गामत्र गुरवे वरं ददाति॥ बौ० गृ० [३/२/५६]
गोमिथुनं दक्षिणा। आश्व० गृ० [१/१८/८]

(३) प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम्।
तृतीयं स्यादुपनिषत् गोदानाख्यं ततः परम्॥
आश्वलायनः, सं० म० [पृ० ६३]

(४) अथातः षोडशे वर्षे गोदानम्॥ गा० गृ० [३/१/१]

(५) गोदाने चौलवद्विकल्पः॥ द्रा० गृ० [२/५/१[

(६) षोडशवर्षस्य केशान्तः॥ पा० गृ० [१/२४/३]

(७) गोदानिकव्रातिकौपनिषदाः—जै० गृ० [१/१६]

(८) एतेन गोदानम्—आश्व० गृ० [१/१८/१]

(९) एवं गोदानम्—आप० गृ० [६/१६/१२]

(१०) षोडशे वर्षे गोदानम्। बौ० गृ० [३/२/५२]

(११) हिन्दू-संस्कार [पृ० १८४]

**गोदानकर्मकाल :—**

अयं च संस्कारो ब्राह्मणस्य षोडशे वर्षे क्षत्रियस्य द्वाविंशे वैश्यस्य चतुर्विंशे वर्षे इति मनुः[१]। अत्र विज्ञानेश्वरस्तु प्राह[२]—'एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यम्। इतरस्मिन् पक्षे यथासम्भवं द्रष्टव्यम्। राजन्यवैश्ययोस्तु उपनयनकालवत् द्वाविंशे चतुर्विंशे वा द्रष्टव्यम्' इति। तथा च यदि ब्रह्मवर्चसकामस्य विप्रस्य पञ्चमे वर्षे एवोपनयनम् तदा एकादशवार्षिकम् क्षत्रियवैश्ययोः षोडशवार्षिकम् इति। आपत्कल्पे उपनयनकालातिपत्तौ सर्वेषां न्यूनतरमिति। एवम् "नाचरिष्यन्ते संवत्सरमुपनयेत्[३]" इति वचनसामर्थ्यात् यत उपनीतस्योर्ध्वं संवत्सरादर्वागपि षोडशवर्षाद् ब्राह्मणस्य गोदानं प्राप्नोति। अतो नावश्यकत्वेनाष्टवार्षिकव्रतधारणकालो नियम्यते। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम्। एवं सामर्थ्याद्विकल्पः। कथं नाम ? आपत्कालेऽपि यदि षोडशे वर्षे उपनयनं स्यात् तथापि संवत्सरमप्युपनयनव्रतधारणं कृत्वा सप्तदशे गोदानं कुर्यात्। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम्[४]।

परन्तु पारस्करेण 'षोडशवर्षस्य केशान्तः[५]' इत्युपदेशात् षोडशवर्षाव्यतीतानि यस्य[६] तस्य सप्तदशे वर्षे केशान्त इति प्रतिपादितम् तत्तु न सर्ववर्णविषयम् न वा नियमः। यद्वा तच्छाखानुसारिणां ब्राह्मणानां नियम एवायमस्तु। बौधायनादयस्तु षोडश एव वर्षे गोदानमिच्छन्ति। गोभिलव्याख्यायां तर्कालङ्कारास्तु वदन्ति—यस्मात् 'योऽनधीत्य द्विजो वेदम्[७]' इत्येवमादिस्मरणात् वेदाध्ययनमवश्यं कर्त्तव्यम्। यस्माच्च तपोविशेषैरित्यादिवचनात् व्रताचरणपूर्वकत्वं तदध्ययनस्य तस्मादेव कारणात् षोडशे वर्षे गोदानं नाम व्रतं कार्यम्। गावः केशा दीयन्ते खण्डचन्तेऽस्मिन्निति गोदानमिति व्रतस्य नामधेयम्। ततश्चेतः पूर्वमुपात्तस्योपनयनव्रतस्यायमवधिरित्यवगम्यते। एवञ्च ब्राह्मणस्याष्टवार्षिकमुपनयनव्रतं भवति, क्षत्रियस्यैकादशवार्षिकम्, वैशस्य द्वादशवार्षिकमिति सिध्यति। ब्रह्मवर्चसकामस्यैतस्मिश्च पक्षे

---

(१) केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥ म० स्मृ० [२/६५]

(२) या० स्मृ० मिताक्षरा [१/३६]

(३) गो० गृ० [३/१/११]

(४) गो० गृ० ना० भा० [३/१/१]

(५) पा० गृ० [१/२४/३]

(६) पा० गृ० ह० ग० भा० [१/२४/३]

(७) म० स्मृ० [२/१६८]

ब्राह्मणस्यैकादशवार्षिकम्, क्षत्रियवैश्ययोश्च षोडशवार्षिकमुपनयनव्रतम् । उपनयनकालातिपाते तु सर्वेषां न्यूनतरमपि इत्यवगन्तव्यम् । न्यूनतरपक्षेऽप्यन्ततोऽष्टौ दिनानि तत् करणीयम, 'समा मासा अहोरात्राः' इति गृह्यसंग्रहवचनात् । तथा च पुरुषशक्तिशीलदेशकालवयोऽवस्थाविशेषेण कालव्यवस्था प्रतिपत्तव्येति ।

इदं च कर्म समावर्त्तनात्पूर्वमेव कर्तव्यम्[1] । नक्षत्रादिनियमश्चात्र सर्वो बोध्यश्चूडाकरणवत्[2] । अत एव पारस्करेणापि कर्मेदं चूडाकरणप्रसङ्गे एव निर्दिष्टम् । एतच्चावश्यमेव करणीयम्, अकरणे प्रत्यवायोपदेशात्[3] । प्रायश्चित्तं चात्राह शौनकः कृच्छ्रव्रतम्, शतमाज्याहुतीः, गायत्र्याचान्ते स्नानम्[4] ।

देवलश्चापि सममेव प्रायश्चित्तं प्राह—

कालातिक्रमणे कुर्यात् प्रायश्चित्तं विधानतः ।
कृच्छ्रं द्वादशरात्रं तु हुत्वा चाज्याहुतीः शतम् ।।
अष्टाविंशतिमष्टौ वा क्रमात् कुर्याद्व्रतानि हि ।
व्यत्यये यावदभ्यस्तं वेदं तावत् पुनः पठेत्[5] ।। इति ।

---

(१) व्यासः—गोदानिकं ततः कृत्वा समावर्त्तनमाचरेत् ।।
सं० प्र० [पृ० ५७०]

(२) चूडाकरणेन केशान्तकरणं व्याख्यातम् ।। गो० गृ० [३/१/२]
श्रीधरीये—तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।
चौलवत् सर्वमाख्यातं सगोदानव्रतेषु च । सं०म० [पृ० ६३]

(३) शौनकः—व्रतानि विधिवत् कृत्वा स्वशाखाध्ययनं चरेत् ।
अकृत्वाऽभ्यस्यते येन स पापी विधिघातकः ।।
व्यासः—वेदव्रतानि कृत्वैवं तथैवारण्यकव्रतम् ।
स्वशाखाविहितं सर्वं कृत्वा वेदमुपक्रमेत् ।।
अकृत्वेमानि सर्वाणि वेदा ह्यभ्यस्यते यदि ।
प्रायश्चित्तानि कृत्वैव व्रतान्यपि तथा क्रमात् ।।

(४) शौनकः—प्रत्येकं कृच्छ्रमेकैकं चरित्वाज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ।।

(५) सं० प्र० पृ० ५७०, अत्र पूर्वसंकेतितशौनकवाक्ये प्रायश्चित्ते समानकर्तृकत्वश्रवणात् वटोरेव प्रायश्चित्तकर्तृत्वम्? यदि तु वटुरशक्तस्तर्हि पित्रादिकस्यापीत्याहात्रिः—
पिता भ्राताऽपरो वापि प्राजापत्यत्रयं चरेत् ।। इति ।।
सं० म० [पृ० ६३-६४]

**दक्षिणा—**

अत्र च कर्मणि गौरेव दक्षिणेति बौधायन[१]पारस्करौ[२]। गोमिथुनं दक्षिणेति आश्वलायनप्रभृतयः[३]। गोभिलस्तु प्राह—गोमिथुनं दक्षिणा ब्राह्मणस्य, अश्वमिथुनं क्षत्रियस्य, अविमिथुनं वैश्यस्य इत्यभिधाय 'गौरेव सर्वेषाम्'[४] इति। एतदेव द्राह्यायणगृह्यसूत्रेऽप्युक्तम्। अत्र गोमिथुनम् इत्यादेः गौर्वृषश्चेत्यादिरर्थः। इयं च दक्षिणा भिक्षित्वाऽपि देयैव[५]।

अत्र कर्मणि नापितायापि दक्षिणा देयैव। सा च अज एवेति 'अजः केशप्रतिग्राहाय'[६] इति गोभिलद्राह्यायणगृह्यसूत्राभ्यामवगम्यते। केशप्रतिग्राहः वपनकर्त्ता नापितः।

तदेव गुरुदक्षिणां समर्प्य गुर्वनुज्ञातो वत्सरं व्रतं वटुः कुर्यादिति[७]॥

---

(१) गामत्र गुरवे वरं ददाति॥ बौ० गृ० [३/२/५६]

(२) गां केशान्ते॥ पा० गृ० [१/२४/२३]

(३) गोमिथुनं दक्षिणा॥ आश्व० गृ० [१/१८/८]
गोवृषौ गुरवे दिशेत्॥ शौनकः॥ सं०प्र० [पृ०५६६]

(४) गो०गृ० [३/१/५-६]

(५) असम्भवे गोवृषयोर्भिक्षित्वा वा गुरोर्दिशेत्॥ शौनकः॥ सं०प्र० [पृ०५६६]

(६) गो० गृ० [३/१/७]

(७) उत्तरेद्यु गुरुस्तस्य वत्सरं व्रतमादिशेत्॥ शौनकः॥ सं० प्र० [पृ० ५६६]

# (१४) समावर्त्तनम्

समावर्त्तनं नाम गुरुकुले वेदं वेदौ वेदान् वाऽधीत्य यथाविधि गुरुणाभ्यनुज्ञातस्य[1] गुरुकुलात् स्वगृहागमनम्। अत्र च स्नानस्य प्राधान्यात् तेनैवास्य कर्मणो व्यपदेशः 'स्नानम्' इति। इदं च स्नानं विद्यार्थिभ्यो दिव्यशक्तिदूरीकरणमिति केचन[2] मन्यन्ते। इयं च दिव्या शक्तिः ब्रह्मचर्यानुष्ठानप्रयुक्तैव।

इद च कर्म वेदाध्ययनानन्तरं गुरवे दक्षिणां दत्वा गुरुणा समनुज्ञातः सन् कुर्यात् इत्येकः पक्षः। अयमेव 'विद्यास्नातकः' इत्युच्यते। वेदव्रतानि समाप्य वेदाध्ययने पर्यवसित एव गुरुणाभ्यनुज्ञातः सन् कुर्यात् इत्यपरः पक्षः। एवं विध एव 'व्रतस्नातकः' कथ्यते। वेदव्रतानि चत्वारि वेदाध्ययनं च सम्यक् समाप्य गुरुणाऽनुमतः सन् समावर्त्तयेदिति तृतीयः पक्षः। एतादृशो हि ब्रह्मचारी 'विद्याव्रतस्नातकः' इत्युच्यते[3]। एषु चोत्तमस्तृय एवेति याज्ञवल्क्यादि[4]-

---

(१) वेदमधीत्य स्नास्यन्नित्युक्तं समावर्त्तनम्॥ बौ० गृ० [२/६/१]
वेदमधीत्य स्नास्यन्.........॥ आप० गृ० [५/१२ १]
वेदं समाप्यं स्नायात्॥ पा० गृ० [२/६/१]

(२) आर० एच० नसो—फैंटिसिज्म इन वेस्ट अफ्रीका। [पृ० २१२]

(३) त्रयः स्नातका भवन्ति—विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकः। समाप्य वेदमसमाप्य व्रतं यः समावर्त्तते स विद्यास्नातकः। समाप्य व्रतमसमाप्य वेदं यः समावर्त्तते स व्रतस्नातकः। उभयं समाप्य यः समावर्त्तते स विद्याव्रतस्नातक इति॥ पा० गृ० [२/५/३२-३५]

(४) गुरवे तु वरं दत्वा स्नायाद्वा तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥ या० स्मृ० [१/५१]
तत्रैते त्रयः स्नातका भवन्ति। विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति। तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ॥ गो० गृ० [३ ५/२१-२३]

शौनकः—अधीत्य वेदशास्त्राणि कृत्वा वेदव्रतानि च।
चत्वारि गुरवे दत्वा यथाशक्ति च दक्षिणाम्॥
ततस्तेनाभ्यनुज्ञातः समावर्त्तनमाचरेत्॥ सं० प्र० [पृ० ५७३]

संवादादवगम्यते, तर्काच्च। वेदाध्ययनं चात्र अर्थज्ञानपूर्वकमेव[1], न शब्दमात्रम्। अत एवाहुर्मीमांसाभाष्यकारा अपि[2]—'अतिक्रमिष्याम इममाम्नायमनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्मावबोधनं नाम। न च तस्याध्ययनमात्रात् तत्र भवन्तो याज्ञिकाः फलं समामनन्ति। यदपि च समामनन्तीव तत्रापि 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्'[3] इत्यर्थवादतां वक्ष्यति' इत्याद्याहुः। अत एव च 'न कल्पमात्रे'[4] इत्यनेन पारस्करस्करोऽप्येनमर्थम् समर्थयाम्बभूव। व्याख्यातं चैतत् कर्कोपाध्यायैः—'कल्पशब्देन च ग्रन्थमात्रमभिधीयते। न ग्रन्थमात्रेऽधिमते स्नायीत। न ह्येतावता तदनुष्ठानयोग्यता भवति। तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानम्' इति। अधिकं वेदारम्भ प्रसंग एवोक्तम्।

अत्रैव प्रसंगादिदमपीक्षितव्यम्—अध्येयस्य वेदस्य किमात्मकत्वम् इति। तत्र 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'[5] इत्यादि बौधायनाद्युक्तेः मन्त्रब्राह्मणात्मकमेव वेदमधीत्य स्नायात् इत्येकः पक्षः। अत्रैवारण्यकस्यापि समावेशः, तस्य स्वतन्त्रवेदभागत्वाभावात्। भद्रादिदशप्रश्नानामरण्येऽध्येतव्यत्वात् आरण्यक इति संज्ञा, न तु कश्चन पृथग्वेदभागोऽयम्। विज्ञानेश्वरोऽपि मन्त्रब्राह्मणात्मकमेव वेदमाम्नाति[6]। कुल्लूकादयोऽप्येवमेवाहुः[7]। अस्मिंश्च पक्षे ब्राह्मणशेषतयाऽर्थवादस्यापि संग्रहः, विधिशेषतया[8] वा। पारस्करेण तु 'विधिर्विधेयस्तर्कश्च वेदः' इत्येकः पक्षः 'षडङ्गमेके' इत्यपरः पक्षः उक्तः। तत्र 'विधिविधायकं ब्राह्मणम्, विधेया मन्त्राः, तर्कशब्देनार्थवादोऽभिधीयते'

---

(१) कूर्मपुराणम्—वेदं वेदौ तथा वेदान् वेदान् वा चतुरो द्विजः।
अधीत्य चाधिगम्यार्थं ततः स्नायाद् द्विजोत्तमः॥
सं० प्र० [पृ० ६५-६६]

(लघुव्यासः—ऋचं पादमधीत्वातो न्यायतस्तु तदर्थवित्।
सम्यग् व्रतानि संसेव्य समावर्त्तनमर्हति॥ सं० प्र० [पृ० ५७३]

(२) शा० भा० [१/१/१]
(३) मी० द० [४/३/१]
(४) बौ० गृ० [२/६/३], आप० परि० [१/३३]
(५) पा० गृ० [२/६/७]
(६) मिताक्षरा [१/५१]
(७) म० स्मृ० [३/२]
(८) विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः॥ मी० द० [१/२/७]

इति कर्कोपाऽध्यायाः। जयरामोऽप्येवम्। 'च' शब्देन च नामधेयसंग्रह इति हरिहरः। एतन्निषेधस्याप्युपलक्षणम्, न हि तेन किमप्यपराद्धम् येन विधि-मन्त्रार्थवादनामधेयानां वेदत्वम् न पुनर्निषेधस्य तत्त्वं स्यात्। अत एव मीमांसकानां पञ्चधा वेदविभाग उपपद्यते[1]। तर्कः कल्पसूत्रमिति भर्तृयज्ञः[2]। मीमांसेति कल्पतरुः[3]। एतच्चार्थावबोधपर्यन्तमध्ययनं ऋते मीमांसाया न सम्भवनीतिध्यात्वोक्तम्।

अपरस्य पक्षस्य षडङ्गवेदाध्ययनस्य विषये वेदारम्भप्रसंगे कथित-मेवापस्तम्बादिसंवादेन।

एतच्च समावर्त्तनं गुरवे दक्षिणां दत्त्वैव कार्यम्। यथाह याज्ञवल्क्यः—'गुरवे तु वरं दत्वा[4] स्नायाद्वा तदनुज्ञया' इति। आश्वलायनोऽपि—

चरित्वा चतुरो वेदान् द्वौ चैकमथापि वा।
तोषयेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षणः[5]॥ इति।

दक्षिणा-स्वरूपं च मनुनोक्तमेव—

स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।
धान्यं शाकं च वासांसि गुरवे प्रीतिमावहेत्[6]॥ इति॥

गुरवे प्रीतिमावहेरित्यनेन गुरुप्रीतिकरमन्यदपि अन्यदेव वा मणिमुक्ताप्रवा-लादि[6] देयम् दक्षिणारूपेणेत्येकं तात्पर्यमुच्यते। इतरत्तु अनुपदमेव वक्ष्यते। दक्षिणां च यदि स्वतो दातुमसमर्थस्तर्हि अन्यतोऽपि याचित्वा दद्यादेव गुरुणा तथानुज्ञप्तः सन् शिष्यः[8]। अत्र प्रसंगे वरतन्तुशिष्यस्य कौत्सस्य कथा स्मृति-

---

(१) अत्र 'चकारान्नामधेयभागसंग्रहः। यतो वेदो विध्यर्थवादमन्त्रनामधेयैश्च-तुर्धा मीमांसकैर्विचार्यते' इति हरिहरव्याख्यानं तु न युक्तम्, मीमांसकै-र्निषेधस्यापि वेदत्वाभिधानात्।

(२) पा० गृ० ग० भा० [२/६]

(३) पा० गृ० हृ० भा०, ग० भा० [२/६]

(४) या० स्मृ० [१/५१]

(५) सं० प्र० [पृ० ५७३]

(६) म० स्मृ० [२/२४५-४६], गौतमादयोऽप्याहुः—
विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञानस्य स्ननाम्॥ गौ० ध०

(७) म० मे० भा० [२/२४६]

(८) आश्वलायनः—धनं पित्रादिबन्धुभ्यः समाहृत्यापि वा परात्।
राजन्यो वा गुरुं सम्यक्तोषयेत् स्नातको व्रती॥
सं० प्र० [पृ० ५७३]

पथमायात्येव[1]। यदि तूक्ता दक्षिणा न सम्भवति तदा गौरेव दक्षिणा देयेति धर्मशास्त्रम्। गुरवे तु वरं देयम् दक्षिणारूपेण। वरश्च गौरेव, 'गौर्वा वरः' इति श्रुतेः। व्यासोऽप्येनमर्थं समर्थयति—

गुरुशुश्रूषया विद्यां समाप्य विधिवद्द्विजः॥
स्नायीत गुर्वनुज्ञातो दत्वास्तै दक्षिणां तु गाम्[2]॥ इति।

इयं च दक्षिणा गुरुतोषार्थमेव न तु विद्यानिष्क्रयः। न हि विद्याया मूल्यमस्ति। यथाह छान्दोग्यश्रुतिः—'यद्यप्यस्मा इलामद्भिः परिगृहीतां धनेन पूर्णां दद्यादेतदेव तदेव भूयः'[3] इति। नृसिंहतापनीयोपनिषद्यपि—

"सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते"[4] इति।

अत एव हारीतोऽप्याह—

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।
पृथिव्यां नास्ति तद् द्रव्यं यद्दत्वा चानृणी भवेत्[5]॥ इति।

एतावता दक्षिणाया गुरुतोषार्थकत्वे सिद्धे यदि गुरुरन्तरापि काञ्चिद्दक्षिणां प्रसीदेत्तदा दक्षिणामदत्वैव तस्मै तेनाभ्यनुज्ञातः स्वगृहमागत्य स्नानं कुर्यात् इति लभ्यते। इदमेव द्वितीयं तात्पर्यं 'प्रीत्यर्थमावहेत्' इति मनूक्तेः। अत एवोक्तं सग्रहे—

आहरिष्यामि किं तेऽर्थं भवतो वचनादिह।
त्वयोक्तं हि करिष्यामि कृतार्थः स्यां गृहेण तु॥
तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत्।
अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः॥
गृहान् गच्छानुजानामीत्यनुज्ञातोऽथवा चरेत्[6]॥ इति॥

एतच्च दक्षिणादानमन्यथा वा गुरुतोषणं समावर्त्तनात् (=अध्ययनादिसमाप्त्यनन्तरकालिकस्वगृहागमनात् पूर्वं क्रियमाणां समयोक्षितमुपकुर्वाणस्यैव ब्रह्मचारिणः, न पुनरन्यस्य नैष्ठिकपदाभिलप्यस्य, तस्यैतादृशस्नाना (=समा-

---

(१) रघुवंशस्य पञ्चमः सर्गः।
(२) सं॰ प्र॰ [पृ॰ ५७४]
(३) सं॰ म॰ प्र॰ [६६], सं॰ र॰ मा॰ [पृ॰ ३६६]
(४) सं॰ र॰ मा॰ [पृ॰ ३६९], सं॰ प्र॰ [पृ॰ ५७४]
(५) मन्वर्थमुक्तावली [२/२४६]
(६) सं॰ म॰ [पृ॰ ६५], सं॰ र॰ मा॰ [पृ॰ ३६६]

वर्त्तना)सम्भवात्। नैष्ठिकस्य सर्वदैव जीवनपर्यन्तं गुरुशुश्रूषायाम्,[१] अथवा तदभावे जाते गुरुपुत्रस्य, तस्याप्यभावे सम्भवे सत्यपि वा गुरुकुलवासिनैव भाव्यम्। एतेनैव प्रकारेणानुतिष्ठन् सः निरपायसंश्रयां ब्रह्मभूमिं शरीरसम्पाते संवृत्ते समध्यास्ते[२]। अतः सिद्धं यदेतद्दक्षिणादानादि न केवलं स्नानार्थमेवापितु आश्रमान्तरपरिग्रहार्थमपीति। अत एव नरसिंहपुराणे निगदितम्—

गुरवे दक्षिणां दत्वा स यमिच्छेत्तमावसेत्।
विरक्तः प्रव्रजेद्विद्वान् सरागस्तु गृहे वसेत्[३] ॥ इति।

समावर्त्तनात् पूर्वमुपकल्पनीयानि द्रव्याण्याश्वलायनेनोक्तानि—

'अथैतान्युपकल्पयीत समावर्त्यमानो मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमञ्जनमुष्णीषमित्यात्मने चाचार्याय च। यद्युभयोर्न विन्देत तदा चार्यायैव"[४] इति। स्मृतावपि तस्यायं विषय उपलभ्यते[५]। शौनकोऽप्येनमर्थं[६] प्रतिपादयति। तत्राचार्यस्याभ्यर्हितत्वात् तस्यैव सर्वमभावे द्वयस्य सर्वोपकरणानामित्युचितमेव।

इदं च समावर्त्तनम् विवाहार्थमेव, नाश्रमान्तरपरिग्रहार्थम्—

गुरुणानुमतः स्नात्वा समावृत्तो यथाक्रमम्।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्[७] ॥

---

(१) यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥
आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः पदमव्ययम् ॥ म० स्मृ० [२/२४३-४४]

(२) नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥
अनेन विधिना देहं सादयन् विजितेन्द्रियः।
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥ या० स्मृ० [१/४९-५०]

(३) सं० प्र० [पृ० ५७४]

(४) आश्व० गृ० [३/८/१]

(५) आत्मने गुरवे च स्यादलाभे गुरवेऽपि वा।
मण्याद्युष्णीषपर्यन्तद्रव्याणामुपकल्पनम् ॥ सं० प्र० [पृ० ५७६]

(६) स समावर्त्तमानस्तु पूर्वमेवोपकल्पयेत्।
मण्याद्युष्णीषपर्यन्तान् सम्भारान् सकलानपि ॥ सं० प्र० [पृ० ५७६]

(७) म० स्मृ० [३/४]

इत्यनेन मनुना समावर्त्तनस्य विवाहकर्तृद्विजविशेषणत्वेनोपादानात्। न च तदाश्रमान्तरकर्तृविशेषणत्वेन श्रूयते, समावृत्तो वनं प्रव्रजेत् इत्यादिविध्यभावात्। प्रत्युत ब्रह्मचर्यादेव प्रव्रजेदित्याकारक एव विधिर्जाबालोपनिषदि श्रूयते। अत एव च समावर्त्तनोपदेशात् पूर्वमेव गोभिलेनापि 'दारान्[1] कुर्वीत' इत्युक्तम्। व्याख्यातं च तद्भाष्यकृता दारान् कुर्वीतेत्यत्र कन्याप्रार्थनमेव विधीयते न विवाहः। कुतः? स्नानोत्तरकालभावित्वाद्विवाहस्य। तथा च मनुः—'गुरुणानुमतः' इत्यादि। यद्येवं तर्हि "कस्माद्विपर्ययेणोपन्यासः? उच्यते—प्राक् स्नानात् कन्याप्रार्थनाविधानार्थं विपर्ययः क्रियते। इतरथाऽनुपलभ्यैव कन्यां स्नानं कुर्वतः किञ्चित् कालमनाश्रमित्वमस्य स्यात्, तदनिष्टम्। उक्तञ्च—

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते द्विजः[2]॥ इति।

'नाव्रतो ब्राह्मणः स्यात्' इति च। तस्माद् व्रतस्थ एव कन्यां प्रार्थयित्वा विवाहसन्निधौ यत् पुण्यमहस्तत्र स्नात्वा दारान् कुर्वीत" इति। तस्माद्विवाहार्थमेव समावर्त्तनमित्युपपन्नम्। अत एव चेदमप्युपपन्नं भवति—आसमावर्त्तनं ब्रह्मचर्यमिति॥

## अथ समावर्त्तनकालः—

समावर्त्तनं तूदगयने—शुक्ले पक्षे[3] कार्यम्। किन्तु यदि 'सर्वऋतवो विवाहस्य' इति सूत्रात् दक्षिणायने विवाहस्तर्हि समावर्त्तनमपि तत्रैव कार्यम्। अन्यथा उदगयने समावर्त्तने 'अनाश्रमी न तिष्ठेत' इति वचनविरोधः स्यादित्युक्तं सुदर्शनभाष्ये[4]। दीक्षितास्तु समावर्त्तनमत्रापि पक्षे उदगयन एव, व्यवधानन्तु मातापित्रनुज्ञाप्रयुक्तं सूत्रकृतोऽनुमतमेव। अन्यथा हि—

वैश्वदेवं गृहस्थस्य प्रातरारम्भणं भवेत्।
स्नातकेनापि तत् कार्यं पृथक्पाको भवेद्यदि॥ इति वैश्यदेव-

---

(१) गो० गृ० [३/४/२]
(२) द० स्मृ० [१/१०] (दक्षसंहितायाम्)
(३) अथोत्तरायणे शुक्रजीवयोर्दृश्यमानयोः।
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम्॥
अस्याग्रे 'समावर्त्तनमण्डनम्' इति शेषेण सम्बन्धः। सं० प्र० [पृ० ५७६]
(४) नि० सि० [पृ० ५६९]

प्रकरणे प्रयोगपारिजातधृतशौनकवचने गृहस्थस्नातकत्वरूपावस्थाद्वयप्रदर्शनस्य निरर्थकत्वापत्तेः। बहूनां स्नातकधर्माणां स्मृतिषु प्रदर्शनस्य स्वतन्त्रनक्षत्रादिकालविधानस्य च वैयर्थ्यापत्तेः।

'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः'

इति निषेधस्तु अविरागिणो विवाहनिवृत्तिनिषेधपरः। मातापित्रनुज्ञायां सत्यामसति विरागे विवाहः कर्तव्य एव न तु विवाहान्निवर्त्तेत इति। उक्तं चैतच्छ्रुत्या—"आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इत्यनया। मातापित्रनुज्ञा तु "समावृत्त आचार्यकुलान्मातापितरौ विभृयात्ताभ्यामनुज्ञातो भार्यामुपयच्छेत्" इत्यनेन सूत्रेणोक्ता। अत एवास्मात् सूत्रात् व्यवधानासिद्धेः समावर्त्तनविवाहयोरव्यवधानं दूरापास्तमेवेति मन्यन्ते[१]।

तिथयश्चात्र रिक्ताछिद्रातिरिक्ता[२] ग्राह्याः। प्रतिपत्पर्वाष्टमीरिक्तेति[३] तात्पर्यम।

वाराश्च रविसोमबुधगुरुशुक्राणामिति[४] श्रीधरः। भौमभानुजयोरिति तु सुरेश्वरः[५]। एतन्नयुक्तम्, शुभग्रहस्य वारे[६] समावर्त्तनमिति वसिष्ठोक्तेः।

नक्षत्राणि चात्र उत्तरात्रयम्, अनुराधा, मृगशिरः, पुनर्वसुः, पुष्यः, रोहिणी, हस्तः, श्रवणः, रेवती चेति[७]। वौधायनेन तु—'रोहिण्यां तिष्य-

---

(१) सं० र० मा० [पृ० ३७१]

(२) देवरातः—विच्छिद्रासु विरिक्तासु तिथिषु स्नानमाचरेत्॥
सं० प्र० [पृ० ५७७]

(३) नारदः—प्रतिपत्पर्वरिक्ताख्या अष्टमीं च दिनक्षयम्।
हित्वान्यदिवसे कार्यं समावर्त्तनमण्डनम्॥
सं० र० मा० [पृ० ३७२]

(४) शशाङ्कभानुगुरुविच्छुक्रांशहोरादिषु—सं० र० मा० [पृ० ३७१]

(५) भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते।
ताराचन्द्रविशुद्धौ च स्यात् समावर्त्तनक्रिया॥ नि० सि० [पृ० ५६९]

(६) वसिष्ठः—शुभग्रहस्य वारे समावर्त्तनमिष्टमुक्तम्॥ सं० प्र० [पृ० ५७७]

(७) नृसिंहः—त्रीण्युत्तराणि मैत्रेन्दुरोहिण्यादित्यपुष्यभाः।
हस्तश्रवणपौष्णाश्च स्नानकर्मणि पूजिताः॥

वसिष्ठः—आदित्यसौम्यसावित्रं मैत्रतिष्योत्तरात्रयम्।
पौष्णश्रवणरोहिण्यः श्रेष्ठाः स्युः स्नानकर्मणि॥ सं० प्र० [पृ० ५७७]
आदित्यः पुनर्वसुः। इन्दुः सौम्यं च मृगशिरः। मैत्रमनुराधा। सावित्रं हस्तः। पौष्णं रेवती। इतरे प्रसिद्धाः एव।

उत्तरयोः फल्गुन्योः हस्ते चित्रायामैन्द्रे विशाखयोर्वा स्नायात्' इति। हिरण्यकेशिगृह्यसूत्रे तु—'रोहिण्यां मृगशिरसि तिष्य उत्तरयोः फल्गुन्योः हस्ते चित्रायां विशाखयोर्वैतेषु स्नायात्'[१] इत्युक्तम्। जैमिनिगृह्यसूत्रे तु[२]—'रोहिण्यां स्नायात्-प्रजापतेर्वा एतन्नक्षत्रम् प्रजावान् भूयासमिति, मृगशिरसि स्नायात्-सोमस्य वा एतन्नक्षत्रं सोमेज्या मोपनमेदिति, तिष्ये स्नायात्—बृहस्पतेर्वा एतन्नक्षत्रं ब्रह्म बृहस्पतिर्ब्रह्मवर्चसी भूयासम् हस्ते स्नायात्—सवितुर्वा एतन्नक्षत्रम् सवितृप्रसूतो भूयासमिति, अनुराधासु स्नायात्-मित्रस्य वा एतन्नक्षत्रं मित्राणां प्रियो भूयासमिति, श्रवणे स्नायात् विष्णोर्वा एतन्नक्षत्रं यज्ञो वै विष्णुर्यज्ञो मोपनमेदिति' इति निगदितम् फलविशेषवर्णनपूर्वकं नक्षत्रषट्कस्यैव पूज्यत्वम्। तत्रैवं सति शाखाभेदाद्विकल्पः इत्येका, गुणोपसंहारो वेत्यपरा व्यवस्था मन्तव्या।

अत्र राशिविषये देवरातः—

नक्रगोमयकन्याश्च तौलिमीनौ सुपूजिताः।
शुभयुक्तं यदि स्यात्तु शेषेषु स्नानमाचरेत्[३] ॥ इति ॥

योगादयश्चापि शुभा ज्ञेयाः।

एतच्च समावर्त्तनं कथं कार्यमित्यत्र सत्यपि शाखाभेदात् प्रयोगभेदे रोचकत्वाद्द्राह्यायणादिगृह्योपदिष्टो विधिस्तेषामेव शब्दैरुपस्थापयामः—

"आप्लवने[४]पुरस्तादाचार्यकुलस्य परिवृत आस्ते। (आप्लवनं स्नानम्) उदङ्मुख आचार्यः प्रागग्रेषु। एवं ब्रह्मवर्चसकामः। गोष्ठे पशुकामः, सभायां यशस्कामः सर्वौषधेनायः फाणयेत्। सुरभिभिश्च। ताभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत्। स्वयं वा मन्त्राभिवादात्" इति। अत्रोदुम्बरदण्डेन मुखप्रक्षालनम्—दन्तधावनमिति[५] पारस्करः। इदानीं वस्त्राद्यलङ्करणमपि परिदध्यादेव। दण्डधारणं च कुर्यात्। वैणवश्च[६] दण्डः। ततश्च मधुपर्को

(१) सं० र० मा० [पृ० ३७०-७१]
(२) जै० गृ० [१/१९]
(३) सं० प्र० [पृ० ५७८]
(४) द्रा० गृ० [३/१/१-९]
(५) पा० गृ० [२/६/१२]
(६) आश्व० गृ० [३/८/१५]

दीयते[1] स्नातकाय। तदनन्तरं च सुसज्जितः सन् गोरथं समारुह्य विदुष[2] उपसर्पेत्। आनक्षत्रोदयं मौनं वा सूर्यरश्मिभिरसम्पृक्त एव तिष्ठेत्। अतश्च प्रागुदग् वा गत्वा प्रदक्षिणीकृत्याचार्यमुपागच्छेत्[3]।

एवं विधिना स्नानमधिगतो हि स्नातकः[4] महतीं प्रतिष्ठामवाप्नोति। एतच्च स्नातकव्रतं ब्राह्मणक्षत्रिययोरेवेत्येकः पक्षः। अत एव—

स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम्।
राजब्राह्मणयोरेव नेतरेषां कथञ्चन ॥

इति स्मृतौ राजब्राह्मणयोरेव प्रायश्चित्तमुक्तं संगच्छते। अपरः पक्षस्तु मन्वादि-स्मृतिषु द्विजात्युपक्रमाद् ब्राह्मणक्षत्रियविशामिति[5]। अनयोरन्त्य एव श्रेयान्, उपनयनादौ त्रैवर्णिकाधिकारात् अत्रापि तथात्वस्यैव युक्तत्वात्। प्रायश्चित्तं चात्रैकाहोरात्रोपवासात्मकमेव मनुनातिदिष्टम्[6] ॥

तदेवं स्नातकत्वस्य परमप्रतिष्ठास्पदत्वं सिद्धम्। परमद्यत्वे यथैवान्येषां संस्काराणामुपेक्षा दृश्यते तथैव समावर्त्तनस्यापि। उपनयनदिने एव वेदा-रम्भसमावर्त्तने अप्यनुतिष्ठन्ति जनाः। क्वचिदेव दक्षिणदेशादौ यथाविध्य-नुष्ठानं प्रायेण श्रूयतेऽस्माभिः ॥

---

(१) पा० गृ० [१/३/१-२]
(२) आप० गृ० [१/११/५], आश्व० गृ० [३/१/१६], गो० गृ० [५/४/३०]
(३) गो० गृ० [३/४ ३२]
(४) महद् वै एतद् भूतं यत् स्नातकः ॥ आश्व० गृ० [३/६/८]
चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥
तेषां तु समवेतानां मान्यौ स्नातकपार्थिवौ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥
म० स्मृ० [२/१३८-३९]
(५) सं० प्र० [पृ० ५७९]
(६) वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ म० स्मृ० [११/२०३]
अभोजनम्=एकाहोपवासात्मकं प्रायश्चित्तमित्याशयः।

## (१५) विवाहः

अयं हि समावर्त्तनोत्तरकालिकः संस्कारः। समावर्त्तनान्तं च ब्रह्मचर्यमिति शास्त्रात् इत एव ब्रह्मचर्यस्य समाप्तिः पारिभाषिकरूपेण।

तत्रायं विवाहशब्दः वहधातोः प्रापणार्थकात् भावे घञ्प्रत्यये आदिवृद्धौ सत्यां निष्पन्नः। तथा च वहनमेव वाहः। विशिष्टो वाहो विवाहः। वैशिष्ट्यं चात्र प्रतिग्रहाद्यष्टविधोपायान्यतमोपायेन स्वीकृतायां होमादिसप्तपद्यतकर्मसंस्कृतत्वमेव। तथा च विवाहपदार्थेऽशद्वयं प्रसिध्यति—स्वीकरणं स्वत्वोत्पादनम्, संस्काराधानं चेति। अत एव परिशिष्टे—

गान्धर्वासुरपैशाचाविवाहा राक्षसाश्च ये।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते[१]॥ इत्यनेनोभयं

विवाहकृत्यमिति सुस्पष्टमेवोक्तम्। तथा च स्वीकृताऽप्यसंस्कृता संस्कृताऽपि पूर्वमस्वीकृता वा स्त्री न भार्या इति न तस्याः सहधर्मिणीत्वम्, विशिष्टस्यैव विवाहपदार्थत्वेन अन्यतराभावेऽप्युभयाभावसत्त्वात्। तथा हि त्रिविधो विशिष्टाभावः—विशेषणाभावकृतः, विशेष्याभावकृतः, विशेषणविशेष्योभयाभावकृतश्चेति। तत्र श्वेतकमलसत्त्वेपि नीलं कमलं नास्तीति प्रतीतिसन्दिष्टोभाव आद्यः। नीलपटसत्त्वेपि नीलं कमलं नास्तीति प्रतीतिसिद्धो द्वितीयः। शुक्लपटसत्त्वेपि नीलं कमलं नास्तीति तृतीयः। तथैव प्रकृतेऽपि संस्कृतायां सत्यामपि अस्वीकृतायां विशेषणाभावप्रयुक्तः, स्वीकृतायामपि असंस्कृतायां विशेष्याभावप्रयुक्तः उभयाभावे तु सुतराम् विशिष्टाभाव इति पर्यवस्यति[२]।

केचित्त्वत्र नारदेन आसुरादिषु त्रिषु विवाहेषु पाक्षिकदानविधानवचनात् ब्राह्मादिषु पञ्चसु च नित्यमेव दाननिश्चयात् दानमपि तृतीयमङ्गं विवाहस्य

---

(१) सं० प्र० [पृ० ५८३], पारस्करोऽप्याह—पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति॥

(२) धर्मशास्त्रे विवाहस्य उद्वाहः, परिणयः, पाणिग्रहणम्, स्वीकरणम्, उपयमः इत्यादयोऽनेके समानार्थकाः शब्दा दृश्यन्ते। तत्र प्रतिशब्दमर्थभेद इति नयानुसारेण सर्वेषामंशतो भिन्नार्थकत्वेऽपि तत्तत्कर्मविशेषाश्रितत्वात्तत्तन्नाम्नः न पर्यायत्वे कश्चन विवादो मन्तव्यः।

मन्वते। तदयुक्तमेव प्रतीमः, दानस्य पाक्षिकत्वादेवासुरादिषु त्रिषु। नहि यदङ्गं तस्य पाक्षिकत्वं स्वीकर्तुमुचितम्, तथा सति अङ्गवैगुण्यापातात्। अत एवाश्वलायनवचने उदकपूर्वां दद्यादितिरूपे दद्यादुदकपूर्वामित्यस्योदकपूर्वं स्वीकरणमेव तात्पर्यम्। अत एव यमेन—

नोदकेन विना चायं कन्यायाः पतिरुच्यते।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे[1] ॥ इत्यत्र उदकपूर्वं

ग्रहणमेव संकेतितम् इति प्रकाशकारादयः।

वयं तु ब्रूमः—दानमप्यङ्गमेव विवाहस्य। न च पाक्षिकत्ववचनविरोधः, तत्र दानस्योद्वाहेऽनित्यत्वेऽपि तत्रासुरादौ तदभावादङ्गवैकल्यमस्त्येव। अत एवासुरादिविवाहस्य शास्त्रे निन्दाश्रवणम्। इतरथा हि सर्वाङ्गपूर्णे तस्मिन् किन्नामवैगुण्यं येन तन्निन्दोपपन्नता स्यात्। अत एव च तत्र तत्र शास्त्रे कन्यादानाधिकारिनिरूपणमपि संगच्छते। तथा च दानं प्रतिग्रहः संस्कारश्चेति त्रितयमपि समष्टिरूपेण विवाह इति निष्कर्षो बोध्यः।

विवाहोऽतिमहत्त्वपूर्णः संस्कारः। अपत्नीकस्य कर्मण्यनधिकारः अत एव शास्त्रोक्तः[2] संगच्छते। तैत्तिरीयसंहितायाम्[3] ऐतरेय ब्राह्मणे[4] च विवाहशब्दो लभ्यते। ताण्ड्यमहाब्राह्मणे श्रूयते[5]—द्यावापृथिव्यौ प्रथममभिन्ने आस्ताम्, परस्ताच्च पृथक् पृथक् अभूताम् परस्परम् अकथयताञ्च—अद्यावाम् विवाहं कुर्याव, आवयोः समागमो जायताम् इति।

अयं च संस्कारो ऋग्वेदेऽपि निर्दिष्टोऽस्ति[6]। परस्ताच्चापि सर्वेषु गृह्यसूत्रादिषु च प्रथमत एव निर्दिष्टो विवृतश्च।

---

(१) सं० प्र० [पृ० ५८३]
(२) यावत् जायां न विन्दते—असर्वो हि तावद् भवति ॥ श० प० ब्रा० [५/२/१/१०]
(३) तै० सं० [७ २/८७]
(४) ऐ० ब्रा० [२७/५]
(५) इमौ वै लोकौ सहास्तां तौ वियन्तावभूतां विवाहे विवहावहै सह नावस्त्विति ॥ ता० ब्रा० [७ १०/१]
(६) त्वमर्यमा भवसि यत् कनीनां नाम स्वधावन् गुह्यं बिभर्षि।
अञ्जन्ति मित्रं सुधितं न गोभिर्यद् दम्पती सुमनसा कृणोषि ॥
ऋ० वे० [५ ३ २]

अत्रायमेकः प्रश्नः समुदेति—किं विवाहस्य संस्कारत्वप्रतिष्ठापनात् पूर्वं भारते स्त्रीपुंससम्बन्धो व्यवस्थित आसीत् उताव्यवस्थित एवेति। वैदिके तु साहित्ये नैतद्विषये किमपि वर्णनमुपलभ्यते। महाभारते पुनर्दृश्यते—पाण्डुः कुन्तीं वदति—पुरा स्त्रियोऽसंयता आसन्। यथेच्छं मैथुनमाचरन्ति स्म, एकेनान्येन वा पुरुषेण सह मिथुनीभवन्ति स्म[1]। अत्र विषये सभापर्वावलोकनमपि[2] कर्तव्यम्। अतः केचनाधुनिका मन्यन्ते यत् पुराऽव्यवस्थित एवासीत् यौनः सम्बन्धः स्त्रीणाम्[3] इति। परन्तु महाभारतस्य वर्णनमर्थवादमात्रमेवेति तत्प्रसंगावलोकनेन विज्ञायत एव। अत एवान्ये विवेचनाशीला आधुनिका मन्यन्ते सत्यमेव एतद् यत् पुराऽपि व्यवस्थित एवासीत् यौनः सम्बन्ध[4] इति।

**अथ विवाहावसरः—**

तत्र गुरुकुलाध्ययनं वा व्रतं वोभयं वा परिसमाप्य गृहं प्रत्यागतः स्नायादिति समावर्त्तनप्रसंगे निर्दिष्टमेव। स्नानानन्तरं च दारपरिग्रहः[5] कर्तव्य। तत्राप्यनुज्ञप्त एव गुरुणेति विशेषः[6]। अयं च विवाहः उपकुर्वाणैः समावर्त्तनानन्तरं कर्तव्य एव, अन्यथा अपूर्णत्वेन कर्मानधिकार इत्यावेदितमेव प्रागपि।

**अथ विवाहभेदाः—**

तत्रापस्तम्बे धर्मसूत्रे षडेव विवाहा उक्ताः[7]—ब्राह्मः, आर्षः, दैवः,

---

(१) म० भा० (आदिपर्व) [१२२ ४-७]

(२) म० भा० (सभापर्व) [३१/३७-३८]

(३) एम० कौलः मैरिज, पास्ट एण्ड प्रेजेण्ट [पृ० १०]

(४) ,, ,, ,, ,,

(५) वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥ या० स्मृ० [१/५१-५२]
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥ म० स्मृ० [३ २]

(६) ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत ॥
खा० गृ० [१, ३ १]
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ म० स्मृ० [३. ४]

(७) आप० ध० [२/११/१७-२०], [२ १२/१-२]

गान्धर्वः, आसुरः, राक्षसश्चेति। गौतमेन[1] मनुना[2] च अष्टविधो विवाह उद्दिष्टः प्राजपत्यपैशाचाभ्यां सह। लौगाक्षिगृह्यसूत्रे[3] तु ब्राह्म आसुरश्चैव निर्दिष्टः।

तत्रैतेषां लक्षणानि क्रमेण व्याख्यास्यामः—

(क) ब्राह्मः—

तत्र ससम्मानं वरमाहूय तं यथाशक्तिवस्त्रादिनाऽलङ्कृत्य कन्यायाः प्रदानम् ब्राह्मो विवाहः[4]। अत्र कन्याऽपि वस्त्रादिनाऽलङ्करणीयेति[5] स्पष्टमेव। वरश्चात्र योग्यः[6] श्रुतिशीलादिसम्पन्नो भवेत्।

ब्राह्मविधिनोढायाम् जातः पुत्रः पित्रादीन् पूर्वजान् दश, दश च स्वपुत्रादीनवरजान् आत्मना सह एकविंशतिसंख्याकान् पुरुषान् पुनाति[7]। द्वादश पूर्वान्[8] द्वादशापरान् आत्मानं च पुनातीति पक्षान्तरम्।

---

(१) गौ० घ० [४ ४-११]

(२) म० स्मृ० [३ २१], या० स्मृ० [१/५८-६१], आश्व० गृ० [१ ६ १]

(३) लौ० गृ० [१५/१, १६ १]

(४) अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः॥ आश्व० गृ० [१ ६/१], म० स्मृ० [३/२७], या० स्मृ० [१ ५८], गौ० घ० [४/४], आप० घ० [२ ११ १७]

(५) अलंकृत्य स्वलङ्कारैर्वराय सदृशाय च।
ब्राह्मेण तु विवाहेन कन्यां दद्यात् सुलक्षणाम्॥ संवर्त्तः॥ सं० प्र० [पृ० ८४७], गौ० घ० [४ ४], आश्व० गृ० [१ ६ १]

(६) ब्राह्मो विद्याचारित्रबन्धुशीलसम्पन्नाय—गौ० घ० [४/४], आप० घ० [१ ११/१७],

(७) दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम्।
ब्राह्मी पुत्रः सुकृतकृन्मोचयेदेनसः पितृन्॥ म० स्मृ० [३ ३७], गौ० घ० [४ ७], या० स्मृ० [१ ५८]

(८) तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः॥ आश्व०गृ०[१ ६] (आत्मानं च पञ्चविंशम्, आत्मानमिति मनुवाक्ये दर्शनात् – देवस्वामी)
या ब्राह्मेण विवाहेन सम्यग्दत्ता कुमारिका।
तज्जातः पावयेत् पुत्रो मातापितृकुलोद्भवान्॥
द्वादश द्वादशातीतान् पुरुषान् भाविनस्तथा॥ शौनकः॥ सं० प्र० [पृ० ८६२[

(ख) दैवः—

यज्ञानुष्ठाने सम्प्रवृत्ते सम्यक् कर्म कुर्वते ऋत्विजे अलंकृतायाः कन्याया दानं दैवो[1] विवाहः। इदं च दानं वेद्यामेव भवति[2]। एतद्विवाहादुत्पन्नो हि सुतः सप्त पूर्वान् सप्तावरान् आत्मना सह पञ्चदशपुरुषान्[3] पुनाति। अथवा दशपूर्वान् दशापरान् आत्मना[4] सह एकोविंशतिपुरुषान् पुनाति। गौतमस्तु पञ्च पञ्च पूर्वापरानिति दशपुरुषान् पुनातीत्याह[5]।

(ग) आर्षः—

एकं गोमिथुनं[6] गोमिथुने[7] वा आदाय वरात् कन्याया दानं यदि भवति तदा आर्षो विवाहः। अत्रोत्पन्नः सुतः त्रीन् पूर्वान् त्रींश्चापरान् आत्मानं चेति[8] सप्तपुरुषान् पुनाति। गोमिथुनादानं चात्र स्वयमशक्तः करोति पुनर्दानसमये वरायैव दक्षिणार्थम्। अत एव देवलेन आर्षे गोमिथुनं दक्षिणोक्तम्[9]। अत्रापि सप्त पूर्वान् सप्त परान् पुनाति दैवज इत्याश्वलायनादयः[10]।

(घ) प्राजापत्यः—

'सह धर्मं चरताम्' इत्युक्त्वा कन्यादानं प्राजापत्यः[11]। अत्र जातः षट्

---

(१) दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत्॥ आप० ध० [२/११/१९], म० स्मृ० [३/२८], या० स्मृ० [१/५९], आश्व० गृ० [१/६], गौ० ध० [४.७]

(२) अन्तर्वेद्यृत्विजे दानं दैवोऽलंकृत्य॥ गौ० ध० [४,७]

(३) म० स्मृ० [३/३८], या० स्मृ० [१ ५९]

(४) आश्व० गृ० [१/६], शौनकः–सं० प्र० [पृ० ८६३]

(५) गौ० ध० [४/२६]

(६) म०स्मृ० [३/२९], या०स्मृ० [१/५९], आश्व०गृ० [१/६], गौ०ध० [४.६]

(७) म० स्मृ० [३/२९], आप० ध० [१,११,१८]

(८) या० स्मृ० [१/५९], म० स्मृ० [३/३८]

(९) प्रदानं यत्र कन्यायाः सह गोमिथुनेन तु।
शस्ताय चासगोत्राय तमार्षमृषयो विदुः॥ सं० प्र० [पृ० ८५१]

(१०) आश्व० गृ० [१,६], शौनकः—सं० प्र० [पृ० ८६४]

(११) सहोभौ चरतां धर्ममिति वाचानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः॥ म०स्मृ० [३/३०], आश्व० गृ० [१ ६], आप० ध० [१/११/१८] गौ० ध० [४/६], या० स्मृ० [१ ५६]

पूर्वान् षट् परांश्च पुनातीत्येकः[1] पक्षः। अष्ट पूर्वान् अष्टापरान् इति अपरः पक्षः[2] आश्वलायनादीनाम्। उभयथाऽपि आर्षात् विशिष्टत्वमस्याक्षतमेव। अत्र विष्णुना लक्षणान्तरमुक्तम्[3]। गौतमेन च पञ्च पूर्वान् पञ्चापरानिति च पूतत्वेनोदितम्[4]। शंखलिखिताभ्यान्तु सप्त पूर्वान् सप्तापरान् आत्मानं चेति-पञ्चदशपुरुषान् प्राजापत्यजः पुनातीत्युक्तम्[5]।

(ङ) आसुरः—

यत्रोभयपक्षाभ्यां केनाप्येकेन वा द्रव्यादानं ततश्च स्वेच्छयाविवाहः स आसुरः[6]। अत्र कन्याक्रयणमेव तात्पर्यविषयीभूतम्। अयमेव विवाहः हारीतेन मानुष[7] इत्युच्यते। वसिष्ठोऽप्येवमेवाह[8]। पैठीनस्युक्तौ तु अस्यैव विवाहस्य राक्षस इति नाम प्रतीयते, लक्षणसाम्यात्[9]।

अनेन विधिना विवाहिता स्त्री वस्तुतो दास्येव[10]। अद्यत्वे एवं विधो विवाहो बहुत्र दृश्यते। अयं चातिपापावहः। अपत्यविक्रयस्य शास्त्रेषु निन्दि-

---

(१) मनुस्मृतिः [३/३८], या० स्मृ० [१ ५६]
(२) आश्व० गृ० [१ ६], शौनकः—सं० प्र० [पृ० ८६४]
(३) प्रार्थितायाया याचितायाः कन्यायाः यत् पित्रा प्रकर्षेणोक्तविधिना दानम् तेन प्राजापत्यः ॥ सं प्र० [पृ० ८५२]
(४) गौ० ध० [४/२६]
(५) सप्ताद्यन्तयोरात्मानं च प्राजापत्यः ॥ सं० प्र० [पृ० ८६५]
(६) ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यात् आसुरो धर्म उच्यते ॥
म० स्मृ० [३/३१], आप० ध० [२/१२/१], आश्व० गृ० [१/६], गौ० ध० [४/६], या० स्मृ० [१/५९]
(७) शौल्केन मानुषः ॥ सं० प्र० [पृ० ८५३]
(८) पणित्वा धनक्रीता स मानुषः ॥ तत्रैव ॥
(९) शुल्केन कन्यामाददतो राक्षसः ॥ तत्रैव ॥
(१०) कश्यपः-क्रीतद्रव्येण या नारी न सा पत्नी विधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥
सं० प्र० [पृ० १००]

तत्त्वश्रवणात्[1]। एवं रीत्याऽपत्यविक्रयी घोरं नरकं प्रपन्नः सप्तपुरुषपर्यन्तमात्मकुलं पातयति[2]।

## (च) गान्धर्वः—

परस्परप्रेम्णा त्वं मम भार्या भव अहं तव भर्त्ता भवामि इत्येवं परस्परेच्छया कामसम्भवो विवाहो[3] गान्धर्वः। अत्र परस्परेच्छा विशेषेण कन्याया भवत्येव, अन्यथा राक्षसादनिच्छन्त्या बलादपहरणस्वरूपादस्य भेदो नैव तिष्ठेत्। अत्र मातापितृभ्यां दानमपि न भवति[4]। अत एव स्वयं कन्या सक्ता स्वदानं करोति इति गम्यते। अत एव गौतमेनापि 'इच्छन्त्याः स्वयं सयोगो गान्धर्वः'[5] इत्युक्तम्। ईदृशश्च विवाहः पुरापि मुनिकन्यकादीनां प्रसिद्ध[6] एव। अधुना तु भूयानेव दृश्यते।

---

(१) आपस्तम्बः-दानं विक्रयधर्मश्चापत्यस्य न विधीयते।
न कन्यायाः पिता विद्वान् गृह्णीयात् शुल्कमण्वपि॥
गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी।
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्॥
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम्॥
सं० प्र० [पृ० ८५४]

कश्यपः—शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः।
आत्मविक्रयिणः पापा महाकिल्विषकारकाः॥ तत्रैव॥

(२) यमः—कन्याविक्रयिणो मूर्खा महाकिल्विषकारिणः।
पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम्॥ सं० मं० [पृ० १००]

पराशरः—कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया।
कुरूपाय कुशीलाय स प्रेतो जायते नरः॥ सं० प्र० [पृ० ८५५]

(३) आश्व० गृ० ना० वृ० [१/६], म० स्मृ० [३/३२], या० स्मृ० [१/६१], गौ० ध० [४/८], आप० ध० [१/११ २०]

(४) विष्णुः-द्वयोः सकामयोर्मातापितृदानरहितो गान्धर्वः॥ सं०प्र० [पृ० ८५६]

(५) गौ० ध० [४/८]

(६) गान्धर्वेण विवाहेन बहवो मुनिकन्यकाः।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः॥ अ० शा०

**(छ) राक्षसः—**

यथाकथञ्चिदनिच्छन्त्याः रुदन्त्याः प्रसह्य हरणं राक्षसो विवाहः[१]। ये पुनरत्र प्रतिबन्धका भवन्ति तेषां ताडनवधाद्यपि क्रियत एवेति स्पष्टमुक्तं मनुना—

हत्वा छित्वा च भित्वा च क्रोशन्तीं छन्दतीं गृहात्।
प्रसह्य कन्यां हरतो राक्षसो विधिरुच्यते[२] ॥ इति।

अयमेव हारीतादिभिः क्षात्र[३] इत्युच्यते। परमयमत्र विशेषो विज्ञेयः— राक्षसे हरणं रुदन्त्या अनिच्छन्त्या एव। क्षात्रे पुनर्विवाहे नैतदावश्यकम्। अर्जुनस्य द्रौपदीहरणं क्षात्रो विवाह, न च पुनर्द्रौपदी अनिच्छन्त्यासीत्। अतः एवंविधविवाहस्य क्षत्रियेषु प्रचलितत्वात् कथंचित् नाम समाधेयम्। अत एवाश्वलायनटीकायां नारायण आह— राक्षसश्च तस्यैव (क्षत्रियस्यैव), युद्धसंयोगात्'[४] इति।

**(ज) पैशाचः—**

अत्र मनुः—

सुप्तां मत्तां प्रमत्तां वा रहोयत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः[५] ॥ इति।

याज्ञवल्क्यस्तु कन्यां प्रतार्यापहरणं तस्यां पैशाचमाह[६]। परन्तु विज्ञानेश्वरो मन्वादिवचोध्यायन् तत्सामञ्जस्याय 'छलेन छद्मना स्वापाद्यवस्थासु अपहरणात्' इति व्याचष्टे। अत्र पित्रादीनामभिभावकानामपि सुप्तत्वादिकं सम्भवति। अत एव आश्वलायनवृत्तौ 'सुप्तेभ्यः प्रमत्तेभ्योऽसावधानेभ्यः कन्यामपहृत्य यो विवाहः स पैशाचसंज्ञकः'[७] इत्युक्तम्। अयमधमः[८]।

---

(१) आप०ध० [२/१२/२], या०स्मृ० [१/६१], आश्व०गृ०[१ ६], गौ०ध०[४ १०]
(२) अलङ्कृतामभिजयतः क्षात्रः। सं० प्र० [पृ० ८५७]
(३) म० स्मृ० [३/३३]
(४) आश्व० गृ० ना० वृ० [१/६]
(५) म० स्मृ० [३/३४]
(६) या० स्मृ० [१/६१]
(७) आश्व० गृ० ना० वृ० [१/६]
(८) चान्त्यस्तु गर्हितः ॥ नारदः ॥ सं० प्र० [पृ० ८५९]
स पापिष्ठो विवाहानां पैशाचः ॥ म० स्मृ० [३/३४]

## अत्र वर्णविशेषानुसारेण विवाहव्यवस्था—

अत्रापस्तम्बः—ब्राह्मार्षदैवेषु त्रिषु प्रशस्तेष्वपि आद्य आद्यः श्रेयान्[1] इति। अस्य मते प्राजापत्यस्य ब्राह्मे पैशाचस्य च राक्षसेऽन्तर्भावस्याऽभिप्रेतत्वात्[2] प्राजापत्योऽप्यन्येषां मतेऽस्य श्रेयानेवेतरापेक्षयेति प्रतीयते। ब्राह्मप्राजापत्यार्षदैवाश्चत्वारो धर्म्या इति गौतमः[3]। मनुरप्येवमेवाह[4]। देवलादयोऽप्येवमेवाहुः[5]।

तत्रापि ब्राह्मणस्य ब्राह्मप्राजापत्यदैवार्षश्चत्वारः उत्तमाः। अनुकल्पे तु आसुरगान्धर्वावपि। एतदेव मनुमतम। क्षत्रियस्यैको राक्षस एव प्रशस्तः, अनुकल्पे तु प्राजापत्यदैवार्षा आदि धर्म्या एव। वैश्यशूद्रयोरासुरः प्रशस्तः, प्राजापत्यश्चेति मेधातिथिः॥

नारायणवृत्तौ चाप्युक्तम्—एवमेतेऽष्टौ विवाहाः (ब्राह्मदैवप्राजापत्यार्षगान्धर्वासुरपैशाचराक्षसाः)। तत्र पूर्वेषु चतुर्षु पूर्वपूर्वः प्रशस्तः, उत्तरेषु चतुर्षु उत्तरोत्तरः पापीयान्। तत्र पूर्वौ ब्राह्मणस्य। इतरयोः प्रतिग्रहाभावात्। आर्त्विज्याभावाच्च। गान्धर्वः क्षत्रियस्य। पुराणे दृष्टत्वात्। राक्षसश्च तस्यैव, युद्धसंयोगात्। आसुरस्तु वैश्यस्य, धनसंयोगात्। इतरे त्रयो नियताः[6]। इति।

अत्रेयं व्यवस्थाऽवगन्तव्या—ब्राह्मणस्य षड्विधा विवाहाः ब्राह्मदैवप्राजापत्यार्षगान्धर्वासुराः। तत्र ब्राह्मः श्रेष्ठः, ततो न्यूनौ दैवप्राजापत्यौ, ताभ्यामपि न्यूनतरः आर्षः, तेनाऽपि न्यूनतरः आसुर इति। ये तु 'पञ्चानां तु त्रयो[7] धर्माः' इति मनुवचनं ब्राह्मणविषयमपि मन्यन्ते तेषां मते आपदिक्षत्रियवृत्तावस्थितस्य ब्राह्मणस्यापि राक्षसो विवाहः सम्मतः।

---

(१) आप० ध० [२/१२/३]

(२) द्वौ चापरौ विवाहौ शास्त्रान्तरेषूक्तौ। तत्राश्वलायनः—'सह धर्मं चरतम्' इति प्राजापत्यः। सुप्तां प्रमत्तां वापहरेत् स पैशाचः' इति। ताविह पृथक् नोक्तौ, ब्राह्मराक्षसयोरन्तर्भावात्॥ उज्ज्वला- आप० ध० [२/२२/२]

(३) चत्वारो धर्म्याः प्रथमाः॥ गौ० ध० [४/१२]

(४) म० स्मृ० [३/२४]

(५) सं० प्र० [पृ० ८५९-६०]॥

(६) आश्व० गृ० ना० वृ० [१/६]

(७) पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन॥ म० स्मृ० [३/२५]

तत्र ब्राह्मस्य श्रेष्ठत्वं च तत्फलेनैव दर्शितं शास्त्रेषु । निषेधाभावेन चेतरेषां त्रयाणां विहितत्वेऽपि फलापचयादेवापकर्षः। आसुरस्य तु "आसुरं वैश्यशूद्रयोः"[१] इत्यादिना विधानात् परिसंख्या ब्राह्मक्षत्रिययोः प्रतीयते। "षडानुपूर्व्या[२] विप्रस्य" इत्यनेन च विधानम् । अतः शास्त्रद्वैविध्याद्विकल्पः । सोऽपि व्यवस्थित एव इतरासम्भवे तस्याश्रयणमिति । विकल्पो हि व्रीहियववत् समुच्चयासम्भवादेव प्रतीतः । तत्र च धर्मापत्ययोर्न्यूनफलकत्वस्य शास्त्रे प्रतिपादनाद्विकल्पोप्युपपद्यते ।

क्षत्रियस्य तु राक्षसो मुख्यः,—"राक्षसं क्षत्रियस्यैकम्[३]" इति विहितः, अन्ये प्रतिषिद्धाः । "क्षत्रस्य चतुरो [४]वरान्" इत्यनेन पुनः आसुरगान्धर्वपैशाचानामपि विधानम् । अतोऽत्रापि विकल्प एव पूर्ववद् व्यवस्थितः । अत एव गान्धर्वादयस्त्रयो गौणा एव क्षत्रियस्य । प्राजापत्ये नास्ति परिसंख्यानम्, अतः प्राजापत्योऽपि क्षत्रियस्य राक्षसतुल्य एवेति मेधातिथिः[५] ।

वैश्यशूद्रयोरपि आसुरपैशाचौ विहितप्रतिषिद्धौ । अतो विकल्पः । राक्षस्तु 'विट्शूद्रयोश्च तानेव विद्याद्धर्म्यान्न राक्षसान्' इत्यनेन प्रतिषिद्ध एव । प्राजापत्यस्तु न प्रतिषिद्ध इति सोऽपि ।

**अथ विवाहकालः—**

तत्र मासाः—

माघफाल्गुनवैशाखज्येष्ठमासा उत्तमाः, कार्त्तिकमार्गशीर्षौ मध्यमौ इति नारदः[६] । तत्रापि 'भानोरार्द्राप्रवेशनात्' इति तदुक्त्यैव आर्द्राप्रवेशात्पूर्वमाषाढोऽप्यनुज्ञात एव । अत एव भरद्वाजेन माघादारभ्याषाढपर्यन्ताः षण्मासाः

---

(१) म० स्मृ० [३/२४]

(२) षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरो वरान् ।
बिट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान्न राक्षसान् ।। म० स्मृ० [३/२३]

(३) म० स्मृ० [३/२४]

(४) म० स्मृ० [३/२३]

(५) म० मे० भा० [३/२५]

(६) माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः ।
कर्त्तिको मार्गशीर्षश्च मध्यमावितरेऽधमाः ।।
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ।
विवाहं देवतानाञ्च प्रतिष्ठां चोपनायनम् ।। सं० म० [पृ० १०१]

पूजिता उक्ताः[१]। व्यासेनापि अत एव माघफाल्गुनवैशाखमार्गशीर्षज्येष्ठाषाढेषु विवाहितायाः सौभाग्यं धनसम्पत्तिश्च निर्दिष्टा[२]।

आश्वलायनस्तु—'सर्वर्त्तवो विवाहस्य शैशिरौ मासौ परिहायोत्तमं च नैदाघम्'[३] इत्युक्तवान्। व्याख्यातं चैतत् तात्पर्यदर्शने—"शिशिरस्य[४] ऋतोः यौ द्वौ मासौ माघफाल्गुनौ, निदाघस्य=ग्रीष्मस्य यश्चोत्तमोऽन्त्य आषाढः, तानेतान् त्रीन् मासान् परिहाय=वर्जयित्वा। अत्रोत्तममिति तमप्-प्रत्ययात् यस्सौरतोऽन्त्यो नैदाघः, यश्चाधिकमासतो द्वितीय आषाढः तावपि पर्युदस्तौ" इति। एतेन माघफाल्गुनाषाढा न विवाहे विहिता इति गम्यते। 'सर्वे मासा विवाहस्य शुचितपस्यवर्जमित्येके'[५] इति बौधायनसूत्रेऽपि आषाढमाघफाल्गुनमासाः प्रतिषिद्धा एव। अत एव वास्योक्तमासफले आषाढस्य न फलमुक्तम्[६]। वसिष्ठः पुनराह—

पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदास्यात्[७]।
प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुने स्थितेऽर्के॥ इति।

तत्रैवं परस्परविरुद्धेषु वचनेषु सत्सु शाखाभेदात् शिष्टाचारानुसाराच्च व्यवस्था मासविषयिणी कर्त्तव्येति निर्णयः।

मासव्यवस्था तु सौरमानेनेति गर्गः[८]। कश्यपस्तु चान्द्रमानमप्याह[९]।

---

(१) माघफाल्गुनवैशाखज्येष्ठाषाढमृगाभिधाः।
षडेते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यशः॥ सं० र० मा० [पृ० ४५६]

(२) माघफाल्गुनवैशाखे यद्यूढा मार्गशीर्षके।
ज्येष्ठे चाषाढमासे च सुभगा वित्तसंयुता॥ तत्रैव॥

(३) आप० गृ० [१/२/१२]

(४) ता० द० [१ २/१२]

(५) बौ० गृ० [१/१/१८-१६]

(६) माघमासे भवेद् व्यूढा कन्या सौभाग्यसंयुता।
फाल्गुनोढा भवेत् साध्वी वैशाखे पुत्रिणी भवेत्॥
धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्त्तिके भवेत्।
देवपूजारता नित्यं मासे स्यात्सोमदेवते॥ सं० र० मा० [पृ० ४५८]

(७) पा० गृ० ग० भा० [१/१६/४]

(८) सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः॥ सं० म० [पृ० १०१]

(९) उपवासव्रतोद्वाहयात्राक्षौरोपनायनम्।
तिथिवर्षादिलिखितं चान्द्रमानेन गृह्यते॥ सं० र० मा० [पृ० ४५९]

अत्र सौरमानेन मासव्यवस्थोत्तमा प्रचलिता चास्ति। अत एव निर्णयसिन्ध्वादावपि[1] सौरमास एवोक्तः।

तत्रायं विशेषः—ज्येष्ठे मासे ज्येष्ठापत्यस्य विवाहो न कार्यः। तत्रापि त्रिज्येष्ठं विशेषेण वर्जनीयम्। ज्येष्ठः कन्या वरश्च मासश्च इति एकं ज्येष्ठत्रयम्। ज्येष्ठा नक्षत्रं ज्येष्ठो मासः ज्येष्ठा कन्या ज्येष्ठो वरो वेति द्वितीयं त्रिज्येष्ठम्। चतुर्ज्येष्ठे च ज्येष्ठत्रयस्य सद्भावादेव तदपि प्रतिषिद्धमेव। ज्येष्ठद्वयं च मध्यमम्, एकज्येष्ठत्वं च प्रशस्तम्[2]। कृत्यरत्नाकरे चण्डेश्वरस्तु कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठमासेऽपि ज्येष्ठपुत्रस्य[3] विवाहमाह। अतश्च ज्येष्ठमासेऽपि विवाहः शुभदो भवेत्। तत्रैवं सति परस्परं विशेषविषयमपहाय व्यवस्था।

अत्र ज्येष्ठत्वमपत्ये आद्यगर्भजत्वमेव, न तु जीवितेषु अग्रजत्वमात्रम्[4]।

अत्र जन्मनक्षत्रजन्मदिनसहितो जन्ममासोऽपि वर्ज्यः[5]। तत्रापि वसिष्ठो जन्मदिनमात्रम्, जन्मतोऽष्टौ दिनानि गर्गः, दश अत्रिः, जन्मपक्षं

---

(१) नि० सि० [पृ० ६०७]

(२) पराशरः—अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि।
व्यत्ययो वा तयोस्तत्र ज्येष्ठो मासः शुभप्रदः॥
पा० गृ० ग० भा० [१/१६/४]

ज्येष्ठस्य ज्येष्ठकन्याया विवाहो नैव शस्यते।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासः प्रशस्यते॥
द्वौ ज्येष्ठौ मध्यमौ प्रोक्तौ एकज्येष्ठं सुखावहम्।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतम्॥
सं० र० मा० [पृ० ४६०]

(३) कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत्॥ नि० सि० [पृ० ६०६]

(४) श्रीपतिः—आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न तु जातु मंगलम्॥
सं० म० [पृ० १०१]

(५) जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत्।
ज्येष्ठे मास्यादिगर्भस्य शुभं वर्ज्यं स्त्रिया अपि॥ नि० सि० [पृ० ६०६]

भागुरिः दूषयति[१]। अतोऽतिरिक्तानि दिनानि जन्ममासेऽपि विहितान्येव। तथापि यथासम्भवं जन्ममासपरित्याग एव युक्तः।

**पक्षः—**

अत्र शुक्ल एव पक्षो मुख्यः[२]। असम्भवे तु कृष्णपक्षोऽपि, परन्तु अन्त्यत्रिकं परिहरणीयम्। अत एव आपस्तम्बव्याख्यायां सुदर्शनाचार्या अपि "विवाहस्य पूर्वपक्षादिनियमाभाव."[३] इत्याहुः। एतेन "उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः"[४] इत्याश्वलायनवचने आपूर्यमाणपक्षे इति न नियमः, अपि तु प्राशस्त्याभिधानमात्रम्। एवमेवोदगयनमपि न नियतम्। अत एव 'सर्वर्त्तवो विवाहस्य'[५] इत्यापस्तम्बः प्राह। व्याख्यातं च हरदत्तेन 'सर्वर्त्तु विधानम् उदगयनापवाद.' इति। अत एव धर्मप्रकाशकृता 'सार्वकालमेके विवाहम्' इत्याश्वलायनवचनं तथैव व्याख्यातम्[६]। ज्योतिर्निबन्धेऽपि[७] तथैव।

**दिनानिः—**

बुधगुरुशुक्राणां दिनानि विवाहे प्रशस्तानि इति ज्योतिर्निबन्धे[८]। निर्णयामृते तु रिक्तायां तिथौ सत्यां शनिवासरेऽपि विवाहः प्रशस्त एवोक्तः[९]। नृसिंहस्तु बुधशुक्रेन्दुजीवानां दिनानि शुभानीति वदति[१०]। तत्रेन्दोर्दिने

---

(१) जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः।
जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि॥

(२) नारद–शुक्लपक्षं प्रशंसन्ति विवाहे गौतमादयः॥ सं०र०मा० [पृ० ४६०]

(३) ता० द० [१/२/१२]

(४) आश्व० गृ० [१/४/१], द्र० पा० गृ० [१६/४/४], बौ० गृ० [१/१/१४]

(५) आप० घ० [१.२/१२]

(६) सं० म० [पृ० १००-१०१]

(७) सार्वकालिकमिच्छन्ति विवाहं गौतमादयः॥ सं० र० मा० [पृ० ४६०]

(८) गुरुशुक्रेन्दुपुत्राणां दिनेषु परिणीयते।
या कन्या सा भवेन्नित्यं भर्तुश्चित्तानुवर्तिनी॥ सं० र० मा० [पृ० ४६४]

(९) निर्णयामृतम् [पृ० २१५]

(१०) बुधशुक्रेन्दुजीवानां वारेषु शुभदं भवेत्।
शुभनामांशकं श्रेष्ठं वर्गादि च विवाहके॥ सं० र० मा० [पृ० ४६४]

ज्योतिर्निबन्धे सापल्याावाप्तिश्रवणात्[1] यथासम्भवं त्याज्यमेव तद्दिनमिति युक्तं प्रतीमः।

अत्र स्त्रीणां गुरुबलं द्रष्टव्यम् पुरुषाणां सूर्यबलम्[2]। यदि अनयोरन्यतर उभौ वा दुर्बलौ तर्हि गुरुपूजनं रविपूजनं च कृत्वा दौर्बल्यदोषशान्तिः कर्त्तव्या[3]।

तत्रापि धनुर्मीनसिंहान्यतरस्थे रवौ विवाहो वर्जितः[4]। गुरावपि सिंहस्थे मकरस्थे वा विवाहो निषिद्धः[5]। तत्रापि वसिष्ठपराशराभ्यां सिंहस्थ-गुरोः प्रतिप्रसव उक्तः—

विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु।
भागीरथ्युत्तरे तीरे गौतम्या दक्षिणे तथा॥
विवाहो व्रतबन्धश्च सिंहस्थे ज्ये न दुष्यति॥ इति।
गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ।
मघास्थे सर्वदेशेषु तथा मीनगते रवौ॥ इति च[6]॥

एवमेव निर्दिष्टः प्रतिप्रसवो मकरस्थरवेरपि लल्लेन—

नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे।
गण्डक्याः पश्चिमे तीरे मकरस्थो न दोषभाक्[7]॥ इति।

**तिथयः—**

तत्र फलानुरोधेन द्वितीया, तृतीया, पञ्चमी, सप्तमी, दशमी, एकादशी,

---

(१) सापल्यं समवाप्नोति तुषारकरवासरे॥ तत्रैव॥
(२) स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम्॥ पा० गृ० ग० भा० [१/१६/४]
(३) विवाहे बलमावश्यं दम्पत्योर्गुरुसूर्ययोः।
चेत्पूजां यत्नतः कुर्याद्दुर्बलप्रदता तयोः॥ सं० र० मा० [पृ० ४६५]
(४) मीने धनुषि सिंहे च स्थिते सप्ततुरंगमे।
क्षौरमत्र न कर्त्तव्यं विवाहं गृहकर्म च॥ तत्रैव॥
(५) सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्॥ पा० गृ० ग० भा० [१/१६४]
(६) तत्रैव॥
(७) सं० र० मा० [पृ० ४६६]

द्वादशी, त्रयोदशी, पञ्चदशी (=पूर्णिमा) इत्येताः तिथयः प्रशस्ताः[1]। लल्लस्तु प्राह– केचित् कृष्णपक्षस्य दशमीं केचन उभयोः पक्षयोर्दशमीं विवाहे प्रतिषिद्धां मन्यन्ते इति[2]। तत्र दशम्या विहितप्रतिषिद्धत्वाद्विकल्पः। यथासम्भवं परित्याग एव वा।

**नक्षत्राणि—**

अत्र पारस्करः—'त्रिषु त्रिषूत्तरादिषु, स्वातौ, मृगशिरसि, रोहिण्यां[3] वा' इति। तथा च उत्तरफल्गुनी, हस्तः, चित्रा, उत्तराषाढः, श्रवणः, धनिष्ठा, उत्तरप्रोष्ठपदा रेवती, अश्विनी, स्वाती, मृगशिरः, रोहिणी चेति द्वादश नक्षत्राणि विहितानि पारस्करमतेन। बौधायनस्तु 'रोहिणी, मृगशीर्षमुत्तरे फल्गुनी, स्वातीति विवाहस्य नक्षत्राणि[4]' इत्याह। कात्यायनस्तु[5] पारस्करमेवानुमोदमानः आस्ते। वसिष्ठस्तु मूलम्,[6] उत्तरात्रयम्, मघा, रेवती, अनुराधा, रोहिणी, मृगशिरः, हस्तः, स्वाती, इत्येतानि नक्षत्राणि प्रशस्तान्याह। बृहस्पतिस्तु[7] मृगशिरः, मघा, हस्तः, अनुराधा, मूलम्, अश्विनी,

---

(१) प्रतिपद् दुःखजननी द्वितीया प्रीतिवर्धिनी।
सौभाग्यदा तृतीया स्यात् चतुर्थी चार्थनाशिनी॥
पञ्चम्यां सुखवित्तानि षष्ठी विघ्नप्रदायिनी।
विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाष्टमी॥
नवमी शोकफलदा आनन्दो दशमीदिने।
सुखदैकादशी ज्ञेया सफला द्वादशी स्मृता॥
मानपुत्रौ त्रयोदश्यां चतुर्दश्यां तु दुःखदा॥ सं० र०मा० [पृ० ४६१]

(२) अत्रापि कृष्णपक्षस्य दशमीमविवाहिकाम्।
वदन्त्यन्येऽपि दशमीमुभयोरविवाहिकाम्॥ तत्रैव॥

(३) पा० गृ० [१/१६/५-६]

(४) बौ० गृ० [१/१/२०]

(५) त्रिषूत्तरादिषु स्वातौ मृगशिरसि रोहिण्यां च॥ सं० र० मा० [पृ० ४६३]

(६) तिसृोत्तरामूलमघान्त्यमैत्रप्राजेशचन्द्रार्कसमीरणेषु।
सदा प्रशस्तः किल कन्यकानां पाणिग्रहोऽन्येषु विवर्जितस्तु॥
सं० प्र० [पृ० ७८२]

(७) सौम्यपैतृकहस्ताश्च मैत्रमूलाश्विवासवाः।
त्रीण्युत्तराणि पौष्णं च रोहिणी च शुभप्रदा॥ सं० र० मा० [पृ० ४६३]

पुनर्वसुः, उत्तरात्रयम्, रेवती, रोहिणी चेत्येतानि शुभानि निर्दिशति। हेमाद्रिरप्येवमेवाह[1]। रत्नमालायान्तु मूलं, मैत्रम्, मृगशिरः, रोहिणी, हस्तः, रेवती, स्वाती, मघा, उत्तरात्रयम् विहितान्युक्तानि[2]।

तत्र शाखाभेदाद् व्यवस्थेति प्रथमः पक्षः। रघुनन्दनादयस्तु ज्योतिःशास्त्रानुक्तं पारस्करोक्तं नक्षत्रं यजुर्वेदिविषयमापद्विषयं वेति निर्णयन्ति। अत्रास्माकं मतं यजुर्वेदिविषयकत्वमेव समर्थयति।

आपस्तम्बादयस्तु सामान्येन पुण्येषु नक्षत्रेषु विवाहं प्रशस्तं मन्वते[3]। एवमेव योगलग्नादयोऽपि शुभा एव यथाशास्त्रं वेदितव्याः॥

## अथ वरवध्वोर्विवाहानुकूलं वयः—

तत्र गर्भतो जन्मतो पञ्चमादारभ्य दशवर्षपर्यन्तं कन्याया विवाहकालः शास्त्रोक्तः[4]। क्वचित्तु द्वादशवर्षपर्यन्तं कन्यामददते प्रायश्चित्तमुक्तं दृश्यते[5]। मनुनापि 'त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्'[6] इत्युक्तम्। अतश्चापि द्वादशो वर्षो विवाहानुकूलं वय उक्तं भवति। तथा च रजोदर्शनात् प्राक् कन्यादानं कर्त्तव्यमेवेति निश्चितोऽवधिर्भवति। रजोदर्शनानन्तरं पितुः[7]प्रायश्चित्तम्। रजोदर्शनावधिश्च क्वचिद्दशमादूर्ध्वमेव[8] क्वचिच्च

---

(१) हस्तोत्तराणि वायव्यं मैत्रं मूलं च रेवती।
रोहिणी सौम्यपित्र्ये च शुभं पाणिग्रहे सदा॥ सं० र० मा० [पृ० ४६३]

(२) मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः॥ नि०सि० [पृ० ६२६]

(३) सर्वाणि पुण्योक्तानि नक्षत्राणि॥ आप० गृ० [१/२ १३]

(४) गर्भाधानाज्जन्मतो वा पञ्चमाब्दात् परं शुभम्।
कुमारीवरणं दानं मेखलाबन्धनं परम्॥ सं० र० मा० [पृ० ४५६]

(५) यमः— प्राप्ते द्वादशके वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितम्॥
सं० म० [पृ० १०२]

(६) म० स्मृ० [९/९४]

(७) नारदः— यावन्तस्त्वृत्तवस्तस्याः समीयुः पतिना विना।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम्॥
सं० प्र० [पृ० ७७०]

(८) यमः—अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत् कन्या तत उर्ध्वं रजस्वला॥ सं० म० [पृ० १०२]

द्वादशादूर्ध्वमुक्तः[1]।

वरस्य च कन्यापेक्षया त्रिगुणं वय[2] इति विष्णुपुराणम्। मनुस्तु त्रिंशद्वर्षेण वरेण[3] द्वादशवार्षिक्याः अष्टादशवार्षिकेण वरेण सहाष्टवर्षायाः पाणिग्रहणमाह। यमस्याप्येतदभिमतम्[4]।

अत्रेदं विचारणीयम् कियत्तारतम्यमुचितं शास्त्रेषु दृष्टं चेति। ऋग्वेदे एतावदुपलभ्यते यत् सुन्दरी अलंकृता कन्या स्वयमेव पुरुषवृन्देषु कमपि स्वेच्छया[5] वृणीते। एतेनेदं प्रतिभाति यत् प्रौढैव विवाहयोग्याऽभिमतेति। कियता वैवाहिकमन्त्रेणापि[6] एतदेव प्रतीयते यत् कन्या प्रौढैव भवति। किन्त्वन्यत्र प्रसंगे ऋग्वेदे एव दृश्यते—इन्द्रः वृद्धाय कक्षीवते अर्भां वृचयानाम्नीं कन्यां प्रादात्[7] इति। अन्यत्रापि ऋग्वेदे[8] युवत्वासादनात् पूर्वमेव कन्या परिणयस्य सङ्केतो लभ्यते।

किन्तु गृह्यसूत्रे[9] प्रायेण सर्वत्रैवाल्पवयस्काया एव विवाह इति निर्दिष्टम्। हिरण्यकेश्यादौ 'नग्निका' विवाहयोग्येति कथितम्। नग्निका च

(१) आपस्तम्बः–प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्त्तते ॥ सं०प्र० [पृ०७७१]
(२) वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् ॥ सं० प्र० [पृ० ७६६]
(३) म० स्मृ० [९/९४]
(४ सं० प्र० [पृ० ७६६]
(५) कियतो योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण।
भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जने चित् ॥
ऋ० वे० [१०/२७.१२]
(६) पूषात्वेतो नयतु हस्तगृह्याऽश्विना त्वा प्रवहतां रथेन।
गृहान् गच्छ गृहपत्नी यथासो वशिनीत्वं विदथमा वदासि। तत्रैव ॥
[१०/८५/२६], अन्येऽपि मन्त्राः [१०/८५/२७] इत्यादयो द्रष्टव्याः।
(७) अद्दा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते।
मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत् ता ते सवनेषु प्रवाच्या ॥
ऋ० वे० [१/५१/१३]
(८) ऋ० वे० [१/१२६/६-७]
(९) ताभ्यामनुज्ञातो भार्यामुपयच्छेत् सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम्। हिरण्यकेशिगृह्यसूत्रम्—[१/१९/२],
बन्धुमतीं कन्यामस्पष्टमैथुनामुपयच्छेत...... यवीयसीं नग्निकां श्रेष्ठाम् ॥ (अत्राष्टावक्रव्याख्याऽपि द्रष्टव्या) मानवगृह्यसूत्रम् [१/७/८],
नग्निका तु श्रेष्ठा ॥ गो० गृ० [३/४/२]

आसन्नर्तवात एव संभोगयोग्येति हिरण्यकेशिगृह्यव्याख्यायां मातृदत्तः[१]। मानवगृह्यसूत्रव्याख्यात्रा अष्टावक्रेण तु अनिरनुभूतयौवनवासना कन्या नग्निकेत्युक्तम्। प्रमाणितं च गृह्यसंग्रहवचनम्[२]। गोभिलभाष्ये भट्टनारायणस्तु यावत् कन्या पुरुषसन्निधौ लज्जयाऽङ्गानि योन्यादीनि नोपगूहेत् तावत् नग्निकेत्यर्थकं वचनमेकमुपन्यस्तवान्[३]। अष्टवर्षादादशमान्नग्निकेति वैखानसस्मार्त्तसूत्रम्[४]। अयमेवार्थः प्रायेण संवर्त्तनापि परिभाषितः[५]। लौगाक्षिरपि 'दशवार्षिकं ब्रह्मचर्यं कुमारीणाम् द्वादशवार्षिकं[६] वा' इति द्वादशवर्षपर्यन्तमेव कन्याविवाहविधिमुक्तवान्। एतावता प्रतिफलितम् इदमेव यत् बाल्यावस्थायामेव कन्याया विवाहः कर्त्तव्य इति। अत्र हेतुं समगृह्णात् संवर्त्तः—

रोमकालेऽथ सम्प्राप्ते सोमो भुंक्तेऽथ कन्यकाम्।
रजो दृष्ट्वा तु गन्धर्वाः कुचौ दृष्ट्वा तु पावकः॥
तस्माद्विवाहयेत् कन्यां यावन्नर्तुमती भवेत्।
विवाहो ह्यष्टवर्षायाः कन्यायास्तु प्रशस्यते[७]॥ इति।

एनमेवार्थं गृह्यासंग्रहकारोऽपि संजग्राह।

तस्माद्बाल्यावस्थायामेव विवाह इति धर्मशास्त्रनिर्णयः। अत्रेदं चिन्तनीयम्—किमिदं युक्तमयुक्तं वेति। वयन्तु नातिसमीचीनमेतं नियमं मन्यामहे। बालाया विवाहस्यास्वास्थ्यजनकत्वात्। क्रियते स्म च पुरापि प्राप्तयौवनाया विवाहो यत्र तत्र। अत एव विवाहमध्ये सत्यार्त्तवे प्रायश्चित्त-

---

(१) नग्निकामासन्नार्तवाम्—मातृदत्तः, हि॰ गृ॰ [१/१९/२]
(२) नग्निकां तु वदेत् कन्यां यावन्नर्तुमती भवेत्।
ऋतुमतीत्वनग्निका तां प्रयच्छेत्वनग्निकाम्॥
अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जिता भवेत् कन्या कुचहीना तु नग्निका॥ गृ॰ सं॰ [२/१७-१८]
(कुचहीना नग्निकेत्यपरां नग्निकामाह—च॰ भाष्यम्)
(३) यावन्न लज्जयाङ्गानि कन्या पुरुषसन्निधौ।
योन्यादीन्युपगूहेत तावद् भवति नग्निका॥ गो॰ गृ॰ ना॰भा॰ [३/४/५]
(४) वै॰ स्मा॰ सू॰ [६/१२]
(५) अष्टवर्षा भवेत् गौरी नवमे नग्निका भवेत्।
दशमे कन्यका प्रोक्ता द्वादशे वृषली मता॥ सं॰ प्र॰ [पृ॰ ७६८]
(६) लौ॰ गृ॰ [१९/२]
(७) गृहस्थरत्नाकरे [पृ॰ ४६], स्मृतिचन्द्रिकायां च [पृ॰ ७९,भा॰ १] उद्धृतः॥

विधानमपि दृश्यते बहुषु[1] गृह्यसूत्रेषु। किञ्च चतुर्थीकर्म सर्वत्रैव गृह्ये प्रायेण[2] दृश्यते। तत्र त्रिरात्रादूर्ध्वं सम्भोगः कर्त्तव्य इत्यायाति[3]। यदि हि कन्याऽप्राप्तयौवनैव स्यात् विवाहकाले कथं त्रिरात्रादूर्ध्वं तद्गमनमुपपद्येत। अतः प्राप्तयौवनाया एव विवाह उचितः।

सम्प्रति वरवध्वोर्वयसि कियान् भेदस्तारतम्यं वेति चिन्तनीयमौचित्यानुसारेण। प्रथममुक्तमेव कन्यावयसः सार्धद्विगुणवयसा त्रिगुणवयसा वा वरेण भाव्यम् इति। रामायणेऽपि लभ्यते यत् विवाहकाले[4] रामः १३ वर्षवयस्कः सीता च ६ वर्षवयस्का आसीत् इति। परमयं श्लोकः प्रक्षिप्त इव प्रतीयते। यतः बालकाण्डे इदं दृश्यते यत् विवाहादनन्तरमेव सीतादयो रामादिना सह संगता[5] इति। एवत् न कथमपि संगच्छते यदि हि ६ वर्षवयस्कैव सीता स्यात्।

वयं तु चिन्तयामः—द्वित्रिपञ्चवर्षादितारतम्यमेव स्वास्थ्यदृष्ट्या युक्तम् अत एव कामसूत्रेऽपि कथितम्[6]—

"तस्मात् कन्यामभिजनोपेतां मातापितृमतीं त्रिवर्षात्
प्रभृतिन्यूनवयसं..........श्रुतवान् शीलयेत्" इति।

---

(१) अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयतं—'पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ। पुमानिन्द्रश्च सूर्यश्च पुमांसं वर्धयेताम्' इति॥ बौ० गृ० [४/१.१०], द्र० वै० स्या० सू० [६/१३], कौ० गृ० [७९/१६]

(२) गो० गृ० [२/५], पा० गृ० [१/११], आप० गृ० [८/१०-११], हि० के० [१/२३-२४]

(३) आश्व० गृ० [१/८'१०], आप० गृ० [८/८६], मा० गृ० [१/१४], काठ० गृ० [३०/१], खा० गृ० [१/४/९], शां० गृ० [१/१७/५]

(४) वा० रा० अरण्यकाण्डम् [४/१०-११]

(५) ततः सीतां महाभागामुर्मिलां च यशस्विनीम्।
कुशध्वजसुते चोभे जगृहुर्नृपयोषितः॥
मङ्गलालापनैर्होमैः शोभिताः क्षौमवाससः।
देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन्॥
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तथा।
रेभिरे मुदिताः सर्वा भर्तृभिः सहिता रहः॥ बा० रा० बालकाण्डम् [७७,२-१४]

(६) का० सू० [३/१.२]

स्मृतिमुक्ताफलेऽपि वर्णाश्रमधर्मनिरूपणप्रसंगे[1] समुद्धृतेनाङ्गिरोवचनेनाप्येतदेव प्रमीयते। अतः तारतम्यातिशयो न श्रेयान् इत्येव युक्तमुत्पश्यामः। सति चैव यन्मन्वादिस्मृतिगृह्यादिवचनोपन्यासानन्तरं तद्विवेचनादिभिरुपसंहृतं संस्कारप्रकाशकृता—

अष्टवर्षान्ता कन्या त्रिगुणवयसा विवाह्या। अष्टवर्षामारभ्य द्वादशवर्षान्ता तत्सार्धद्विगुणवयसा द्वादशवर्षामारभ्य षोडशवर्षपर्यन्ता तदष्टमांशन्यूनद्विगुणवयसा, अनाश्रयित्वा दिना धर्मे तु सीदति सति सत्वरः मन्वाद्युक्तप्रामाण्यान्न्यूनवयस्केनापि न्यूनवयस्कापि विवाह्येति तदनादरणीयमेवेति विवेचका विवेचयन्तु ॥

**अथ कन्यालक्षणानि—**

तत्र 'लक्षण्यां स्त्रियमुद्वहेत्[2]' इत्यत्राविवाद एव सर्वेषां स्मृतिगृह्यसूत्रकाराणाम्। एषु च लक्षणेषु कुलं सर्वतोऽधिकं परीक्षणीयम्[3]। सन्ततेः कुलानुरूपत्वात्[4] उत्तमात् कुलादेव कन्या ग्राह्या नाधमात्[5]। उत्तमानि

---

(१) वयोऽधिकां नोपयच्छेत् दीर्घां कन्यां स्वदेहतः।
स्ववर्षात् द्वित्रिपञ्चादिन्यूनां कन्यां समुद्वहेत् ॥ स्मृ० मु० [पृ० १२५]
अत्र स्पष्टमेव दृश्यते यत् स्वास्थ्यदृष्ट्यैवायं निर्णयः कृतोऽङ्गिरसा। कथमन्यथा 'स्वदेहतो दीर्घां कन्यां नोपयच्छेत्' इति निषेधः संगतः स्याद्? एतेनेदमपि सूचितं भवति यत् धर्मशास्त्रीया व्यवस्था नैव कथमपि चिकित्साशास्त्रोक्तव्यवस्था विपरीता शस्यत इति।

(२) अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥ या० स्मृ० [१।५२]
दक्षः— समावर्त्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत् ॥ सं० प्र० [पृ० ५८६]
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ म० स्मृ० [३/४]

(३) कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति ॥ आश्व० गृ० [१/५ १]
विष्णुः—ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः ॥ सं० प्र० [पृ० ५८७]

(४) कुलानुरूपाः प्रजाः सम्भवन्ति ॥ हारीतः ॥
पितुर्वा भजते शीलं मातुर्वोभयमेव वा।
न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥ म० स्मृ० [१०/५९]
व्यासः—मातुलान् भजते पुत्रः कन्यका भजते पितॄन्।
यथाशीला भवेन्माता तथाशीला भवेन्नृप ॥ सं० प्र० [पृ० ५८९]

(५) उत्तमैरुत्तमैर्नित्यं सम्बन्धाना चरेदिह।
निनीषुः कुलमुत्कर्षमपमानवतां त्यजेत् ॥ म० स्मृ० [४/२४४]

कुलानि तु तान्येव यत्रोत्पन्नाः लोकाः सुकृतिनः श्रुतिस्मृत्यनुयायिनः सुब्रह्मचर्याश्च[1]। अत एव च दशविख्यातं कुलं महदुक्तं याज्ञवल्क्येनापि[2]। आश्वलायनस्याप्येतदभिमतम्[3]।

नीचानि कुलानि पुनः तानि यत्रोत्पन्नाः चौर्यवृत्तयः, क्लीवाः, पिशुनाः, नास्तिकाचाराः, अपवृत्तिजीवनाः, कुरूपाः, वीरद्रोहिणः, राजापराधिनः, वेदानध्यायिनः, अप्रजाः, स्त्रीमात्रप्रजाः, विधवाधिक्ययुक्ताश्च[4]।

महाकुलेष्वपि दशकुलानि वर्ज्यानि—हीनक्रियाणि, निष्पुरुषाणि, वेदाध्ययनशून्यानि, प्ररूढरोमसर्वाङ्गानि, अर्शरोगयुक्तानि, क्षयरोगाक्रान्तानि, आमयरोगसम्बद्धानि, व्यपस्मारयुक्तानि, श्वित्ररोगयुक्तानि, कुष्ठरोगयुतानि च[5]। एते हि सञ्चारिणो रोगाः अपत्यं

---

(१) विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शिनः।
अविप्लुतब्रह्मचर्या महाकुलसमन्विताः॥
सन्तुष्टाः सज्जनहिताः साधवस्तत्त्वदर्शिनः।
रागद्वेषामर्षलोभमानमोहसमन्विताः॥
अक्रोधनाः सुप्रसादाः कार्याः सम्बन्धिनः सदा॥ सं० प्र० [पृ० ५८९]

(२) दशपूरुषविख्यातात् श्रोत्रियाणां महाकुलात्॥ या० स्मृ० [१/५४]

(३) ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः पितृतश्चैके॥ आश्व श्रौ० [९/३]

(४) ये स्तेनाः पिशुनाः क्लीवाः ये च नास्तिकवृत्तयः।
विकर्मणा च जीवन्तो विकृताकृतयस्तथा॥
प्रवृद्धवैराः शूरैर्ये राजकिल्विषिणस्तथा।
ब्रह्मस्वादननित्याश्च कदर्याश्च विगर्हिताः॥
अप्रजायेषु वंशेषु स्त्रीप्रजाप्रसवास्तथा।
पतिघ्न्यश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत्॥ सं० प्र० [पृ० ५८७-८८]

(५) महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत्॥
हीनक्रियं निष्पुरुषं निश्छन्दो रामशार्शसम्।
क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च॥ म० स्मृ० [३/६-७]

यमस्तु चतुर्दशवर्ज्यान्याह—चतुर्दश कुलानीमान्यविवाह्यानि धारयेत्॥
अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत्।
अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत्॥
हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च।
श्वित्रिकुष्ठिकुलादीनां कुर्याद्द्विपरिवर्जनम्॥
सदाकामकुलं वर्ज्यमागमानां च यत् कुलम्।
अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत्॥ सं० प्र० [५८८]

संक्रमन्ते[1]। अत एवैतानि यत्नेन परिवर्जनीयानि।

एतत्सर्वं यद्यपि कन्याकुलमधिकृत्यैव विशेषेण शास्त्रे निगदितम् तथापि वरकुलविषयकमपि ज्ञातव्यमेव, युक्तिसाम्यात्। वरकुलं दुष्टं सत् कन्याकुलम् इवापत्यं दूषयत्येव। तथा चापत्यं मा दुष्टं भूत् इत्येतदर्थं क्रियमाणं कुलपरीक्षणं वरवध्वोः सममेवेति तत्त्वम् ॥

कुलातिरिक्तान्यपि कन्यकालक्षणानि शास्त्रे वर्णितानि। तानि द्विप्रकाराणि—वाह्यानि आभ्यन्तराणि च।

**तत्र वाह्यानि—**

दानेनोपभोगेन वा पुरुषान्तरापरिगृहीतत्वम्, कमनीयत्वम्, असपिण्डत्वम्, स्वापेक्षया (=वरापेक्षया) अल्पवयस्त्वं, रोगशून्यत्वम्, भ्रातृमत्वम्, असमानार्षगोत्रजत्वं चेति याज्ञवल्क्य[2]। अविकलाङ्गत्वम्, मधुरसुखोद्यनामवत्वम्, हंसादिसदृशरुचिरगतिमत्वम्, अनतिदीर्घलोमदशनवत्वम्, कोमलाङ्गत्वं चेति मनुः[3]। हंसस्वनत्वम्, मेघश्यामत्वम्, मधुसदृशवर्णविशिष्टनेत्रवत्वम् च शातातप[4] आह। मृगाक्षित्वम्, मृगगुह्यत्वम्, मृगग्रीवत्वम्, मृगोदरीत्वम्, हंसादिगतिमत्वम्, मृदुभाषित्वम्, मृदुपादतलवत्वम्, कुमुदवर्णत्वं च नारदः[5] प्राह। कामसूत्रे तु निगदिसम्–'कन्यामभिजनोपेतां मातापितृमतीं त्रिवर्षात् प्रभृतिन्यूनवयसां श्लाघ्याचारे धनवति पक्षवति कुले सम्बन्धिप्रिये सम्बन्धिभिराकुले प्रसूतां प्रभूतमातापितृपक्षां रूपशीललक्षणसम्पन्नामन्यूनाधिकाविनष्टदन्तनखकर्णकेशाक्षिस्तनीम् अरोगिप्रकृतिशरीरां तथाविध एव

---

(१) स्फीतादपि न सञ्चारिरोगदोषकुलोद्भवात् ॥ या० स्मृ० [१/५४]

(२) अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ या० स्मृ० [१/५२-५३]

(३) अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥ म० स्मृ० [३/१०]

(४) हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम्।
तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते ॥ सं० प्र० [पृ० ७३१]

(५) मृगाक्षी मृगगुह्या च मृगग्रीवा मृगोदरी।
हंसहस्तिगतिर्नारी राजपत्नी भविष्यति ॥
मृदुभाषा च या नारी मृदुपादतला तथा।
नारी कुमुदवर्णाभा राजपत्नी भविष्यति ॥ सं० र० मा० [पृ० ५०९]

श्रुतवान् शीलयेत्[1] इति। भारद्वाजीये तु गृह्यसूत्रे[2] धनं रूपं प्रज्ञा कुलमिति चतुष्टयम्, मानवगृह्यसूत्रे च[3] धनं रूपं विद्या प्रज्ञा कुलं चेति पञ्चकमुपात्तम्। 'बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेत'[4] इत्यभिहितम् आपस्तम्बेन स्वगृह्यसूत्रे। अत्र सर्वेषां वचनानां पर्यालोचनया प्रतीयते यत् बाह्यलक्षणेषु सर्वेषु सौन्दर्यमतिमहत्त्वपूर्णं गण्यते लक्षणम्। युक्तमप्येतत्। विवाहस्य जीवनपर्यन्तं पत्नीसम्बन्धजनकत्वात् तत्र पत्न्या मनोहरत्वं भवेत्। अत एव याज्ञवल्क्येनापि अनन्यपूर्विकामित्यनन्तरं कान्तामित्येवोक्तं परिहायेतराणि लक्षणानि। अत एवाहापस्तम्बोऽपि "यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः, नेतरदाद्रियेतेत्येके"[5] इति प्राह। अत्रैके इत्युपादानं स्वमते कुलस्य सर्वातिशायित्वादेव।

एवं निरूपितानि बाह्यानि कन्यालक्षणानि।

अथाभ्यन्तराणि—

अत्रापस्तम्ब आह[6]—यदि कन्या तदभिभावकाश्च सम्मताः स्युस्तर्हि व्रीहियवादिनानाबीजानि, वेद्याः आहृतान् पांसून्, सस्यसम्पन्नात् क्षेत्रात् लोष्टम्, गोमयम्, श्मशानादाहृतं च लोष्टम् इति पञ्च वस्तूनि पृथक् पृथक् मृत्पिण्डेषु प्रतिच्छन्नानि कृत्वा एकस्मिन् भाजने सर्वाणि निधाय कन्यां समीपे कृत्वा तां ब्रूयात्—'एषां पिण्डानामेकमुपस्पृश' इति। तत्र बीजयुक्तमृत्पिण्डस्पर्शने प्रजावृद्धिम्, वेदीपांसुयुक्तस्पर्शने यज्ञसमृद्धिम्, क्षेत्रलोष्टसंस्पर्शने सस्यानां समुन्नतिम्, गोमययुक्तस्पर्शने पशूनां समृद्धिम्, श्मशानलोष्टयुक्तपिण्डोपस्पर्शने त्वनिष्टम्, तस्य जायापत्योरन्यतरहानिसूचकत्वात् इति।

---

(१) का० सू० [३/१/३]

(२) भा० गृ० [१/११]

(३) भा० गृ० [१/७/६-७]

(४) आप० गृ० [१/३/१६], तु० आश्व० गृ० [१/५/३]

(५) आप० गृ० [१/३/२१]

(६) शक्तिविषये द्रव्याण्युपच्छन्नानि उपनिधाय ब्रूयादुपस्पृश इति। नानाबीजानि संसृष्टानि वेद्याः पांसून् क्षेत्रात् लोष्टं शकृत् श्मशानलोष्टमिति। पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिः। उत्तमं परिचक्षते॥

आप० गृ० [१/३/१५-१८]

अत्र श्मशानलोष्टस्पर्शनं निषिद्धम्, जायापत्योरन्यतरमरणलिङ्गत्वादियुक्तं सुदर्शनानुरोधेन। वस्तुतस्तु पत्युरेव मरणलिङ्गत्वमभ्युपगन्तुमुचितम्, आश्वलायनेन 'श्मशानात् पतिघ्नी' ( आश्व० गृ० [१/५ ६] ) इत्युक्तेः॥

आश्वलायनस्तु प्रकारान्तरमाह—सस्यसम्पन्नात् क्षेत्रात्, गोष्ठात्, निर्वृत्तकर्मणो वेद्याः, अशोष्यात् ह्रदात्, द्यूतस्थानात्, चतुष्पथात्, बीजप्ररोहा-योग्यभूमेः, श्मशानाच्च मृद आहृत्य अष्टौ पिण्डान् विदध्यात्। ततश्च 'ऋतमग्रे प्रथमं जज्ञे' इति मन्त्रेण पिण्डानभिमन्त्र्य कन्यकां ब्रूयात्—'एषामेकं गृहाण' इति। अथ सा यदि क्षेत्रादाहृताया मृदः पिण्डं स्पृशेत् तर्हि तस्याः प्रजा अन्नवती स्यात् इति, गोष्ठादाहृतं पिण्डं स्पृशेत् तर्हि पशुमती स्यात्, यदि वेद्या आहृतं पिण्डं स्पृशेत्तर्हि ब्रह्मवर्चस्विनी स्यात्, ह्रदात् आहृतं पिण्डं यदि स्पृशेत्तर्हि सर्वसम्पन्ना स्यात्, यदि द्यूतस्थानादाहृतं पिण्डं स्पृशेत्तर्हि धूर्त्ता स्यात्, यदि चतुष्पथादाहृतं पिण्डं स्पृशेत्तर्हि स्वैरिणी, ऊषरभूमेराहृतं पिण्डं यदि स्पृशेत्तर्हि दरिद्रा (=अधन्या) स्यात्, यदि श्मशानादाहृतं पिण्डं स्पृशेत्तर्हि पतिघ्नी स्यादिति फलनिर्णयः[1] कार्यः। शौनकेनाप्ययमेवार्थः स्पष्टीकृतः। परन्त्वनेन कश्चन विशेषोऽप्युदितः—

ताभिर्गृहीं विधायाष्टौ पिण्डानन्योऽन्यतः समान्।
तिलपत्रैकदेशेषु मृदां संज्ञाः पृथक् पृथक्॥
लिखित्वा ताश्च पिण्डानामन्तर्धाय यथाक्रमम्।
शुद्धपात्रे निधायैतान् गन्धाद्यैरर्चयेदथ॥ इति वदता, अयं

च विशेषो नाश्वलायनविरुद्धः, अपि तु तत्पूरक एवास्ति, कथमन्यथा एकपात्र-निक्षिप्तेषु पिण्डेषु पश्चाद्विवेकः स्यात् कः पिण्डः कस्या मृदः ? इति। अतः आश्वलायनावगमार्थमुपयुक्तमेव शौनकवचनम् मन्तव्यम्।

---

(१) दुर्विज्ञेयानि लक्षणानि इति। अष्टौ पिण्डान् कृत्वा "ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम्। यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद् दृश्यताम्" इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयात्—'एषामेकं गृहाण' इति। क्षेत्राच्चेदुभयतः सस्यात् गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्, गोष्ठात् पशुमती, वेदिपुरीषात् ब्रह्मवर्चस्विनी, अविदासिनो ह्रदात् सर्वसम्पन्ना, देवनात् कितविनी, चतुष्पथाद् द्विप्रव्राजिनी, ईरिणात् अधन्या, श्मशानात् पतिघ्नी॥ आश्व० गृ० [१/५ ४-६]

अत्र 'अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषम्' इत्यानन्दाश्रममुद्रित-नारायणवृत्तिपाठोऽशुद्धः। अत्र 'अप''''''या वेदिस्तद्वेदिपुरीषम्' इत्युचितम्।

गोभिलेन[1] तु कश्चिदंशतो भिन्न एव पन्थाः प्रदर्शितः–यदि स्त्रीलक्षणविदो भावे तत्लक्षणपरिज्ञानं स्यात्तर्हि वेद्याः, कृष्टक्षेत्रात्, अविदासिनो ह्रदात्, गोष्ठात्, चतुष्पथात्, द्यूतस्थानात्, श्मशानात्, ऊषरभूमेः मृद आहृत्य पृथक् पृथक् समान् किञ्चित्परिचायकचिह्नयुतान् अष्टौ पिण्डान् एकं च सर्वासां मृदां सम्मिश्रणेनेति सङ्कलनया नव पिण्डान्[2] निर्माय स्वहस्ते निधाय कन्यायाः समीपे स्थापयेत 'ऋतमेव प्रथममृतम्' इति मन्त्रेण। ततश्च कन्याया नाम गृहीत्वा 'एषामेकं गृहाण' इति तां ब्रूयात्। तत्र यदि सा प्रथमेषु चतुर्षु पिण्डेषु अन्यतमं गृह्णीयात् तर्हि तामुपयच्छेत्। अन्येषु चतुर्षु कस्मिंश्चिद् गृहीते सति नोपयच्छेदेव। नवमे समस्तनिर्मित तु पिण्डे तु शुभाशुभयोः मृदोः मिश्रणात विकल्पः। फलानि विशिष्य तद्भाष्यकारो नारायणः प्रतिपादयति शाखान्तरोक्तवचनैः—

गृह्णाना वेदिपिण्डन्तु सुतान् सूतेऽग्निहोत्रिणः।
द्वितीयेन् गृहीतेन सुतान् सूते कृषीवलान्॥
सर्वकामसमृद्धांश्च तृतीयस्य परिग्रहात्।
गोष्ठपिण्डग्रहाच्चापि भोगिनः सुखिनस्तथा॥
इतश्चेतश्च गन्तारः पञ्चमेनास्थिताः सुताः।
षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः॥
श्मशानपिण्डग्रहणाद्विधवा जायते ध्रुवम्।
वन्ध्या वा विधवा वा स्यादष्टमग्रहणादपि॥
मिश्रमेतद् भवेत् सर्वं यतः पूर्वोदितं फलम्।
नवमस्य ग्रहस्तस्मात् शुभो वा यदि वाशुभः॥ इति।

---

(१) तद्लाभे पिण्डान्। वेद्याः सीताया ह्रदात् गोष्ठात् चतुष्पथादादेवनात् आदहनादोरिणात् सम्भार्यं नवमम्। समान् कृतलक्षणान्। पाणावाधाय कुमार्या उपनामयेत्—"ऋतमेव प्रथममृतं नात्येति कश्चनर्त्तं इयं पृथिवी श्रिता सर्वमिदमसौ भूयात्" इति तस्या नाम गृहाणेति ब्रूयात्। पूर्वेषां चतुर्णां गृह्णन्तीम् उपयच्छेत्। संभार्यमपित्वेके॥ गो॰गृ॰ [२७१ ३-८]॥

(२) गो॰ गृ॰ ना॰ भा॰ [२/१/८], गृ॰ सं॰ भा॰ [पृ॰ ७५]

गृह्यासंग्रहे तु केनचिद् भेदेन सह फलानि निर्दिष्टानि—

वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः ।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती ॥
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया ।
श्मशाने म्रियते भर्त्ता वन्ध्या भवति चोषरे ॥
नवमे सर्व एवैते कन्यात्राः परिगृह्यन्ते ॥ इति ।

तदत्रातीन्द्रियार्थे प्रातिभैकगम्ये नास्माकं कृते किमपि विवेचनीयमवशिष्यते यस्य चर्चा क्रियेतेति हेतोः मौनमेवाश्रयामः ।

इत्थं निरूपितेभ्यो रहिता कन्या नैव परिणेयेति यद्यपि सामान्यतः प्रसिध्यति गुणनिरूपणेनैव तथापि कतिपयानां गुणानां गुणाभाव मात्रज्ञानाधीनज्ञानकत्वाभावात्तेऽपि पृथक् प्रदर्श्यन्ते । एतावता स्पष्टा हि प्रतिपत्तिर्भवतिः—

**वर्जनीयाः कन्याः—**

तत्र कुलानुसारेण ग्राह्याभ्यो भिन्नाः वर्णनीया इत्युक्तमेव पूर्वम् । सम्प्रति उच्चकुलप्रसूतत्वेऽपि ये गुणाः तदग्रहणकारणीभूतास्तानुपस्थापयामः–

'नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्[1] ॥
नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ॥" इति मनुः

प्राह । यमश्चाह—

ह्रस्वां दीर्घां कृशां स्थूलां पिङ्गाक्षीं गौरपाण्डुराम् ।
न पूज्या न च सेव्यास्ता नाशमृत्युकराः स्त्रियः[2] ॥ इति ।

**विष्णुपुराणेऽप्युक्तम्—**

न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घरस्वरां काकुवाक्यां काकस्वरां न च ॥
नानिमेषेक्षणां तद्वत्क्षीणाक्षीं नोद्वहेत् बुधः ।
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ॥
गण्डयोः कूपकौ यस्या भवतस्तां च नोद्वहेत् ।
नातिरुक्षच्छविं पाण्डुं न रुजामरुणेक्षणाम् ॥
अपीनहस्तपादां च न कन्यामुद्वहेद्बुधः ।
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवाम् ॥
नातिच्छिद्रदशनां च न करालमुखीं तथा[3] ॥ इति ।

---

(१) म० स्मृ० [३/८]
(२) सं० प्र० [पृ० ७३१]
(३) वि० पु० [३/१०/१८-२२]

आपस्तम्बस्तु प्राह—'दत्तां, गुप्तां, द्योताम्, ऋषभाम्, शरभाम्, विनतां, विकटां, मुण्डां, मण्डूषिकां, साङ्कारिकां, रातां, पालीं, मित्रां, स्वनुजां, वर्षकारीं च वर्जयेत्'[1] इति। अत्र दत्ता वाग्दत्तेति हरदत्तः, वाग्दत्ता उदकपूर्वं प्रतिपादिता वेति सुदर्शनः। एतच्च 'दत्तामपि हरेत् पूर्वां श्रेयांश्चेद्वर आव्रजेत्' इत्यपवाद-विषयं प्रकल्प्य। गुप्ता प्रयत्नेन तथा संरक्ष्यमाणा यथा तस्यां दुर्लक्षणादि-सम्भावना भवेत्। द्योता पिङ्गाक्षी, बभ्रुकेशी वा विषमदृष्टिर्वा। ऋषभा ऋषभतुल्यशरीरादियुक्ता। शरभा अतिदर्शनीया। तस्यां हि जारकामविषयत्व-सम्भावना। अथवा निष्प्रभा; सर्वनीललोम्नी वा। विनता कुब्जा। विकटा विकटजङ्घा विस्तीर्णजङ्घा वा। मुण्डा अपनीतकेशा अजातकेशा वा। मण्डूषिका अल्पकाया, मण्डूकतुल्यत्वक्सहिता वा। वामनाङ्गा दग्धाङ्गा वा। साङ्कारिका गर्भावस्थायां यस्यां सत्यां माता भर्तुरस्थिसंचयनकारिणी स्यात् सा। राता रमणशीला क्रीडाप्रिया ऋतुस्नाता वा। पाली वत्सक्षेत्रादिपालिका। मित्रा बहुमित्रा। स्वनुजा शोभना अनुजा यस्याः सा तथा हि सति कदाचिद्भ्रंशः सम्भाव्यते। वरजन्मवर्ष एव पश्चादुत्पन्ना समवयस्का वरेण वा। वर्षकारी वर्षेणाधिका वराज्ज्येष्ठा। एतादृशीं कन्यां नोपयच्छेत्।

अधुना नामाश्रित्य क्रियमाणो निषेधो विवेचनीयः। मनुराह—

नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्[2] ॥ इति।

अत्र ऋक्षं नक्षत्रम्, तथा च रेवतीत्यादिनाम्नीमित्यर्थः। अन्त्यो म्लेच्छः, तथा च म्लेच्छप्रसिद्धनामयुक्ताम्। बौधायनगृह्यशेषसूत्रेऽपि[3]—'नक्षत्रनामाः, नदीनामाः, वृक्षनामाः, पर्वतनामाः, प्रेष्यनामाः, पक्षिनामाः, पिशाचनामाश्च गर्हिताः, सर्वाश्चरेफलकारोपान्ताः (माला, सुवेला, शर्वरी इत्यादिनामाः) वरणे परिवर्जयेत्' इति। 'नक्षत्रनामावृक्षनामानदीनामाश्च गर्हिताः। सर्वाश्च रेफलकारोपान्ताः वरणे परिवर्जयेत्'[4] इत्यापस्तम्बोऽप्याह॥ सत्यपि चैवंविध-दोषाभावे सुप्ता रुदती निष्क्रान्ता वा वरणकाले या सापि वर्जनीयैव[5]।

---

(१) आप० गृ० [१/३/१२]
(२) म० स्मृ० [३/९]
(३) बौ० गृ० शे० [२ ४/५]
(४) आश्व० गृ० [१/३/१३-१४]
(५) तत्रैव [१/३/११]

**अथ वरगुणाः—**

आश्वलायनेनोक्तम्— 'बुद्धिमते कन्या देया[1]' इति। सत्कुलोत्पन्नेन सच्चरित्रेण शुभगुणेन ज्ञानवता स्वस्थेन च वरेण[2] भाव्यम्। यमस्त्वाह—कुलं शीलं वपुः यशः विद्या वित्तम् सनाथतेति सप्त गुणान् परीक्ष्य कन्या देयेति[3]। जातिर्विद्या युवत्वम् वलम् स्वास्थ्यम् अन्यावलम्वनम (सकुटुम्बत्वम्) अर्थित्वम् धनं च परीक्ष्य कन्या देयेति वृद्धपाराशरः। गुणसम्पन्नाय वराय[4] कन्या देयेति सारम्।

उन्मत्तत्वं पतितत्वं कुष्ठिता नपुंसकता समगोत्रता अन्धता बधिरता अपस्मारः इत्येते वरस्य वध्वाश्च दोषाः कात्यायननिर्दिष्टाः[5]। नारदेनापि[6] उन्मत्तत्वपतितत्वक्लीवत्वदुर्भगत्वबान्धवशून्यत्वानि वरवध्वोर्दोषा इत्युक्तम्। महाभारते तु धनविद्ययोर्महानादरो दृश्यते[7]। तथा च धनविद्याभ्यां रहितत्वमपि वरवध्वोर्दोष एव।

उक्तात् प्रमाणात् नपुंसको न विवाहाधिकारीति स्पष्टमेव यद्यपि सिध्यति तथापि कदाचित् नपुंसकस्यापि विवाहो भवति स्मेति विज्ञायते।

---

(१) आश्व० गृ० [१/५/२]

(२) दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ॥ बौ० ध० [४/१/२०]

(३) कुलं च शीलं च वपुर्यशश्च विद्यां च वित्तं च सनाथतां च।
एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥
स्मृ० च० [पृ० ७८, भाग १]

(४) गुणवते कन्या प्रतिपादनीयेत्ययं तावत् प्रथमः कल्पः ॥
अ० शा० [४ अं०]

(५) उन्मत्तः पतितः कुष्ठी तथा षण्ढः स्वगोत्रजः।
चक्षुःश्रोत्रविहीनश्च तथाऽपस्मारदूषितः ॥
वरदोषाः स्मृताः ह्येते कन्यादोषाश्च कीर्त्तिताः ॥
स्मृ० च० [पृ० ५९, भा० १]

(६) उन्मत्तः पतितः क्लीवो दुर्भगस्त्यक्तबान्धवः।
कन्यादोषौ च यौ पूर्वावेष दोषगणो वरे ॥ नारदः ॥
सं० र० मा० [पृ० ५४०]

(७) म० भा० ( उद्योगपर्व ) [३३/११७], ( आदिपर्व ) [१३१/१०] ॥

स च क्षेत्रजं पुत्रमुत्पादयितु[१] मन्वादिभिरधिकृतोऽपि। स च क्षेत्रजः पुत्रः औरस इव धनादिहर इत्यपि तत्र तत्र शास्त्रे स्पष्टमेव निर्दिष्टम् वर्त्तते[२]।

उक्तं च वरवध्वोः परीक्षणमत्यावश्यकम्। अन्यथा अयोग्यसम्बन्धे जीवनपर्यन्तं कष्टम् अनुभूयते उभाभ्याम्। अत एव शास्त्रमपि इत्थमेवाह। शास्त्रं हि लोकानुग्राहकं न किमप्येवंविधमतिदिशेत् येन लोकापकारः सम्भाव्येत। एतत्सर्वमुदितपूर्वमावेदयति यत् कियानाग्रहो विद्यते स्म वैवाहिकेषु गुणपरीक्षणेषु। अद्यत्वे हि समुपेक्षितत्वादेतेषां सर्वेषां कीदृशोऽनर्थंकरः परिणामोऽनुभूयते दम्पतीभ्यां तद्बन्धुवान्धवैश्चेति तु सर्वैरनुभूयते एव प्रतिक्षणम्।

## अधुना जातिमधिकृत्य किञ्चिद्विविच्यते—

तत्र सवर्णविवाहः सर्वेषां कृते प्रशस्त उक्तः। विशेषेण द्विजातीनाम्[३]। अत एव याज्ञवल्क्येन सत्यां सवर्णायां पत्न्यां सैव धर्माधिकारिणी नेतरा[४] इत्युक्तम्। कामतस्तु विवाहे करणीये विप्रस्य क्षत्रियवैश्यजातीये अपि भार्ये, क्षत्रियस्य क्षत्रियया सह वैश्यशूद्रे अपि, वैश्यस्य वैश्यया सह शूद्राऽपि, शूद्रस्य तु शूद्रैवेत्याहुः[५]। यद्यपि वसिष्ठेन "शूद्रामप्येके मन्त्रवर्जम्"[६] इत्युक्त्वा ब्राह्मणस्य शूद्रापि भार्येत्युक्तम्, मनुनापि 'ताश्च स्वा चाग्रजन्मनः' इत्यनेनैत-

---

(१) यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथञ्चन।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति॥ म० स्मृ० [९/२०३]

(२) औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः॥ या० स्मृ० [२/१४१]
(तत्र क्लीवस्य क्षेत्रजः पुत्रः सम्भवत्यन्येषान्तु औरसा अपि-मिताक्षरा)

(३) सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि॥ म० स्मृ० [३/१२]

(४) सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्॥ या० स्मृ० [१/८८]
(सवर्णायां सत्यामन्यामसवर्णां नैव धर्मकार्यं कारयेत्—मिताक्षरा)

(५) कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः॥
शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृता।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः॥ म० स्मृ०[३/१२-१३]

(६) व० ध० [१/२५]

देवाभिहितम् तथापि नेदमुचितम् । अतएव मनुनैवास्य महान् निन्दार्थवादः[१] कृतः ।

अनुलोमप्रतिलोमविवाहौ प्रकृत्य विशेषेणोच्यते—

यद्यपि ऋग्वेदाद्यनुशीलनेन प्रतीयते यत्तदानीमपि जातिव्यवस्थाऽऽसीदेव तथापि तदानीम् भिन्नजातीयायाः कन्यायाः परिणयः तेभ्यस्ताभ्यो वा भोजनादिश्च न तथा प्रतिषिद्धः प्रतीयते यथा मध्ययुगे तदुत्तरभाविनि । ऋग्वेदे[२] श्रूयते—श्यावाश्वो नाम ब्राह्मणजातीयर्षिः रथवीतिदार्भ्यस्य राज्ञः पुत्र्या विवाहमकरोत् इति । शतपथब्राह्मणेऽपि[३] श्रूयते—च्यवनस्य ऋषेरुद्वाहः राज्ञः शर्यातस्य पुत्र्या सुकन्यया बभूवेति । वाजसनेयिसंहितायामपि[४] वैश्यजातीयस्त्रिया जनितस्य पुत्रस्य राज्याभिषेकं राजा न करोतीति । एतावतासवर्णविवाहस्तदानीं भवति स्मेति प्रतीतमेव । गौतमधर्मसूत्रे[५] मनुस्मृतौ[६] याज्ञवल्क्ये[७] बौधायनधर्मसूत्रे[८] विष्णुधर्मसूत्रे[९] पारस्करगृह्यसूत्रे[१०] वसिष्ठधर्मसूत्रे[११] च असवर्णविवाहः अनुलोमविवाहो निर्दिष्टः । परन्तु सर्वत्रैव साक्षात् परम्परया वा निन्दित एवायं विवाहः, जात्यपकर्षकरत्वात् । अत एव विष्णुधर्मसूत्रेऽपि ईदृशविवाहे कामे सन्तुष्टेऽपि धार्मिकत्वं न प्राप्यमेवेत्युक्तम् । मनुयाज्ञवल्क्याभ्यामपि ब्राह्मणस्य शूद्रया विवाहः संकेतितः

---

(१) न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्राद्दारोपसंग्रहः ॥ म० स्मृ० [३/१४], अन्येऽपि श्लोकाः द्रष्टव्या अत्र—[३/१५-१९]

(२) ऋ० वे० [५/६१/१७-१९]
(३) श० प० ब्रा० [४/१/५]
(४) वा० सं० [२६/३०]
(५) गौ० ध० [१/४/१४-२३]
(६) म० स्मृ० [३/१३]
(७) या० स्मृ० [१ ६१]
(८) बौ० ध० [१/८/२]
(९) वि० ध० सू० [२४/१-४]
(१०) पा० गृ० [१/४]
(११) व० ध० सू० [१/२५]

परन्त्वस्य निन्दा[1] दायवैषम्यं[2] च वर्णितम्। अतो न समर्थित एवेदृशो विवाहस्ताभ्यामपि, परन्तु तयोः काले भवति स्मेदृशो विवाह इति तु सुस्पष्टमेव।

अभिलेखेष्वपि अन्तर्जातीयविवाहस्य चर्चा दृश्यते। प्रभावतीगुप्ताया अभिलेखादिदं ज्ञायते यत् सा गुप्तसम्राजः चन्द्रगुप्तस्य द्वितीयस्य पुत्री आसीत्। तस्या विवाहः वाकाटककुलोत्पन्नेन राज्ञा रुद्रसेनेन समजायत। वाकाटकाश्च विप्रा एव आसन्। अयं चाभिलेखः पञ्चम्याः शताब्द्या अस्ति। तालगुण्ड-स्तम्भलेखादपि प्रतीयते यत् कदम्बकुलपूर्वपुरुषस्य मयूरशर्मणः, यस्य कुलजाः पश्चात् वर्मेत्युपाधिभाजः समजायन्त क्षत्रकर्मकर्तृत्वेन, परस्तात् स्वां पुत्रीं गुप्तकुलादिसम्बद्धेभ्यो राजभ्यो ददति स्म। यशोवर्मविष्णुवर्धनयोः घटोत्क-चाभिलेखादपि प्रमीयते यत् वाकाटककुलीनस्य राज्ञो देवसेनस्य मन्त्री सोम-शर्मा ब्राह्मणः ब्राह्मणीं क्षत्रियां चोपयेमे। लोकनाथस्य तिप्पेरा-ताम्रपत्रे लिखितमस्ति यत् तस्य पूर्वजा भरद्वाजगोत्रीया आसन्, तस्य मातामहः केशवपारशवः ब्राह्मणाच्छूद्रायामुत्पन्नः आसीत्। विजयनगराधिपस्य राज्ञो बुक्कस्य (१२६८-१२९८ ई०) प्रथमस्य पुत्र्या विरूपादेव्याः परिणयः बोमण्ण-वोदेयनामकेन ब्राह्मणेन सह समपद्यतेति[3]।

संस्कृतमहाकाव्येष्वपि असवर्णविवाहस्यानेकान्युदाहरणानि सन्ति। यथा कालत्यग्निमित्रयोः। परन्तु कालक्रमेण अयं विवाहो वर्जितत्वेनैव स्वीकृतः। अत एवाधुनिकेषु निबन्धग्रन्थेषु धर्मसूत्रादिषु चास्य प्रायेण निन्दैव सर्वत्र लभ्यते।

### अथ सवर्णविवाहे सङ्कोचः—

सवर्णास्वपि मातुः पुनरसपिण्डा सगोत्रा च पितुरपि असपिण्डा असगोत्रा च कन्यैव वोढव्या[4]। एवमेवासमानप्रवरत्वमप्यावश्यकम्। अत एव याज्ञवल्क्येन सामान्येनैव—

---

(१) म० स्मृ० [३/१४-१९]
(२) म० स्मृ० [९/१५२-५३], या० स्मृ० [२/१२५]
(३) धर्मशास्त्र का इतिहास [पृ० २७८, भा० १]
(४) असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥ म० स्मृ० [३/५]

अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्[१] ॥

इत्युक्तम्, व्याख्यातं चैवमेव मिताक्षरादिषु । गौतमेनापि 'असमानप्रवरैर्विवाहः'[२] इति सामान्येनैव निर्देशः कृतः ।

**अथ सापिण्ड्यविचारः—**

सापिण्ड्यं तु याज्ञवल्क्येनोक्तम्—
"पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा"[३] इति ।

मनुरप्याह—
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने[४] ॥ इति ।

गौतमेनापि याज्ञवल्क्याभिन्नमेव मतमुपन्यस्तम्[५] ।

अत्र सापिण्ड्यविषये शास्त्रकाराणां महान् प्रपञ्चो यद्यपि विद्यते तथापि मिताक्षरादायभागयोर्मते प्रायेण तत्र तत्र प्रतिष्ठिते । अनयोरपि मतभेदो वर्त्तत एव यत्र कुत्रचित् । तत्र मिताक्षराकाराणामयमाशयः—सापिण्ड्यं हि एकशरीरावयवान्वयेन भवति, समानः एकः पिण्डः देहो ययोरिति व्युत्पत्तेः । अतश्चायं सपिण्डशब्दोऽवयवशक्त्या सर्वत्र प्रवर्त्तमानोऽपि निर्मन्थ्यपङ्कजादिशब्दवन्नियत एव । तथा च पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट्, आत्मा च सप्तमः । सन्तानभेदेऽपि यतः सन्तानभेदस्तमादाय गणयेद् यावत्सप्तम इति सर्वत्र योजनीयम् । तथा च मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चमसन्तानवर्त्तिनी मातृतः पञ्चमीत्युपचर्यते । एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषसन्तानवर्त्तिनी पितृत सप्तमीति । तथा च—

भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः ।
विवाहे ह्यादिभूतत्वात् शाखाभेदोऽवगण्यते ॥ इति । यदपि

वसिष्ठेनोक्तम्—'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति, 'त्रीनतीत्य

(१) या० स्मृ० [१/५२-५३]
(२) गौ० ध० [४/२]
(३) या० स्मृ० [१/५३]
(४) म० स्मृ० [५/६०]
(५) ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात् ॥
गौ० ध० [४/३]

मातृतः पञ्चातीत्य च पितृतः' इति च पैठीनसिना तदप्यर्वाङ्निषेधार्थं न पुनस्तत्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः।

एतच्च समानजातीये सापिण्ड्यम्। असमानजातीये तु विशेषः शंखेनोक्तः—

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः।
एकपिण्डाः पृथक् शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥ इति।

एकस्माद् ब्राह्मणादेर्जाताः एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु स्त्रीषु जाताः। पृथग्जनाः समानजातीयासु भिन्नासु स्त्रीषु जातास्ते एकपिण्डाः सपिण्डाः, किन्तु पृथक् शौचाः अशौच प्रकरणे विशिष्य वर्णिता द्रष्टव्याः। एषां त्रिपुरुषमेव सापिण्ड्यं ज्ञेयम्। स्पष्टं चैतत्सर्वं मिताक्षरादिषु[1]। अत्र मन्वर्थमुक्तावल्यपि द्रष्टव्या विद्वद्भिः[2]। तत्र मत्स्यपुराणमुद्धृतमपि उक्तमेव मतं समर्थयति। शंखलिखितावपि तथैवेति नात्रोचितो विवाहप्रसंगेऽस्माकं विस्तरेण सापिण्ड्यविचार इति विरम्यते।

## सपिण्डविवाहे नव्यमतम्—

सपिण्डविवाहः कथं न कर्तव्य इत्यत्रानेके सिद्धान्ताः नव्यमानवशास्त्रिभिः प्रकटीकृताः। 'वेस्टमार्क' महाशयः[3] कथयति यत् पुरा लोकाः निकटस्थेतु सपिण्डेषु विवाहं व्यभिचारमेव मन्वते स्मेति। 'रिवर्स'[4] महानुभावस्याप्येतदेव मतम्। भारते तु वर्षे सपिण्डविवाहनिषेधस्य कारणद्वयमुत्प्रेक्षितम् काणे महाशयेन स्वकीये धर्मशास्त्रेतिहासे[5]—

(१) सपिण्डविवाहे सति तयोर्दोषो गुणितो भवेदनेकशः सन्ततिषु,
(२) यदि सपिण्डविवाहः स्यात् तर्हि गुप्तं प्रेम प्रकटीभवत् समाजे विरुद्धाचरणाय कल्पयिष्यत इति च।

शास्त्रीयस्तु पक्षः पूर्वमुक्त एव।

---

(१) मिताक्षरा [१/५२-५३]
(२) म० मु० [५/६०], सापिण्ड्यविषये गौ० ध० [२/५/१६] इत्यस्योज्ज्वलाऽपि अनुसन्धेया।
(३) हिस्ट्री आफ ह्यूमन मैरिज [पृ० ७१-८१, भा० २]
(४) मैरिज आफ कजिन्स इन इण्डिया [पृ० ६११-४०]
(५) धर्मशास्त्र का इतिहास [पृ० २८३, भा० १]

### अथ मातुलकन्यापरिणेयत्वविमर्शः—

मातुलपुत्र्या सह विवाहः कर्तव्यो न वेत्यत्र मतानि बहूनि परस्परविरुद्धानि सन्ति। तत्र 'सगोत्राय दुहितरं न प्रयच्छेत्' इत्युपक्रम्य 'मातुश्च योनिसम्बन्धेभ्यः'[1] इत्यापस्तम्बोक्ते मातुलकन्याऽप्यपरिणेयैव। बौधायने[2] धर्मसूत्रे पुनर्दृश्यते—दक्षिणे पञ्च व्यवहाराः विलक्षणा दृश्यन्ते—अनुपनीतैः सह भोजनम्, पत्न्या सह भोजनम्, उच्छिष्टभोजनम्, मातुलपितृष्वसृपुत्र्या परिणयश्चेति। एतेनेदमवगम्यते यत् दक्षिणे मातुलकन्यापरिणयो बहोः कालादेव प्रसिद्धः। परन्तु बौधायनो नैतत्समर्थयति। मनुनाऽपि[3] मातुलकन्यया, मातृष्वसृकन्यया, पितृष्वसृदुहित्रा च सह संगमनं कुर्वतः चान्द्रायणं प्रायश्चित्तं निर्दिष्टम्। उज्ज्वलायां शौनकोऽप्याहैतदेव[4]। सुमन्तुरप्येवमेवाचष्टे[5]। अपरार्कादिष्वपि निन्दितमेवैतत् कर्म भृशम्।

स्मृतिचन्द्रिकायाम्[6] पराशरमाधवीये[7] च मातुलकन्यापरिणयो वैध उक्तः। संस्कारकौस्तुभेऽप्ययमेवार्थः समर्थितः। प्रमाणयन्ति चैते—

आयाहीन्द्र पथिभिरीलितोभिर्यज्ञमिमन्नो भागधेयं जुषस्व।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्व सेयी वपामिव॥

श्रुत्यन्तरमपि—

गर्भे तु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः[8]।
नाकरस्य प्रमिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः॥

इति। परन्तु मन्वादिभिर्निन्दितत्वान्नायं युक्त इति वयमवगच्छामः।

---

(१) आप० ध० [२ ५/१५-१६]
(२) बौ० ध० [१/१९-२६, २/१/३७]
(३) पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत्॥ म० स्मृ० [११/१७१]
(४) मातुलस्य सुतामूढा मातृगोत्रां तथैव च।
समान प्रवरां चैव द्विजश्चान्द्रायणं चरेत्॥ उज्ज्वला [२/५/११/१६]
(५) पितृपत्न्यः सर्वा मातरः तद्भ्रातरो मातुलाः।
तत्सुता मातुलसुताः तस्मात्ता नोपयन्तव्याः॥ सुमन्तुः॥ तत्रैव॥
(६) स्मृ० च० [पृ० ७०-७४, भा० १]
(७) पराशरमाधवीयम्—[१/२, पृ० ६३-६८]
(८) सं० प्र० [पृ० ७११]

## अथ पुनर्विवाह विमर्शः

सम्प्रति पुनर्विवाहविषये शास्त्रस्थितिः चिन्तनीया। तत्रादौ स्त्रियाः पुनर्विवाहमधिकृत्य यथाशास्त्रमुच्यते। ईदृशी स्त्री पुनर्विवाहिता सती 'पुनर्भूः' इति वर्ण्यते। तत्र याज्ञवल्क्येन पुनर्भूर्द्विविधोक्ता[1]—अक्षता क्षता चेति। यस्याः समागमो न जातः सा आद्या, यस्यास्तु सम्पन्नः सा क्षतेति विवेकः। संस्कारदूषिता अक्षता, संस्कारात्प्रागेव पुरुषसम्बन्धदूषिता क्षतेति मिताक्षरा। उभे अपि पुनर्विवाहमर्हतः। पुनर्भ्वां उत्पन्नः पुत्रोऽपि पौनर्भवेरुच्यते। (स्वमुद्वाहकं पतिं परित्यज्य पुरुषान्तरेण सह प्रेमतः संगता स्वैरिणीत्युच्यते याज्ञवल्क्यमतेन।) नारदस्तु त्रिविधां पुनर्भुवं प्राह—पाणिग्रहणे संवृत्तेऽपि अकृतसमागमैका, स्वपतिं परित्यज्यान्येनसंगता पुनः स्वपतिं प्रत्यागता द्वितीया, पत्या मृते देवराभावे कस्मैचित्सपिण्डाय पतिजातीयाय वा प्रदत्ता तृतीया। स्वैरिणी चतुष्प्रकारा—पुत्रहीना पुत्रवती वा सती प्रेमवशात् स्वपतिं परित्यज्य पुरुषान्तरसंगता एका, पत्यौ मृते तद्बन्धूनस्वीकृत्य परेण संगता द्वितीया, विप्रोष्यागता क्षुधार्त्ता वा कञ्चित् पुरुषं प्रति आत्मानं समर्पयन्ती 'अहं तवैव' इति रूपेण तृतीया, कस्मैचिदपरिचिताय देशाचारानुरोधेन बन्धुभिः प्रदत्ता चतुर्थी। आसूत्तरोत्तरा निष्कृष्टेति नारदमतम। कश्यपः पुनः सप्तविधां पुनर्भुवमाह[2]—वाग्दत्ता, मनोदत्ता, कृतकौतुकमङ्गला (यस्याः करे कङ्कणं निबद्धम् वरेण विवाहकाले), उदकदत्ता, गृहीतपाणिः, कृताग्निप्रदक्षिणा, कृतप्रसवा चेति। अत्राद्यानां पञ्चानां सप्तपदयभावेनाविवाहितत्वेऽपि तत्तत्काले वरे मृते प्रव्रजिते वा पुरुषान्तरेण विवाहे संजाते सति पुनर्भूरिति व्यपदेशः पारिभाषिक एव शास्त्रे। बौधायनेनापि[3] सप्तप्रकारैव पुनर्भूरुक्ता। तत्र आद्ये कश्यपोक्ते एव। तृतीया कृताग्निप्रदक्षिणा, चतुर्थी सप्तमं पदं नीता,

---

(१) अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्॥ या० स्मृ० [१/६७]

(२) वाचा दत्ता मनोदत्ता कृतकौतुकमंगला।
उदकस्पर्शिता या च या च पाणिगृहीतिका॥
अग्निं परिगता या च पुनर्भूः प्रसवा च या।
इत्येताः कश्यपेनोक्ता दहन्ति कुलमग्निवत्॥
स्मृ० च० [ पृ० ७५, भा० १ ]

(३) वाग्दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता मुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूर्भवति॥ सं० प्र० [पृ० ७३५]

कृतसम्भोगा, गृहीतगर्भा, कृतप्रसवा चेति सप्तमी। अयं हि पुनर्विवाहो नियोग इत्युच्यते। अयं हि नियोगविधिः केवलं वाग्दत्तामात्रविषय[1] इति मनुर्मन्यते। वसिष्ठस्तु वाग्दत्तां जलदत्तां वा कुमारीमेव[2] मन्यते। नारदपराशराभ्यां तूक्तं पद्यं—

नष्टे मृते प्रव्रजिते क्लीवे तु पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते[3] ॥ प्रसिद्धमेव।

अग्निपुराणेऽपि[4] पद्यमिदमविकलं लभ्यते।

अत्र पराशरमाधवीये[5] कथितम् यदेतत् कलौ वर्ज्यम्। मेधातिथिस्तु[6] उक्तवाक्ये पतिपरं पालकार्थकमाश्रितवान्। स हि नियोगमुरीकुर्वाणोऽपि विधवाविवाहं स्पष्टतो विरुणद्धि। स्मृत्यर्थसारे त्वेतस्मिन् विषये विभिन्नानि मतानि सन्ति निर्दिष्टानि—सप्तपद्याः पूर्वं वरे मृते विवाहः कार्यः, सम्भोगात् पूर्वं मृते विवाहः, विवाहादूर्ध्वं रजस्यप्रवृत्ते यदि पतिर्म्रियते तर्हि विवाहः कर्त्तव्यः, गर्भधारणात् पूर्वं मृते पत्यौ विवाह इति येषां केषाञ्चन मतानि तत्रोक्तानि[7]।

आपस्तम्बे[8] च धर्मसूत्रे परेणोढायाः पत्न्याः संगमो दोषावापक उक्तः। मनुनापि विधवाया विवाहः प्रतिषिद्धः[9]।

प्रोषितभर्तृकायाः कृते केचन नियमाः स्मृतिषु दृश्यन्ते। नारद

(१) म० स्मृ० [९/६९-७०]
(२) अद्भिर्वाचा च दत्ता या म्रियेतादौ वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥ व० ध० [२७/७२]
(३) नारदस्मृति ( स्त्रीपुंस-प्र० ) [९७], पराशरस्मृति [४/३०]
(४) अ० पु० [ १५४/५-६ ]
(५) पराशरमाधवीयम् [पृ० ५३, भाग १ ]
(६) म० मे० भा० [५/१५७], [३/१०], [५/१६३]
(७) धर्मशास्त्र का इतिहास [पृ० ३४३, भाग १ ]
(८) आप० ध० [२/६/३-४]
(९) म० स्मृ० [५/१६२], [९/४७], [६/६५]

आह[1]—प्रोषिते भर्त्तरि ब्राह्मणी अपुत्रा वर्षचतुष्टयं सपुत्राचेत् वर्षाष्टकं प्रतीक्षेत, ततः परं पुनर्विवाहं कर्तुमर्हति । मनुरपि[2] मन्यते—यदि पतिर्धर्मार्थं विप्रोषितस्तर्हि अष्टौ वर्षाणि यावत्, ज्ञानादिप्राप्तये गतश्चेत् षड्वर्षाणि, परप्रेम्णा गतश्चेत् त्रीणि वर्षाणि यावत् पतिं पत्नी प्रतीक्षेत । तदनन्तरं पुनर्विवाहः कार्यो न वेत्यत्र स मौनमाश्रयति । वसिष्ठस्तु[3] प्राह—प्रोषितं पतिं पञ्चवर्षाणि यावत् प्रतीक्ष्य पत्नी तत्समीपं गच्छेत् स्वयमेव । विश्वरूपोऽप्येवमेवाह[4] । कौटिल्यस्तु[5] प्रकथयति—पत्यौ विप्रोषिते, मृते, संन्यस्ते वा पत्नी सप्ततुंपर्यन्तम्, एकपुत्रा वर्षं यावत् प्रतीक्ष्य देवरेण विवाहं कुर्यात् । यदि अनेके देवराः स्युः तर्हि सदाचारिणा स्वपालनक्षमेण ज्येष्ठेन, कनिष्ठेन अविवाहितेन सह परिणयं कुर्वीत । तदभावे तु पत्युः सपिण्डेन, तस्याप्यभावे केनापि सवर्णेन पुरुषेण सह परिणयेत् इति । अपरार्कोद्धृते ब्रह्मपुराणस्थवाक्ये तु स्पष्टमेवोक्तम्—बालविधवाया बलात्त्यक्ताया अन्यैर्बलादपहृताया वा पुनर्विवाहः कार्यः[6] । अथर्ववेदे[7] श्रूयते–यदि काचित् प्रथमं दशाब्राह्मणान् पतीन् कुरुते पश्चाच्चैकं ब्राह्मणं पतिम् तदा ब्राह्मण एव तस्य वास्तवो भर्त्तेति । अन्यत्रापि पुनर्विवाहस्य चर्चाऽथर्ववेदे[8] श्रूयते । परमिदमस्पष्टमेव यदियं चर्चा वाग्दत्तामात्रमधिकृत्य मनोदत्तां वा क्षतां वेति ।

अनेन प्रबन्धेनैतत् स्पष्टमेव यत् विधवाविवाहविषये पुनर्विवाहविषये वा शास्त्रे मतभेद एव । यद्यपि कैश्चिन्निबन्धकारैः प्रयासो विहितः सामञ्जस्यमापादयितुं तथापि सर्वे मनांस्यकर्षयितुं क्षमन्ते । तदत्र विप्रतिपन्ने

---

(१) नारद स्मृतिः (स्त्रीपुंस०) [९८-१०१]

(२) म० स्मृ० [९/७६]

(३) व० स्मृ० [१७/७५-७६]

(४) विश्वरूपटीका या० स्मृ० [१/६९]

(५) अ० शा० [३ ४]

(६) यदि सा बालविधवा बलात् त्यक्ताथवा क्वचित् ।
तदा भूयस्तु संस्कार्या गृहीता येन केनचित् ॥ अपरार्कः [पृ० ९७]

(७) उत यत्पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः ।
ब्रह्मा चेत् हस्तमग्रहीत् स एव पतिरेकधा ॥ अ० वे० [५ १७/८]

(८) अ० वे० [९ ५ २७-२८]

विषयेऽस्माकं मतमेतत्—(१) वरणानन्तरं मृते[1] पत्यौ ततः श्रेयसि त्रा वरान्तरे[2] सम्प्राप्ते पुनर्विवाह उचितः।

(२) उदकदानानन्तरं च[3] पत्यौ मृते पुनर्विवाहः कार्यः।

(३) अन्यथा तु पुनर्विवाहः न[4] करणीय एवेति।

**अथ पुरुषस्य पुनर्विवाहः—**

यथैव स्त्रिया नियमः तथैव सामान्येन पुरुषस्यापि कृते। यदि हि प्रथमोढा पत्नी श्रौतस्मार्त्तगृह्यकर्मानुकूलश्रद्धाशक्तिमती सपुत्रा च भवेत् तर्हि नान्यां स्त्रियमुद्वहेत्। अन्यतराभावे—यदि पत्नी न धर्मसम्पन्नाऽथवा पुत्ररहिता तर्हि 'पुनरन्यां स्त्रियं धर्मलोपभयात् प्रजालोपभयात् वा उद्वहेत्'[5]।

---

(१) वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा।
ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम्॥ कात्यायनः॥
सं० प्र० [पृ० ७३९]

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य सा चान्यं वरयेद्वरम्॥ नारदः॥ सं० र० मा० [पृ० ५०५]

अयमेव विधिः दत्तशुल्कायाः वरे मृतेऽपि ज्ञातव्यः—

कन्याया दत्तशुल्काया म्रियेत यदि शुल्कदः।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते॥ म० स्मृ०

कात्यायनेन तु जीवति देशान्तरगते शुल्कदातरि वर्षं यावत् प्रतीक्षोक्ता—

प्रदाय शुल्के गच्छेद्यः कन्यायां स्त्रीधनं तथा।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः॥ सं० र० मा० [पृ० ५०५]

(२) दत्तामपि हरेत् पूर्वात् श्रेयांश्चेद्वर आव्रजेत्॥ या० स्मृ० [१/६५]

(३) अद्भिर्वाचा दत्ताया म्रियेतादौ वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥ व० स्मृ० [२७/७२]

(४) नद्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते॥ म० स्मृ० [५/१६२]

(५) आप० ध० [२/११/१२-१३]

अत एव पत्न्यामुभयसम्पत्तिराहित्ये तु सुतराम्। अन्यथा तु पुनर्विवाहो न युक्तः जीवन्त्यां पत्न्याम्। मृतायां तु विवाहं कुर्यात्। कामतः सत्यामप्येकस्यां समर्थायां पत्न्यां पुनर्विवाहः शास्त्रेषु चर्चितः स कामकृतत्वात् हेय एव नोचित इति प्रतीमः। अत एव तत्र तत्रैतादृशस्य विवाहस्य निन्दाऽपि दृश्यते।

## अथ समानोदरविवाहव्यवस्था—

तत्र सामान्यत एकोदरप्रसूतयोः पाणिग्रहणं नैकस्मिन् वत्सरे कार्यम्[1]। भिन्नभातृजयोस्तु वैमात्रेययोः करणे न दोषः[2]। यदि वत्सरपर्यन्तं परिहारोऽसम्भवस्तर्हि षण्मासान् परिवर्जयेत्,[3] अन्यथैका विधवात्वमाप्नुयात्। षण्मासपरिहारासम्भवे दिनचतुष्टयं[4] तस्याप्यसम्भवे दिनमात्रं[5] परिहरेदेव। मण्डपभेदश्चात्रावश्यकः। यदि तु एकस्य विवाहादनन्तरं ऋतुत्रयमध्ये वर्षान्तरप्रवेशः तदा तु सावनसंवत्सरमध्येऽपि वर्षभेदात्कार्यमेव[6]। अत एव वर्षभेदस्य महत्त्वपूर्णतया एकस्य फाल्गुने परस्य चैत्रे विवाहकरणे न दोष[7] एव। एतत्सर्वम् उपनयनादिशुभकर्मविषयेऽपि ज्ञेयम्, शास्त्रे माङ्गलिकमात्रनिषेधात्।

---

(१) एकोदरप्रसूतानामेकस्मिन् वत्सरे यदि।
विवाहं नैव कुर्वन्ति कुर्वन्ति तु ततोऽन्यथा॥ सं० म० [पृ० १०७]

(२) एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः।
न समानक्रियां कुर्यात् मातृभेदे विधीयते॥ सं० प्र० [पृ० ७२६]

(३) विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्॥ सं० म० [पृ० १०७]

(४) पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम्।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमितिनिश्चयः॥ सं० म० [पृ० १०७]

(५) भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वसृयुगे तथा।
न जातु मंगलं कार्यमेकस्मिन् मण्डपेऽहनि॥ सं०प्र० [पृ० ७२७]

(६) ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम्।
तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते॥ तत्रैव॥

(७) फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने।
भेदादब्दस्य कुर्वीत नर्क्षत्रयविलंघनम्॥ सं० म० [पृ० १०८]

एवमेव सहोदरयोः सहोदराभ्यां विवाहः, सहोदरयोः कन्ययोरेकेन वरेण विवाहश्च न कार्यः। इत्थमेव यत्पुत्राय स्वकन्या दीयते तत्कन्यया स्वपुत्रविवाहोऽपि न कार्यः। अयं हि विधिः शास्त्रे प्रत्युद्वाह इत्युच्यते। उक्तार्थे प्रमाणन्तु—

प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम्।
न चैकजन्मनोः पुंसोरेकजन्ये च कन्यके॥
नूनं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम्[1]॥ इति नारदवचनम्,
एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्मनोः।
न पुत्रीद्वयमेकस्मै दद्यादिति पराशरः[2]॥ इति पराशरवचनं

च। परमेतत्सर्वं वैमात्रेयविषये नोपयुज्यत एवेत्यादिष्टं प्रागेव।

## अथ कन्यादातृनिर्णयः—

तत्र पिता पितामहो भ्राता कन्यायाः सकुल्यः जननी वा कन्यादातारः। तत्रापि पूर्वभावे परः[3] अधिकारी। भ्राता च पित्रानुमत एव जीवति पितरि कन्यादातृत्वं[4] भजते। मृते तु पितरि स्वत एव। तत्रापि संस्कृतस्यैव भ्रातुः[5] दातृत्वमुभयत्रापि शास्त्रसिद्धम्। उक्ता अधिकारिणो याज्ञवल्क्यानुरोधेन। नारदस्त्वन्यमेव क्रममाह—पिता तदनुमत्या भ्राता मातामहो मातुलः सकुल्यः बान्धवः माता यदि उन्मादादिदोषशून्या कन्याजातीयं पुरुषान्तरं वा कन्यादातृत्वाधिकारं भजते[6]। तत्रापि पूर्वभावे

---

(१) सं० म० [पृ० १०८]
(२) सं० प्र० [पृ० ७२६]
(३) पिता पितामहो भ्राता सकुल्या जननी तथा।
कन्याप्रद पूर्वनाशे प्रकृतिस्थः परः परः॥ या० स्मृ० [१/६३]
(४) भ्राता वाऽनुमते पितुः॥ नारदः सं० म० [पृ० १०३]
(५) असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः॥ सं० र० मा० [पृ० ४३६]
(६) पिता दद्यात् स्वयं कन्यां भ्राता वाऽनुमते पितुः।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा॥
माता त्वभावे दातॄणां प्रकृतौ यदि वर्त्तते।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः॥ सं० प्र० [पृ० १०३]

परः परोऽधिकारी पूर्ववत् एवावगन्तव्यः। यदि कोपि दाता स्वकुल्यो न स्यात्तदा राजा दद्यात्[1]।

यदि च ऋतुदर्शनान्तरमपि कन्या बान्धवैः पित्रादिभिर्न दीयते न वा राजादिभिः तदा सा वर्षत्रयं यावत् प्रतीक्ष्य चतुर्थे स्वयंवरं कुर्यात्[2]। यदि च पिताऽनुमत्यते स्वस्यासामर्थ्यात्तदाऽपि स्वयंवरं कुर्यादेव कन्येति[3] शास्त्रसिद्धान्तः॥

(१) यदा तु कश्चिन्नैव स्यात् कन्या राजानमाव्रजेत्॥ नारदः॥
सं० र० मा० [पृ० ४६८]

(२) त्रीणिवर्षाण्यृतुमती कांक्षेत पितृशासनम्।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्॥ सं० म० [पृ० १०३]

(३) पुत्रि प्रदानकालस्ते न च कश्चिद् वृणोति माम्॥
स्वयमन्विच्छ भर्त्तारं गुणैः सदृशमात्मनः॥ सं०र०मा० [पृ०४९८]
गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम्॥ या० स्मृ० [१/६४]

# (१६) अन्त्येष्टिः

मृत्युर्जन्मवतां वीर देहेन सह जायते।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः[1] ॥

इह जगति जन्मभाजां मृत्युः समये सुनिश्चितैव। नेदं षाट्कौशिक शरीरम् कदापि सार्वकालिकं भवितुमर्हति। इदं हि महदपवित्रभूतं शरीरमस्थिस्नायुमांसशोणितसमूह-निष्पन्नम्[2]। अत एव प्रसिद्धं बौद्धेषु—

परिव्राट् कामुकशुनामेकस्यां प्रमदातनौ।
कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पनाः॥ इति।

अत एव च व्यासदेवेनाप्युक्तं पातञ्जलभाष्ये—

स्थानाद्बीजादुपष्टम्भात् निस्यन्दान्निधानादपि।
कायमाधेय शौचत्वात् पण्डिता ह्यशुचिं विदुः॥ इति।

अत आवश्यकं यत् मृतस्य शरीरस्यापि संस्कारेण शुद्धिः स्यात्। एतदर्थमेव मृतसंस्कारावश्यकत्वं स्वीकृतम्। अपरं च कारणं मृतशरीरसम्बन्धिन आत्मनः परलोकसाधनं च।

किञ्च मृतं प्रति भयस्नेहावपि कारणमन्त्येष्टिसंस्कारस्य मन्तुं शक्यते कारणत्वेन। तथाहि मृतं बान्धवमवलोक्य भयसद्भावः स्वस्वानुभवसिद्धो न

---

(१) श्रीमद्भागवतम् [१०/१ ३८]

(२) किं मोहतो रक्षितेन सुपुष्टेन बलीयसा।
अध्रुवेण शरीरेण शुकशास्त्रकथां विना॥
अस्थिस्तम्भं स्नायुबद्धं मांसशोणितलेपितम्।
चर्मावनद्धं दुर्गन्धं पात्रं मूत्रपुरीषयोः॥
जराशोकविपाकार्त्तं रोगमन्दिरमातुरम्।
दुष्पूरं दुर्धरं दुष्टं सदोषं क्षणभङ्गुरम्॥
कृमिविड्भस्मसंज्ञान्तं शरीरमिति वर्णितम्।
अस्थिरेण स्थिरं कर्म कुतोऽयं साधयेन्नहि॥
प० पु० (उ० ख०) [५/५७-६०]

प्रमाणापेक्षी। अतस्तदवस्थानं न कदापि सोढुं शक्यम् तद्वन्धुभिरन्यैर्वा तदुपकण्ठनिवासिभिः। अत एवाथर्ववेदे दृश्यते—'प्रेहि प्रेहि[1] पथिभिः' इत्यादिरूपेण प्रार्थनापूर्वकं प्रास्थानिकोपच्छन्दनम्। एभ्योऽतिरिक्तमेकं कारणं शुद्धिरपि लक्ष्यते। शवं स्वगृहे स्थापयितुं न कोपि वाञ्छति, तस्य दुर्गन्धित्वात्। अतोऽपि संस्कारः शवस्यावश्यकः सञ्जातः।

अन्त्येष्टिः ऋग्वेदे निर्दिष्टा अथर्ववेदे च। परन्तु तद्विधिर्न स्पष्टमुपलभ्यते। तथापि ऋग्वेदीयाथर्ववेदीयमन्त्राणामन्त्येष्टिविषयकाणां पर्यालोचनेन ज्ञायते—

(क) मृतस्य पुनरुज्जीवनाय पूर्वं मन्त्रप्रयोगः क्रियते स्म, तेनापि जीवनाभावे अन्त्येष्टिः विधीयते स्म। ईदृश्येव गतिः सम्प्रति 'स्पेन' देशें अंशतः समुपलभ्यते। पुरोहितस्य राज्ञो वा निधने जाते सति कश्चन महान् राजसेवकः वारत्रयं तारस्वरेण मृतमाह्वयति। यदि तथापि न लभ्यते उत्तरं तर्हि स मृत इति निर्णीयते।

(ख) शवस्नानमाचरणीयम्, रज्वा तत्पदबन्धश्च कार्यः येन स मृतः पुनः परावृत्य न गृहमागच्छेत्।

(ग) वृषयुगोढायां शकटयामेव शवो नीयते स्म श्मशानभूमिम्, अनुव्रजन्ति स्म च बान्धवास्तम्। बान्धवानुव्रजनमद्यापि शिष्यत एव।

(घ) श्मशाने शवं नूतनं वस्त्रं परिधापयन्ति स्म बान्धवाः। इदमप्यद्य शिष्यत एव। एतच्च स्नपनोत्तरं श्मशाने सम्प्रति विधीयते।

(ङ) शवस्य मुखं गोमयेनाच्छाद्यते स्म। एतत्त्वधुना न क्रियते।

(च) शवस्य हस्ते यदि धनुरादिः स्यात् तर्हि तमपनयन्ति स्म तद्बान्धवा एव संस्कारात्—दाहात्—पूर्वम्।

(छ) चितायामेकत्र प्रदेशे मृतस्य पत्नी अपि आरुह्य शेते स्म।

---

(१) प्रेहि प्रेहि पथिभिः पूर्याणैर्येना तू पूर्वे पितरः परेताः।
उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम्॥
अ० वे० [१८/१/५४]

(ज) एकस्याजस्य बलिं दत्वा चितां प्रज्वालयन्ति स्म, उपस्थिताः स्त्रियश्च शोकवेदनां प्रकटयन्ति स्म।

(झ) मृतस्याङ्गप्रत्यङ्गान् तत्तत्स्थानं गन्तुं कथयन्ति स्म।

(ञ) दग्धस्यावशिष्टास्थीनि निचित्य निखाते प्रक्षिप्यन्ते स्म। यदा कदा च सति सम्भवे स्मारकमपि निर्मीयते स्म। अधुनापि अस्थिसञ्चयनं विधीयते, किन्तु निखननमस्थ्नां न क्रियते। स्मारकनिर्माणविधिश्चापि सम्प्रति यत्र तत्र दृश्यत एव। प्रायेण श्मशानभूमौ अस्थिसञ्चयनदिने एकं तुलसीवृक्षमारोपयन्ति जनाः सम्प्रति।

(ट) प्रास्थानिकमभ्यर्थनमपि मृतस्य क्रियते स्म। श्राद्धकालेऽद्यापि केचन मन्त्रा एवंविधा उच्चार्यन्त एव।

(ठ) शवसंस्कारकर्त्तारः शुच्यर्थं स्नानमाचरन्ति स्म। इदानीमप्येतदेवमेव।

(ड) गृह्ये शुद्धाऽग्निः समीध्यते स्म।

(ढ) क्रव्यादमग्निं शवसंस्कारार्थं समिद्धं बहिः क्रियते स्म।

(ण) अनन्तरं च भोज्यनृत्यादिसमनुष्ठानं क्रियते स्म॥

एतावता प्रतिपन्नमिदं भवति यत् ऋग्वेदादौ अन्त्येष्टिविषयिण्यः सर्वा एव क्रियाः प्रायेण निर्दिष्टा एव सन्ति। कृष्णयजुर्वेदस्यारण्यके तैत्तिरीये पितृमेधं प्रकृत्य सर्वे मन्त्राः शवसंस्कारदिनादारभ्याद्य श्राद्धपर्यन्तं नियुक्ता उपदिष्टाः। गृह्यसूत्रेषु पुनः एते विषयः सुव्यवस्थिता दृश्यन्ते। गृह्यसूत्रेषु हिरण्यकेशिगृह्यसूत्रस्य अन्त्येष्टिनिरूपणं श्रेष्ठमुपजीव्यभूतं च परवर्त्तिनिबन्धकृताम्।

सम्प्रति अन्त्येष्टिसंस्कारगतानि मुख्यानि कृत्यानि निरूपयामः।

### तत्र दाहात्पूर्वकालिकं कृत्यम्—

तत्र मृतस्य तीर्थजलेनाभिषेकं कृत्वा प्रेतालंकारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेन ('खस' इत्यभिधानेन) शवमनुलिम्पन्ति नलदमूलस्यमालां च परिधापयन्ति। ततश्च प्राक्शिरसं शवं शाययित्वा वस्त्रेण तथाच्छादयेत् यथा वासोऽग्रं पादतो भवेत्। प्रभूतं बर्हिराज्यं चोपकल्पयेत्

इत्याश्वलायनः[1]। बौधायनेन[2] तु दक्षिणाशिरसं संवेश्येत्यधिकम् उक्तम्। वस्त्रपरिधापन-मन्त्रश्च बौधायनेनोक्तः। पारस्करव्याख्यायाम् हरिहरोपाध्यायास्तु—

"अथ गतासुं ज्ञात्वा घृतेनाभ्यज्य उदकेनाप्लाव्य सवस्त्रमुपवीतिनं चन्दनोक्षितसर्वाङ्गं पुष्पमालाविभूषितं मुखनासिकाचक्षुःश्रोत्ररन्ध्रेषु निक्षिप्तहिरण्यशकलं वस्त्रेणाच्छाद्य पुत्रादयो निर्हरेयुः[3]" इत्युक्तवन्तः। एतदतिरिक्ता अन्येऽपि सम्भाराः उपकल्पयितव्याः दधिसर्पिर्मिश्रमाज्यम् उदकुम्भम् दर्भाश्चेत्यादयः[4]। तत आसन्द्यां शवं श्मशानं नयन्ति स्म।

---

(१) संस्थिते तीर्थेन निर्हृत्यावभृथे प्रेतालंकारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति नलदमालां प्रतिमुञ्चन्ति। निष्पुरीषमेके कृत्वा पृषदाज्यं पूरयन्ति। अहतस्य वाससः पाशतः पादमात्रमवच्छिद्य प्रोर्णुवन्ति प्रत्यग्दशेनाविः पादम्॥ आश्व० गौ० [६/१०]

केशश्मश्रुनखलोमानि इत्युक्तं पुरस्तात्। विगुल्फं बर्हिराज्यं च॥ आश्व० गृ० [४/१/१५-१६]

(२) अथास्य केशश्मश्रुणी वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत। अथास्य दक्षिणं कुक्षिमपावृत्य निष्पुरीषं कृत्वाऽद्भिः प्रक्षाल्य सर्पिषाऽन्त्राणि पूरयित्वा दर्भैः संसीव्यति। तदु तथा न कुर्यात् 'क्षोधुकास्य प्रजा भवति' इति विज्ञायते। अपि वा सपुरीषमेवाप्लाव्याच्छाद्यालंकृत्याथैनमादायान्तरेण वेद्युत्करौ प्रपद्य जघनेन गार्हपत्यमासन्द्यां कृष्णाजिने दक्षिणाशिरसं संवेश्य शिरस्तो नलदमालां प्रतिमुच्यपत्तोऽदशेनाहतेन वाससा प्रोर्णोति। 'इदं त्वा वस्त्रं प्रथमं न्वागनु' इति। अथैतदपोहति— 'अपैतदिह यदिहाविभः पुरा। इष्टापूर्तमनुसंपश्य दक्षिणां यथा ते दत्तं बहुधा विबन्धुषु' इति॥ बौ० पि० सू० [१/२/५-८, १/३/१-२]

(३) पा० गृ० ह० भा० [३/१०]

(४) विगुल्फं बर्हिराज्यं च। दध्न्यत्र सर्पिरानयन्त्येतत् पित्र्यं पृषदाज्यम्॥ आश्व० गृ० [४/१/१६-१७]

अथैनान् सम्भारानुपकल्पयते दधि च सर्पिर्मिश्रमाज्यं चोदकुम्भं च दर्भांश्च परिस्तरणीयान् हिरण्यं चाजं च शासं चेडसूनं च कुम्भं च प्रच्यावनीं सिकताश्च शुल्वे च निस्रश्च पर्णशाखाः॥ बौ०पि०सू०[१/३/७]

**आसन्दी ( 'अर्थी' )—**

इयमासन्दी उदुम्बरकाष्ठमयी स्यादिति बहुषु गृह्यसूत्रेषु । सम्प्रति तु वंशदण्डमयी आसन्दी क्रियते । आसन्द्यां कृष्णाजिनमास्तरणीयम् । तत्र च दक्षिणाशिरसं शवमुत्तानशयं स्थापयेत्[1] ।

**शवनिर्हरणम्—**

उक्तया आसन्द्या शवं तल्पेन कटेन वा संवेष्ट्य दासाः प्रवृद्धवयसो वा बान्धवा नयेयुः[2] । शवादग्रे अग्निम् यज्ञपात्राणि च नीत्वा गच्छेयुर्दाहादिकारिणो[3] जनाः । तत्पश्चात् दासाः प्रवयसो वा शवं निर्हरेयुः । अत्र निर्हारकस्य संख्या अयुग्मा स्यात्[4] । केचित्तु गोशकटेन शवनिर्हरणमाहुः[5] । शकटेन शवनिर्हरणे बौधायनोक्तो मन्त्रः पठितव्यः—'इमौ युनज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां यमस्य सादनं सुकृतां चापि गच्छतात्[6] ॥ इति ।

**शवनिर्हरणे दिङ्नियमः—**

मृतं शूद्रं दक्षिणद्वारेण[7], वैश्यं पश्चिमद्वारेण, क्षत्रियं चोत्तरद्वारेण, विप्रं पुनः पूर्वद्वारेण निर्हरेत् । त्रिंशत्श्लोक्यां तु अनुलोमक्रमेण निर्हरणमुक्तम्,

---

(१) आसन्द्यां कृष्णाजिने दक्षिणाशिरसं संवेश्य—॥ बौ० पि० सू० [१/२/८]

(२) अथैनमेतयाऽऽसन्द्या तल्पेन कटेन वा संवेष्ट्यदासाः प्रवयसो वा वहेयुः ॥ तत्रैव ॥ [१/४/५]

(३) अथैतां दिशमग्नीन्नयन्ति यज्ञपात्राणि च ॥ आश्व० गृ० [४/२/१]

(४) अन्वञ्चं प्रेतयुजोऽमिथुनाः प्रवयसः ॥ तत्रैव [४/२/२]

(५) अथैनमनसा वहन्तीत्येकेषाम् ॥ बौ० गृ० [१/४/६]

(६) नयन्त्यमिथुना वृद्धा अयुजस्तत् कलेवरम् ।
गोयुक्तशकटेनैके प्राहुः प्रेतं नयेदिति ॥
आश्व० गृ० का० [४/१४], बौ० पि० सू० [१/४/७]

(७) दक्षिणेनं मृतं शूद्रं पुरद्वारेणनिर्हरेत् ।
पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः ॥ म० स्मृ० [५/९२]

तच्चिन्त्यम्, आदित्यपुराणविरोधात् इति कमलाकरभट्टाः[१]।

## शवनिर्हरणकर्तृणां तदनुयायिनां च गमनक्रमः—

शवानुयायिनां ज्येष्ठप्राथम्येन गमनम्—ज्येष्ठप्रथमाः कनिष्ठजघन्या गच्छेयुरित्याश्वलायनस्मरणात्। कात्यायनोऽप्येवमाह[२]। तत्र शवानुगामिनां न व्यवधानम् युक्तम् इत्यपि कथितम्। बौधायनस्तु भार्यासु कनिष्ठप्रथमा इति क्रममाह[३]। सर्वैरेव प्रकीर्णवेशैर्भाव्यम्। पुत्रेषु च ज्येष्ठेन प्रदीप्तपलाश-हस्तेनाग्रगामिना भवितव्यम्[४]। प्रथमतस्तु निर्हरणकाले गृहात्प्राच्यामुदीच्यां[५] वा भवनीयम्। निर्हारका यमगाथां गायन्तो यमसूक्तं च जपन्तो व्रजेयुः[६]। अत्र द्विवर्षप्रभृति सर्वेऽपि बान्धवाः श्मशानपर्यन्तं गच्छेयुरिति पारस्करः[७]।

## अनुस्तरणी—

पुरा अनुस्तरणी (प्रेतमनुस्तीर्यते या स्त्रीपशुः सा) भवति

---

(१) पूर्वामुखस्तु नेतव्यो ब्राह्मणो बान्धवैर्गृहात्।
उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा॥
दक्षिणाभिमुखः शूद्रो निर्हर्त्तव्यः स्वबान्धवैः।
इत्यादित्यपुराणादित्यपरार्कः।
तेन त्रिशत्श्लोक्युक्तोऽनुलोमक्रमो हेयः॥ नि० सि० पृ० [११६८]

(२) अव्यवायेन नयनमेतेषामिह कर्मणि।
अधःकृतोपवीतास्तु प्रविमुक्तशिरोरुहाः॥
अकृत्वोपरिवस्त्रं च गच्छन्तीह सुतादयः।
यो ज्येष्ठः स स पूर्वो यः कनिष्ठः स पृष्ठतः॥ आश्व० गृ० का० [४/१५-१६]

(३) अस्य भार्याः कनिष्ठप्रथमाः प्रकीर्णवेश्यो व्रजेयुः॥ बौ० पि० सू० [१/४/३]

(४) एतस्मिन् काले गार्हपत्ये पालाशं काष्ठमादीप्याथीत्युकप्रथमाः प्रतिपद्यन्तेऽथ स्वधितिरथाग्नयोऽथ पात्राणि दध्याज्यं दर्भा राजगवीति यच्चान्यदप्येवं युक्तमिति॥ तत्रैव [१/४/४]

(५) गृहात्प्राच्यामुदीच्यां वा नद्यादौ नीयते पुनः॥ आश्व० गृ० का० [४/११]

(६) अग्निपुरस्सरं प्रेतं यमगाथां गायन्तो यमसूक्तं च जपन्तः पुत्रादयः श्मशानं नयन्ति॥ पा० गृ० ह० भा० [३/१०], पा० गृ० [३/१०/९]

(७) द्विवर्षप्रभृति प्रेतमाश्मशानात् सर्वे गच्छेयुः॥ पा० गृ० [३/१०/८]

समापेक्षिता[१]। इयं गौरेवेत्येकं मतम्[२]। तदभावे एकवर्णाऽजा[३]। अजा चेयं कृष्णवर्णैव स्यादित्यपि केचित्[४] आचार्याः। तस्य च पशोः सव्ये बाहौ रज्जुं बध्वा प्रेतस्य पृष्ठतो नयेयुर्बान्धवाः[५]। श्मशाने अनुस्तरणीं हत्वा तस्या वपामुत्खिद्य प्रेतस्य शिरो मुखं प्रच्छादयेत्, वृक्का उद्धृत्य प्रेतस्य पाण्योरादध्यात् दक्षिणे पाणौ दक्षिणं सव्ये सव्यम्, तस्यैव च पशोर्हृदयमुद्धृत्य प्रेतस्य हृदये दध्युर्बान्धवाः। केचन पुनः वृक्काभ्यां सह पिण्डद्वयोः समुच्चयमभिप्रयन्ति पाण्योराधानार्थम्, अपरे पुनः वृक्काभावे पिण्डावविति वदन्ति। पश्चाच्चानुस्तरण्याश्चर्मणा प्रेतस्य शरीरं समाच्छादयेत्[६]।

इयमनुस्तरणी न नियमेन विधातव्या अपि तु अनित्यैवेति मन्तव्या। अत एव कात्यायनेनाप्युक्तम्—'न वास्थिसन्देहात्' इति। यदि हि अनुस्तरणी क्रियते तर्हि अस्थिसंचयनकाले कानि यजमानस्यास्थीनि कानि पुनरनुस्तरण्या इति संशयः स्यात्। तस्मादियं नापि कर्त्तव्येति कात्यायनाशयः। तथा चानुस्तरण्यभावे सर्वं कृत्यमनुस्तरण्याः कथं कार्यमित्यत्र कात्यायन एवाह—यदानुस्तरणी नास्ति तदा सक्तुर्ध्विषि तत्स्थाने कुर्यात्। तथा च सर्वं पशुकार्यं सक्तुभिरेव सम्पादयेत्। अत्र पक्षे वपास्थानेऽपूपः, वृक्कस्थाने पिण्डौ, अन्यान्यपि तत्तदङ्गसदृशानि सक्तुभिरेव कार्याणि[७] इत्याशयः। सम्प्रति त्वयं विधिर्नानुष्ठीयत एव। तत्र हिंसैव कारणम् प्रतीयते।

---

(१) अनुस्तरणीम्॥ आश्व० गृ० [४/२/४], बौ० पि० सू० [१/४/१]
(२) गाम्॥ आश्व० गृ० [४/२/५], इयमेव बौधायनेन 'राजगवी' इत्युक्ता। बौधायनीयपितृमेधसूत्रम् [१/४/४]
(३) अजां वैकवर्णाम्॥ आश्व० गृ० [४/२/६]
(४) कृष्णामेके॥ तत्रैव [४/२/७], आनयन्त्येतां कृष्णां कूटां जरतीं मूर्खां तज्जघन्यामनुस्तरणीम् पदिबद्धाम्। 'सव्यपदि बद्धा भवति' इति विज्ञायते॥ बौ० पि० सू० [१/४/१]
(५) सव्ये बाहौ बद्ध्वाऽनुसंकालयन्ति॥ आश्व० गृ० [४/२/८], बौ० पि० सू० [१/४/१]
(६) अनुस्तरण्या वपामुत्खिद्य शिरो मुखं प्रच्छादयेत्—'अग्नेर्वर्मपरिगोभिर्व्ययस्व' इति। वृक्का उद्धृत्य पाण्योरादध्यात्.......दक्षिणे दक्षिणं सव्ये सव्यम्। हृदये हृदयम्। पिण्ड्यौ चैके। वृक्कापचार इत्येके। सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्य..........'॥ आश्व० गृ० [४/३/१९-२४]
(७) आश्व० गृ० ना० वृ० [४/२/४], [४/३/२३], गव्यनुस्तरण्यां तत्परित्यागविधये द्र० बौ० पि० सू० [१/१०]

**अथश्मशानम्—**

श्मशानं द्विविधम्—दहनदेशः, सञ्चित्य यत्रास्थीनि निर्धायन्ते तच्च स्थानम्[1]। तत्र सर्वतो निम्नो मध्यत उच्छ्रितश्च देशो बहुलौषधियुक्त अमित आकाशयुक्तो दहनश्मशानम्। बहुलौषधिक उभयत आकाशपरिवृतश्च प्रदेशो द्वितीयं श्मशानम् इत्याश्वलायनेन[2] निर्दिष्टम्।

**श्मशानकृत्यम्—**

श्मशाने शवं नीत्वा तत्र दक्षिणपूर्वस्यां दिशि (आग्नेयां दिशि) दक्षिणापरस्यां (नैर्ऋत्यां) वा दिशि भूम्यैकदेशं खानयेत्। खातस्य परिमाणं चेत्थम्—दक्षिणाप्रवगं प्राग्दक्षिणाप्रवणम् (आग्नेयीप्रवणं) वा प्रत्यग्दक्षिणा-प्रवणं वा खातं स्यात्। खातस्यायामश्च तावान् स्यात् उद्‌बाहुकः प्रेतपुरुषः स्यात्। व्याममात्रं पञ्चारत्निप्रमाणं च तिर्यक्, अधस्ताच्च द्वादशाङ्गुल-परिमाणम्[3]। ततश्च प्रेतं स्नपयित्वा नलदेनानुलिप्य पुनश्च नलदमालां[4] नलदस्थाने[5] जपाकुसुममालां वा परिधाप्य नवं वस्त्रं परिधापयेत। नग्नस्य दाहस्तु कदापि न कर्त्तव्य एव[6]। ततश्च चितिं निधाय तस्यां च दर्भैरास्तरणम्. ततश्च कृष्णाजिनमूर्ध्वलोमास्तृणुयात्[7]। तस्मिंच उत्तानं दक्षिणाशिरसं प्रेतं

---

(१) आश्व० गृ० ना० वृ० [४/१/११]

(२) आश्व० गृ० [४/१,११-१६], बौ० पि० सू० [१ ६/१-२]

(३) संस्थिते भूमिभागं खानयेद्दक्षिणपूर्वस्यां दिशि दक्षिणापरस्यां वा। दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके। यावानुद्‌बाहुकः पुरुषस्तावदायामम्। व्याममात्रं तिर्यक् वितस्त्य-वाक्॥ आश्व० गृ० [४/१/६-१०[

(४) आश्व० श्रौ० [६/१०]

(५) जपां प्रतिनिधं केचिदूचिरे नलदस्य तु॥ आश्व० गृ० का० [४/६]

(६) प्रचेताः—स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः।
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत्॥
यमः—प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम्।
ब्राह्मे—दरिद्रोऽपि न दग्धव्यो नग्नः कस्याञ्चिदापदि॥
नि० सि० [पृ० १/८१]

(७) तस्मिन् बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम······॥
आश्व० गृ० [४/२ १५]
चितौ कृष्णाजिनं प्राग्ग्रीवमुत्तरलोममास्तीर्य—
पा० गृ० ह० भा० [३/१०]

स्थापयेत्[१]। उत्तरेण गार्हपत्यं प्रेतं नीत्वा तत्र आहवनीयमभिमुखशिरशं प्रेतं स्थापयन्ति बान्धवाः इति तु आश्वलायन[२] आह। चितिश्च दक्षिणाप्राचीति बौधायनः[३], दक्षिणोत्तरायतेति[४] हरिहरादयः। तत्र स्थापितस्य हस्ते स्वर्णपिण्डं धनुः मणिं च दद्यात् क्रमेण ब्राह्मणक्षत्रियवैश्यजातीयस्य[५]। परमधुना सर्वमेवैतत् स्नपनवस्त्रपरिधापनवपनवर्जं नानुष्ठीयते।

### पत्न्युपवेशनम्—

एतत्कर्मानुष्ठानान्तरं पुरा मृतस्य पत्नीमुपसंवेशयन्ति स्म बान्धवा-श्चित्याम्[६]। उपवेशनं चात्र शयनमेवेति भट्टनारायणः[७]। एतच्च भार्योपसंवेशनम् प्रेतस्योत्तरतः[८]। ततश्चाग्निदाता मन्त्रं जपेत्[९]—"इयं नारी पतिलोकं वृणाना निपद्यत उपत्वा मर्त्यप्रेतम्। विश्वं पुराणमनु-पालयन्ती तस्मै प्रजां द्रविणं चेह धेहि"[१०] इति। तदनन्तरं च पतिस्थानीयो देवरः, अन्तेवासी वा जरद् दासो वा तस्या उपसंविशन्त्याः पत्न्याः सव्यं पाणिमादायोत्थापयेत्[११]॥ उत्थापनकाले च मन्त्रमेनं पठेत्[१२]—"उदीर्ष्व नार्यभि जीवलोकमिताक्षुमेतमुपशेष एहि। हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्यु-र्जनित्वमपि संबभूव"[१३] इति। तत्रायं विशेषः—यदि जरद्दास उत्थापयेन्मृतस्य

---

(१) तत्रैव।
(२) आश्व० गृ० [४ २।१५]
(३) बौ० पि० सू० [१.६/४ ५]
(४) पा० गृ० ह० भा० [३,१०]
(५) बौ० पि० सू० [१/८ ३-५]
(६) अथास्य भार्यामुपसंवेशयति॥ बौ० पि० सू० [१/७ ७]
(७) आश्व० गृ० ना० वृ० [४ २/१६]
(८) उत्तरतः पत्नीम्॥ आश्व० गृ० [४/२ १६]
(९) बौ० पि० सू० [१/८ १]
(१०) अ० वे० [१८/३/१], अत्र तृतीयपादे अथर्ववेदसंहितायाम् 'विश्वम्' इत्यस्य स्थाने 'धर्मम्' इति पाठः।
(११) बौ० पि० सू० [१/८/२], आश्व० गृ० [४ २/१८]
(१२) तत्रैव।
(१३) ऋ० वे० [१०/८/८], अ० वे० [१८ ३,२] परन्तूभयत्र बौधायनीय-पाठात्स्वल्पो भेदः।

भार्यान्तर्हि उक्तं मन्त्रमग्निदातैव पठेत्, दासस्य शूद्रतया तत्र तस्यानधिकारात्[1]।

अत्र सतीप्रथाया अवशेष उपलभ्यते। प्राचीनतरे हि समये ऋग्वेदादपि पूर्वं मृताय दत्तान्युपहाराण्यपि खन्यन्ते स्म। एषु चोपहारेषु भोजनम्, वस्त्रं, कदाचिच्च पत्नी, दासादिश्च दीयते स्म निखन्यन्ते[2] स्म च। परन्तु ऋग्वेदीयसमयेऽपि ईदृशी क्रूरता निवृत्तैवासीत्। गृह्यसूत्रयुगे तु सुतराम्। परवर्त्तिपद्धतिषु तु विधवाया श्मशानान्तं गमनमपि नोट्टङ्कितमस्ति। परन्तु सतीप्रथा परस्तादपि राजन्येषु प्रचलितैव समतिष्ठत्। पश्चाच्च १८३५ खृस्ताब्दे 'विलियम वेण्टिङ्ग' महाशयो न्यवारयदेनं विधिममानुषम्।

एवमुत्थापितायां विधवायां स्त्रियां वान्धवाः जरद्दासो वा ब्राह्मणक्षत्रियवैश्यानां शवानां हस्तेषु क्रमेण प्रदत्तान् सुवर्णपिण्डधनुर्मणीनाहर्तुम् प्रवृत्ता भवन्ति स्म[3]। अत्र उत्थापिता भार्यैवेति सायणादयः[4]। तत्रापि ब्राह्मणशवहस्तात्सुवर्णपिण्डमपनयन्—"स्वर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय। अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम" इति, क्षत्रियहस्ताद्धनुरपनयन् उक्तमेव मन्त्रं 'स्वर्णम्' इत्यस्य स्थाने 'धनुः' इति वैश्यप्रसङ्गे च 'मणिम्' इति प्रक्षिप्य पठेत्[5]। परमेष विधिरपि सतीप्रथया सहैवास्तं गतः।

एवमेव यदा जनः आहिताग्निर्भवति स्म तदा तदुपयुक्तानि यज्ञियानि साधनान्यपि शवस्य शरीरे समन्त्रममन्त्रं वा संस्थाप्यन्ते स्म। तत्र विधिः

---

(१) कर्त्ता वृषत्ने जपेत्। आश्व० गृ० [४/२/१९]

(२) थेडरः—आर्यन रिलीजियन, इन्साइक्लोपेडिया आफ़ रिलीजियन एण्ड एथिक्स [पृ० ११-५७, भा० २]

(३) आश्व० गृ० [४/२/२०]

(४) मैक्समूलरः—जर्नल आफ रोयल एशियाटिक सोसायटी (१८५४) [पृ० २०१-२१४]

अत्र विशिष्टो विचारः उक्तजर्नलस्यैव १८५९ वर्षीये खण्डे, २०९-२२० पृष्ठेषु राज्ञा राधाकान्तदेवमहाशयेन निबद्धो द्रष्टव्यः।

(५) एते मन्त्राः ऋ० वे० [१०.१८.९], अ० वे० [१८.२/६०] संख्यकमन्त्रस्यैव कृतोहानि पाठान्तराणीति मन्तव्यम्। विनियोगश्च बौ० पि० सू० [१/८/३-५]

संक्षेपेणोक्तो हरिहरेण—'दक्षिणनासारन्ध्रे आज्यपूर्णं स्रुवं निधाय पादयोरधरारणिमुरस्युत्तरारणिं च प्रागग्रां पार्श्वयोः सव्यदक्षिणयोः शूर्पंचमसौ मुसलमुलूखलं च न्युब्जमूर्वोरन्तराले तत्रैव चात्रयोर्विलीं च अरुदन् भयरहितो निदध्यात् अपसव्येन वाग्यतो दक्षिणामुखः सन्[१]' इति। बौधायनोऽप्याह—'कथमु खल्वस्य पत्राणि नियुञ्जयादिति? दध्ना सर्पिर्मिश्रेण पूरयित्वा मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवौ अक्ष्णोर्हिरण्यशकलावाज्यस्रुवौ वा प्रत्यस्य कर्णयोः प्राशित्रहरणं भित्वा शिरसि कपालानि ललाट एककपालं शिरस्तः प्रणीताप्रणयनं चमसं निदधाति—"इममग्ने चमसं मा विजीह्वरः प्रियो देवानाम् उत सोम्यानाम्। एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम्[२]" इति। आश्वलायनेनापि पात्रविन्यासः सम्प्रोक्तः[३]। तत्र सर्वत्रैषद्भेदो विन्यासक्रमे दृष्टोऽपि शाखाभेदकृत इति समाधेयः। तत्र दृषदुपले कौलालं लौहायसं च न योजयेत् प्रेतेन सहेति संकोचोऽपि आश्वलायनेनोक्तः[४]। बौधायनस्तु दृषदुपले अपि अण्डयोः प्रेतस्य योजयत्येव,[५] वर्जयति केवलमयस्मयानि लोहमयानि च पात्राणि यानि दातव्यानि ब्राह्मणेभ्य इति विशेषमाह[६]। तदनन्तरं यद्यनुस्तरणी हन्यते तर्हि तच्च कर्मणा प्राच्छादनीयः शव आपादमस्तकं यथाऽनुस्तरणीशरीरावयवम्। इतरथा तु सक्तुपिण्डान्निर्माय तन्निक्षिपेत् यथाशवाङ्गम्। इति पूर्वमेवोक्तम्। आहवनीयादीनग्नीनपि खातस्यान्ते दक्षिणपूर्वे आहवनीयम्, दक्षिणपश्चिमे च दक्षिणं निदध्यादित्याश्वलायनः[७]। एतच्चाग्नित्रयपक्षमपेक्ष्य। बौधायनस्तु[८] पञ्चाग्निपक्षमपेक्ष्य "अथैनमुपोषयति पुरस्तादाहवनीयेन दक्षिणतोऽन्वाहार्यवचनेन पश्चाद् गार्हपत्येन उत्तरतः सभ्यावसथ्याभ्याम्" इति जगाद। तत्रैषामग्नीनां क्रमेण युगपद्वाऽभ्युज्ज्वलने फलविशेषोऽपि निर्दिष्टः—'तं यद्याहवनीयः प्रथममभ्युज्ज्वलयेत् देवलकमभ्यजैषीत् इत्येनं जानीयात्, अथ यद्यान्वाहार्यपचनः पितृलोकम्, अथ यदि गार्हपत्यः गन्धर्वलोकम्, अथ यदि

(१) पा० गृ० ह० भा० [३/१०], जे०गृ० [२/४]
(२) बौ० पि० सू० [१/८/११], [१/९/१-२]
(३) आश्व० गृ० [४/३/१-१६]
(४) तत्रैव—[४/३/१७-१८]
(५) बौ० पि० सू० [१/९/२]
(६) तत्रैव [१/९/५]
(७) आश्व० गृ० [४/२/११-१३]
(८) बौ० पि० सू० [१/१०/६]

सभ्यावसथ्यौ सप्तर्षीणां लोकम्, अथ यदि सर्वं एव सहाभ्युज्ज्वलेयुः ब्रह्मलोकमभ्यजैषीदित्येनं जानीयात्[१]" इति ॥

## अथ दाहः—

तत्रादावग्निविचारः—आहिताग्निः गार्हपत्यादिभिरग्निभिर्दग्धव्यः। यथाह वृद्धयाज्ञवल्क्यः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः।
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥ इति।

अत एवायं प्रेतदेहो मन्यते आहवनीयादावाहुतिरेव[२]। एवमेव सवर्णा स्त्री च अग्निहोत्रिणः यदि पत्युः पूर्वं मृता भवेत् तर्हि त्रिभिरग्निभिरेव तस्या अपि दाहो विधेयः[३]। अनाहिताग्नेः पत्नी यदि पूर्वं मृता स्यात्तर्हि कापालिकेनाग्निना तां दहेत्[४]। तत्रापि छन्दोगस्त्रीणां दाहो मन्त्रं विनैवेति विशेषः[५]।

अनाहिताग्नीनां दाहेऽग्निस्वरूपम्—

विधुरं विधवां चैव कपालाख्याग्निना दहेत्।
ब्रह्मचारी यती चैव द ह्यतेतपनाग्निना ॥
तुषाग्निना च दग्धव्यः कन्यका बाल एव च ॥ इति।

तत्र कपालाग्निः—

अग्निवर्णं कपालन्तु कृत्वा तत्र विनिक्षिपेत्।
करीषादि ततो वह्निर्जातो यः स कपालजः ॥ इति।

---

(१) बौ० पि० सू० [१/१०/७]

(२) भा० गृ० [१/२]

(३) एवं वृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम्।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥ म० स्मृ० [५/१६७]

(४) पत्नीमपि दहेदेवं भर्तुः पूर्वं मृता यदि।
अनग्निकां दहेदेवं कापालेन हविर्भुजा ॥ नि० सि० [पृ० ११६७]

(५) अनयैवावृता नारी दग्धव्या या व्यवस्थिता।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितः ॥

उत्तपनस्तु—

दर्भाग्रैर्ऽग्नि तु प्रज्वाल्य पुनर्दर्भैस्तु संयुतः ।
पुनर्दर्भैस्तृतीयोग्निरेष उत्तपनः स्मृतः[1] ॥ इति ।

तुषाग्निः प्रसिद्धः । तुषपदेन धान्यादित्वगुच्यते । तत्र प्रज्वलितोऽग्निः तुषाग्निः । इत्थं यथायथमग्निमादाय दक्षिणतो मुखे प्रेतस्य अग्निं दद्यात् । आदीप्यमान च प्रेतमनुमन्त्रयेत् अग्निदः पुत्रादिः—

मैनमग्ने विदहो माऽभिशोचो मास्य त्वचं चिक्षिपो मा शरीरम् ।
यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात् पितृभ्यः[2] ॥ इति ॥

इयं ऋग्बौधायनेनात्र विनियुक्ता[3] । प्रज्वलितं च मन्त्रयते ऋचानया—

शृतं यदा करसि जातवेदोऽथेमेनं परिदत्तात् पितृभ्यः ।
यदा गच्छात्यसुनीतिमेतामथा देवानां वशिनीर्भवाति[4] ॥ इति ।

ततश्च प्रेतस्याङ्गानि सम्बोध्य पठेत् –

सूर्यं ते चक्षुर्गच्छतु वातमात्माऽद्यां च गच्छ पृथिवीं च धर्मणा ।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः[5] ॥ इति ।

ततः प्रेतं दहेत् । एतच्च समन्त्रकं दहनं साग्निकस्यैव, अनग्निकस्य तु तूष्णीमेवेति विशेषः । तदपि ग्रामाग्निनैवेत्युक्तं पूर्वमेव[6] ।

## अथ दाहान्तकृत्यम्—

ततो दाहान्ते नद्याद्युदकसमीपं गत्वा समीपस्थितं योनिसम्बद्धं श्यालकं वा 'उदकं करिष्यामहे' इति सपिण्डादयः प्रेतनिर्हारका उदकं याचयेयुः । यदि च शतवर्षादर्वाक्प्रेतो भवेत् तदा याचिताः श्यालकादयः "कुतस्त्वम्, मा चैवं पुनः" इति प्रतिवचनं दद्यात् । अथ यदि प्रेतः शतवर्षादूर्ध्वायुः स्यात्तर्हि 'कुरुध्वम्' इत्येतावदेव प्रतिवचनं दद्युः । ततः सप्तपुरुष-

(१) नि० सि० [पृ० ११६७-६८]
(२) ऋ० वे० [१०/१६/२]
(३) बौ० पि० सू० [१/११/१]
(४) ऋ० वे० [१०/१६/२]
(५) अ० वे० [१८ २ ७], ऋ० वे० [१०/१६/३]
(६) शालाग्निना दहन्त्येनमाहितश्चेत् ।
तूष्णीं ग्रामाग्निनेतरम् ॥ पा० गृ० [३/१०/११-१२]

सम्बन्धिनः सपिण्डा दशपुरुषसम्बन्धाः समानोदकाश्चैकग्रामनिवासे यावत्स्मृतं जलं प्रविशन्ति एकवस्त्राः प्राचीनावीतिनः। ततः सव्यहस्तस्यानामिकाङ्गुल्या उदकमपनोद्य 'अपनः शोशुचदघम्[1]' इति मन्त्रेण दक्षिणामुखास्तूष्णीं निमज्जन्ति। ततः प्रेतमुद्दिश्य 'अमुकसगोत्रामुकशर्मन् प्रेत एतत्ते उदकम्' इत्युच्चार्य एकैकमञ्जलिं[2] सकृद्भूमौ प्रक्षिपन्ति[3]। तत उदकादुत्तीर्य वस्त्रं परिवर्त्य शुचौ शड्वलवति प्रदेशे सर्वे सपिण्डा उपविशेयुः शोकनिमग्नाः। तत्र चेतिहासपुराणज्ञाः सुहृदः संसारानित्यतां दर्शयन्तः तान् शोकार्त्तान् अपवदेयुः[4]—

कृतोदकान् समुत्तीर्णान् मृदुशाड्वलसीस्थितान्।
स्नातानपवदेयुः तान् इतिहासैः पुरातनैः॥
मानुष्ये कदलीस्तम्भनिस्सारे सारमार्गणम्।
करोति यः स संमूढो जलबुद्बुदसन्निभे॥
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना॥
गन्त्री वसुमतीनाशमुदधिर्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति[5]॥

इत्येवं संसारासारतां प्रतिपादयद्भिः सुहृदुपदेशैः आत्मनः सान्त्वयन्तो ग्राममागच्छेयुः न पुनः सूर्यास्तात्प्रथमनक्षत्रदर्शनाद्वा पूर्वम्। केचनाचार्याः सूर्योदयादर्वाग् गृहं नैव गच्छेयुर्दाहका बान्धवाः इति मन्यन्ते। परावर्त्तनकाले च बालपुरस्सराः पश्चादनवलोकयन्त एव आगच्छेयुः। आगत्य च गृहद्वारे स्थित्वा निम्बपत्राणि दन्तैरवखण्ड्य आचम्य उदकमग्निं गोमयं गौरसर्षपेस्तैलं च क्रमेणालभ्य पादेनाश्मानमाक्रम्य गृहं प्रविशन्ति[6]। अत्र देशाचाराद व्यवस्था। अत एव बौधायनेनोक्तम्—"अथ गृहानायान्ति, यच्चात्र स्त्रिय आहुः तत् कुर्वन्ति[7]" इति। अश्मारोहणादिकमपि क्रियत एव।

---

(१) ऋ० वे० [१/१७.१-८], अ० वे० [१३ २/१७], तै० आ० [२/४/१ २]
(२) बौधायनस्तु अञ्जलित्रयं देयमित्याह—बौ० पि० सू० [१/१२/५]
(३) पा० गृ० [३/१०/१३-२१]
(४) पा० गृ० [३/१०/२२]
(५) या० स्मृ० [२/७-१०]
(६) पा० गृ० [३/१०/२३-२४], या० स्मृ० [२/१३]
(७) बौ० पि० सू० [१/१२/६]

अत्र रोदनं सर्वथा प्रतिषिद्धम्, रोदनेनाश्रुपाते प्रेतः स्वर्गाच्च्यवते इति हि शास्त्रम्[1]। परन्तु रोदनमद्य क्रियत एव, विशेषेण नारीभिः। सम्भवत्येतदेव प्रतिषेधकारणं यत् शास्त्रविभीषिकयाऽपि जनाः स्वान् सान्त्वयेयुः इति।

अन्त्येष्टिकर्तृनिर्णयः—

अन्त्येष्टिकर्त्ता पुत्रः, पुत्राभावे पत्नी, तदभावे सोदरः इति कात्यायनादयः[2]। तत्र पुत्रशब्दः सर्वविधपुत्रोपलक्षकः। तथा च याज्ञवल्क्य आह—

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः[3] ॥ इति।

एते च पुत्रा द्वादशाविधा याज्ञवल्क्यसंहितायामेव विवृता—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः[4] ॥ इति

विष्णुना तु पुत्रः पौत्रः प्रपौत्रः भ्राता भ्रातृसन्ततिः सपिण्डः सपिण्ड-

---

(१) रामायणे—शोचमानास्तु सस्नेहा बान्धवाः सुहृदस्तथा।
पातयन्ति जनं स्वर्गादश्रुपातेन राघव ॥
पा० गृ० हृ० भा० [३/१०]

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्तेऽवसो यत।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥
या० स्मृ० [२/११]

(२) पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
पुत्राभावे तु पत्नीस्यात्तदभावे तु सोदरः ॥ श्रा० म० [ पृ० ३१]

(३) या० स्मृ० [२/१३२]

(४) तत्रैव [२/१२८-१३२]

सन्ततिर्वेति क्रममाह[१]। तत्र पुत्रपदस्य द्वादशपुत्रपरत्वस्वीकारे शंखकात्यायनाद्युक्तपुत्राभावे पत्न्या अधिकारस्य बाधितत्वात् पौत्रप्रपौत्रानन्तरमेव पत्न्या अधिकार इति मयूखादयो मन्यन्ते। अन्ये तु नैवमिच्छन्ति। पत्न्यभावे दुहितेति च केचिदिच्छन्ति। तत्र सर्वत्र सम्प्रदायभेदादेव व्यवस्था मन्तव्या। पुत्रेष्वपि औरसस्य कनिष्ठत्वेऽपि पुत्रान्तरापेक्षया अन्तरङ्गत्वात् तस्यैव प्रथमाधिकारः। औरसेषु पुनर्ज्येष्ठस्यैव, सति योग्यत्वे तस्मिन्, अन्यथा तु यथायोग्यमनुजस्यापि। एवमाचार्यादिः पुत्राद्यभावे शिष्योऽप्यधिकारी भवति।

## अथाशौचव्यवस्था—

तत्र प्रथमं शवनिर्हारकाणां सपिण्डभिन्नानामशौचं निरूपयामः। ये हि द्विजातयः अनाथं ब्राह्मणं प्रेतं निर्हरन्ति निर्हरणकाले वा वस्त्रालंकाराद्यैर्भूषयन्ति तेऽपि अशुद्धा भवन्ति। ते यदि तत्क्षणादेव शुद्धिमिच्छन्ति तर्हि स्नानप्राणायामाभ्यां शुद्धिः[२]। एतच्च प्रेतं प्रति स्नेहादिरहितत्वे। तत्सहितत्वे तु निर्हारकाणां तदीयान्नम् भुञ्जानानां तद्गृहे निवसतां तत्सपिण्डवद्दशरात्रमाशौचम्। ये पुनः स्नेहात् शवं निर्हरन्ति न पुनः तदन्नमश्नन्ति केवलं तद्गृहे निवसन्ति तेषां त्रिरात्रम्। ये पुनः स्नेहेन शवनिर्हरणं कुर्वन्ति, न तु तदन्नं भुञ्जते न वा तद्गृहे वसन्ति तेषां त्वेकाहमाशौचम् इति व्यवस्था[३]

---

(१) पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः।
सपिण्डसन्ततिर्वापि श्राद्धार्हा नृप जायते॥ श्रा० म० [पृ० ३१]

(२) अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलमानुपूर्व्या लभन्ति ते॥
न तेषामशुभं किञ्चित्पापं वा शुभकर्मणि।
जलावगाहनात्तेषां सद्यः शौचं विधीयते॥ पराशरः॥
मिताक्षरा [३,१४]

प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि।
इच्छतां तत्क्षणात् शुद्धिः परेषां स्नानसंयमात्॥ या० स्मृ० [३/१४],
म० स्मृ० [५/८७]

(३) असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्यबन्धुवत्।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्॥
म० स्मृ० [५/१०१-१०२]

सजातीयानां शवनिर्हारकाणामाशौचस्य। विजातीयशवनिर्हारकाणान्तु शवजातीयमाशौचम्[१]। स्नेहात् विप्रस्य शूद्रनिर्हरणे मासाशौचम्। यदि तु अगत्या शूद्रो विप्रप्रेतं निर्हरेत् तर्हि तस्य ब्राह्मणवद्दशरात्रमाशौचमित्यर्थः। यत्तु पराशरेणोक्तम्—

एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः[२]। इति तत्।

मन्वादिविरोधादुपेक्ष्यमेवेति वयं पश्यामः। अथवाज्ञानकृतानुगमने एतत्।

ये पुनर्ब्रह्मचारिणः तेषां मातापित्राचार्योपाध्यायगुरुव्यतिरिक्तानां शवानां निर्हरणं प्रतिषिद्धम्। यदि तु मोहात् करोति तर्हि ब्रह्मचर्यात् च्यवते। उपनयनेनैव पुनः शुध्यति। मात्रादीन् निर्हृत्य तु तेषां यावद् ब्रह्मचर्यं नाशौचम्, समाप्ते तु ब्रह्मचर्ये त्रिरात्राशौचम्[३]। परन्तु मात्रादिशवं निर्हृत्यापि ते तद्बान्धवैः सह न वसेयुर्नापि तदन्नं भुञ्जीरन्निति विशेषो विज्ञेयः[४]। किन्तु सपिण्डे मृते सद्यः शौचं व्रतिनामपि भवत्येव[५]।

**अथानगमनाशौचम्—**

अत्र मनु— अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च।
स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्धयति[६]॥ इति।

अत्र ज्ञातयो मातृसपिण्डा, इतरेषां तु विहितत्वान्न दोषः। इदं च समानोत्कृष्टजातिविषयम् इति विज्ञानेश्वरः[७]। निकृष्टजात्यमुगमने तु प्रायश्चित्ता-

---

(१) अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत् पूर्वो वावरं वा तत्र तच्छवोक्तमाशौचम्॥ गौ० ध० [१४/१९]

(२) पा० गृ० ज० भा० [३/५]

(३) आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति॥ म० स्मृ० [५/८८]
आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम्।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते॥ तत्रैव॥ [५/९१]

(४) आचार्यपित्र्युपाध्यायान् निर्हृत्यापि व्रतं व्रती।
सकटान्नं च नाश्नीयात् न च तैः सह संवसेत्॥ या० स्मृ० [३/१५]

(५) तत्रैव [३/२८]

(६) म० स्मृ० [५/१०३]

(७) मिताक्षरा [३/२६]

न्तरम् । तत्र शूद्रशवानुगमने त्रिरात्रमाशौचम्, तदनन्तरं च समुद्रगामिनीं नदीं गत्वा तत्र स्नात्वा प्राणायामशतं कृत्वा घृतं प्राश्य च विप्रः शुध्यति[1] । यदि तु क्षत्रियशवमनुगच्छेद् ब्राह्मणः तर्हि अहोरात्रम् आशौचम्[2] । वैश्यानुगमने तु पक्षिणी । एवमेव यदि क्षत्रियो वैश्यमनुगच्छेत्तदा अहोरात्रमाशौचम्, शूद्रानुगमने तु पक्षिणी । वैश्यस्यापि शूद्रानुगमने एकाहमाशौचम्[3] ।

मृतसपिण्डैः सह रोदितुरपि एकाहमाशौचम्. एवमेव शवालङ्करणकर्तुरपि इति ज्ञेयम् ।

## अथ सपिण्डाशौचम्—

सपिण्डाशौचस्य लिङ्गव्यवत्यवस्थाभेदेनानन्तविधत्वादत्र केवलं प्रमुखाशौचान्येव निर्दिश्यन्ते ।

तत्र द्विवर्षादूने शिशौ मृते मातापित्रोरेवाशौचम्[4] नेतरेषामिति गृह्यकारमतम् । तदपि नामकरणात् प्राक् सद्यः, तदूर्ध्वं दन्तजननात् पूर्वम् एकरात्रम्, तत्पश्चात् त्रिरात्रम् प्रागुपनयनादाशौचम्[5] । मन्वादयस्तु[6] सर्वे-

---

(१) पराशरः— प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥
त्रिरात्रे तु ततस्तीर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥

(२) मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचम्, अस्निग्धे तु अहोरात्रं शवानुगमने चैकम्—वसिष्ठः ।

(३) मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम् ।
वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च ॥ पराशरः ॥
कृच्छ्रपादो सपिण्डस्य प्रेतालंकरणे कृते ।
अज्ञानादुपवासः स्यादशक्तौ स्नानमाचरेत् ॥ शंखः ॥
( एतानि वाक्यानि मिताक्षरायाम् ) [३/२६ ]

(४) अद्विवर्षे प्रेते मातापित्रोराशौचम् । शौचमेवेतरेषाम् ॥
पा० गृ० [३.१०]

(५) पा० गृ० क० भा० [३/१०]

(६) ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा वहिः ।
अलंकृत्य शुचौ भूमावस्थिसंचयनादृते ॥
नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया ।
अरण्ये काष्ठवत्यक्त्वा क्षपेयुस्त्र्यहमेव च ॥ म०स्मृ० [५/६८-६९]

षामेवैतदाशौचमित्याहुः। यद्यपि चूडाकरणात् पूर्वं मृते एकरात्रम्, तदूर्ध्वं तु त्रिरात्रम् इत्युक्तम् तथापि प्रथमवर्षे चूडाकरणं यदि चेत् तदैव विषय इत्यवगन्तव्यम्। वस्तुतस्तु प्रथमवर्षे कृतचूडस्य दन्तजनने सत्यपि त्रिवर्षं यावदेकाह एव। अत एव 'दन्तजातेऽप्यकृतचूडेऽहोरात्रेण शुद्धिः'[१] इत्युक्तम् विष्णुना। यत्तु मनुनोक्तम्—

नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते[२]॥ इति, तस्यापि

अयमेवार्थोऽवगन्तव्यः। तदयमर्थः-प्राङ् नामकरणात् सद्यः शौचम्,[३] तदूर्ध्वं दन्तजननात् अर्वाग्निक्रियशं सत्यामेकाहः। इतरथा सद्यः शौचमेव। जातदन्तस्य च प्रथमवार्षिकाच्चौलादर्वागेकाहः। प्रथमवर्षादूर्ध्वं त्रिवर्षपर्यन्तं कृतचूडस्य त्र्यहम्, इतरस्य तु एकाह एव। वर्षत्रयादूर्ध्वमकृतचूडस्यापि त्र्यहम्। उपनयनादूर्ध्वं तु ब्राह्मणस्य दशरात्रम् आशौचम् भवति।

ऊर्ध्वमुपनयनात् क्षत्रियस्य वैश्यस्य च कीदृशमाशौचम् इत्यत्र शास्त्रकारा विप्रतिपन्ना एव। तत्र पारस्करेण ब्राह्मणस्य दशरात्रमाशौच-विधानात् क्षत्रियस्य च पृथगनुल्लेखात् क्षत्रियस्यापि तन्मते दशरात्रमेवाशौच-मिति प्रतीयते। वैश्यस्य पुनः पक्षम्, शूद्रस्य तु मासमाशौचम् इति तु पारस्करः स्पष्टमेवाह[४]। आङ्गिरास्त्वाह—

सर्वेषामेव वर्णानां सूतके मृतके तथा।
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्॥इति।

तथा च शातातपमते सर्वेषां वर्णानां दशरात्रमेव पूर्णाशौचम्। पराशरस्तु दशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्येत्याह—

क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्॥ इति।

---

(१) विष्णुधर्मशास्त्रम्—[२२/२६]
(२) म० स्मृ० [५/६७]
(३) आदन्तजन्मनः सद्यः आचूडान्नैशिकी मता।
त्रिरात्रमाव्रतादेशात् दशरात्रमतः परम्॥ या० स्मृ० [३/२३]
अस्य याज्ञवल्क्यवचनस्य विज्ञानेश्वरकृता मिताक्षराऽवलोकनीया आशौचनिर्णयार्थम्।
(४) पा० गृ० [३/१०/३८]

मिताक्षरायां [३/२२] शातातपस्तु एकादशाहं राजन्यस्य द्वादशाहं वैश्यस्य विंशत्यहं शूद्रस्याशौचमाह—

एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा।
शूद्रो विंशतिरात्रेण शुद्ध्येत मृतसूतके॥ इति।

याज्ञवल्क्यस्तु आह—

"क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु।
त्रिंशद्दिनानि शूद्रस्य[1]"॥ इति॥

अयमेव विधिः सम्प्रत्यपिऽलोकेऽनुसृतो भवति। क्वचिच्चाधुना शूद्रोऽपि त्रयोदशाहेन शुद्धिं लभमानो दृश्यते।

## स्त्रीशौचे तु विशेषोऽवधातव्यः—

अपरिणीतायाः कन्यायाः कृतचूडायास्तु वाग्दानात्प्रागहोरात्रम्, अकृतचूडायां मृतायां सद्यः शौचम्, वाग्दानात्पूर्वं संस्कारात् प्राक् च मरणे त्रिरात्रमाशौचम्[2], इति। तत्रापि वाग्दानानन्तरं विवाहात्प्राङ् मरणे पितृपतिकुलयोरुभयोरप्याशौचमिति विशेषोऽवगन्तव्यः[3]। अत्र मन्वर्थमुक्तावल्यामुपात्तानि अवश्यावलोकनीयानि—

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते।
सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि।
अतः परं प्रवृद्धानां त्रिरात्रमिति निश्चयः॥

वाग्दाने तु कृते तत्र ज्ञेयं चोभयतस्त्र्यहम्।
पितुर्वरस्य हि ततो दत्तानां भर्तुरेव हि॥
स्वजात्युक्तमशौचं स्यात् मृतके सूतकेऽपि[4] च॥ इति।

अत्र 'दत्तानां भर्तुरेव हि' इति वचनं यदि प्रदत्ता कन्या पतिगृहे एव म्रियते तदैवाशौचबोधकम्। यदि तु दत्तापि कन्या पितृगृहे प्रसूते तदा

(१) या० स्मृ० [३/२२], द्र० म० स्मृ० [५/८३]
(२) मिताक्षरा [३/२४]
(३) मिताक्षरायां [३/२४] मरीचिः—

वारिपूर्वं प्रदत्ता तु या नैव प्रतिपादिता।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः समम्॥

(४) म० स्मृ० [५/७४[

एकाहम्, म्रियते तदा पितृकुलस्यापि त्रिरात्रमाशौचमिति व्यवस्था विज्ञेया। अतएव विष्णुनोक्तम्—'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत् पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं वा[१]' इति। अतएव च मिताक्षारायामप्येवमेवोक्तम्[२]। इत्थमेव यथासमयं जातिलिङ्गदेशवयोभेदेनाशौचव्यवस्था यथाशास्त्रं बोद्धव्या।

अत्रचेदमपि ज्ञातव्यम्—धर्मशास्त्रे केचन सन्ति परिगणिताः येषामाशौचे संकोच उक्तः। तत्र यज्ञानुष्ठानकर्तृणां दीक्षितानाम्, सत्रिब्रह्मचारिव्रतिदातृब्रह्मविदां च, नृपरहितयुतहतबान्धवानाम्, वज्रपातनिहतस्य, गोब्राह्मणाद्यर्थंहतात्मनो बान्धवानां च शास्त्रदृष्ट्या सद्य एव सपिण्डाशौचम् न तु यथाजाति दशरात्रादि[३]। एवमेव राज्ञामपि नाशौचं (सद्यः शौचम्) सपिण्डजननमरणकृतम्। यं च राजा नाशुचिं कर्तुमनुमन्यते पुरोहितादिं सोऽपि न आशौचभाक्[४] भवति। तत्र राजविषयेऽयं विशेषोऽवगन्तव्यः—राज्ञो ह्याशौचाभावस्य राजकर्मनिमित्तकत्वात् न राजकर्मानियुक्तस्येदं विधानम्। यदि तु ब्राह्मणादिरपि राजकर्मकर्ता तर्हि सोऽप्याशौचान्मुक्तो[५] भवति। अत एव मनुनोक्तम्—

राज्ञो माहात्मिके स्थाने सद्यः शौचं विधीयते।
प्रजानां परिरक्षार्थमासनं चात्र कारणम्[६]॥ इति॥

अतएव च विष्णुनाप्युक्तम्—'न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्त्रे न कारूणां कारुकर्मणि'[७] इति। तथा चायमाशौचाभावः

---

(१) विष्णुधर्मशास्त्रम् [२२/३३-३४]
(२) मिताक्षरा [३/२४]
(३) ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते॥ या० स्मृ० [३/२८-२९]
न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम्।
डिम्भाहवहतानां च विद्युता पार्थिवेन च॥
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः॥ म०स्मृ० [५/९३-९५]
(४) या० स्मृ० [३/२७]
(५) म० मु० [५/९४]
(६) म० स्मृ० [५/९४]
(७) विष्णुधर्मशास्त्रम् [२२ ४८-५१]

प्रतिनियतकर्मविषय एव न सर्वत्रेति मिताक्षरा। अत एव च विष्णुवचनात् दासादीनामप्याशौचाभावो वेदितव्यः। तदुक्तं मिताक्षरायां शातातपीये—

भृत्यकर्मकराः शूद्रा दासीदासास्तथैव च।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः[१] ॥ इति। इयं च

दासादिशुद्धिरपरिहरणीयतया प्राप्तस्पर्शविषयेत्यनुसन्धेयम्। अस्मादेव कारणात्--

कारवः शिल्पिनो वैद्याः दासीदासाश्चनापिताः।
राजानः श्रोत्रियाश्चैव सद्यः शौचाः[२] प्रकीर्त्तिताः ॥

इति पराशरोक्तमपि संगच्छत इत्यलम्।

एतस्मादाशौचविषयविधेरिदमवगम्यते यत् शास्त्रे आशौचव्यवस्था समाजलाभहानी ध्यात्वैव विहिता। सम्प्रति यद्यपि भारतीये समाजे सर्वत्रैवाशौचव्यवस्था वर्त्तते तथापि देशाचारादिभेदात् कियान् भेदोऽपि दृग्गोचरो भवति। परन्तु श्रुतिस्मृतिवैविध्यात् क्वचिच्चाग्रहादिकारणाच्च यथाशास्त्रं सा सा व्यवस्था मन्तव्या तिरस्कार्या वा तत्र तत्र विद्वद्भिः।

## प्रोषितमृताशौचम्—

विदेशस्थे मृते सति यावदाशौचम् तन्मध्ये यदा श्रुतं भवति तदा तदनन्तरं यावन्ति दिनानि नियताशौचामधिभूतान्यवशिष्टानि तावद्भिर्दिनैरेव शुद्धिरितिनिर्णयः शास्त्रे मन्वादिभिः[३] कृतः। यदि दशाहात्ययानन्तरं प्रोषितमृतस्य मृत्युरिति ज्ञानं भवेत्तर्हि मरणात् मासत्रयात्पूर्वं श्रवणे त्र्यहमाशौचम्, तदूर्ध्वं नवममासात्पूर्वमेकाहम्, नवमादूर्ध्वमर्वाक् संवत्सरात् स्नानमात्रेण शुद्धिः। तदेतदाशौचं सपिण्डानां मरणे विदेशे। तत्रापि यदि नद्यादिव्यवहिते देशान्तरे मृतस्तर्हि दशाहादूर्ध्वं मासत्रयादर्वागपि सद्यः शौचमेव भवतीति विज्ञानेश्वरः प्राह।

---

(१) मिताक्षरा [३/२७]
(२) पराशरस्मृतिः [३/२१-२२
(३) विगतं तु विदेशस्थं शृणुयाद यो ह्यनिर्दशम्।
यच्छेषं दशरात्रस्य तावदेववाशुचिर्भवेत् ॥
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥ म० स्मृ० [५/७५-७६]

मातापित्रोर्विदेशमरणे तु यस्मिन्दिने मृत्युर्ज्ञायते तद्दिनादारभ्य यथाजाति दशाहाद्याशौचमेव भवति। विमातरि मृतायां तु ज्ञानदिवसात् त्रिरात्रमाशौचं व्यतीतेऽपि संवत्सरे मृत्योरिति ज्ञेयम्[१]।

## आशौचमध्ये पुनराशौचसन्निपाते व्यवस्था—

तत्र वर्णापेक्षया वयोऽपेक्षया वा यस्य यावानाशौचकालः तन्मध्ये तत्समस्य ततो न्यूनस्य वा शौचस्य निमित्तभूते जनने मरणे वा सति पूर्वाशौचावशिष्टैरेवाहोभिः शुद्धिः। न पुनः पश्चादुत्पन्नजननादिनिमित्तं पृथगाशौचम् इति सामान्यतो व्यवस्था। किन्तु मातरि पूर्वं मृतायाम् तन्निमित्ताशौचमध्ये यदि पितुरुपरमः स्यात्तदा न पूर्वशेषेण शुद्धिः, किन्तु पितुः प्रयाणनिमित्ताशौचकालेनैव शुद्धिः। एवमेव पितरि पूर्वं मृते तन्निमित्ताशौचमध्ये यदि मातुरुपरमस्तदापि न पूर्वशेषाहोभिर्विशुद्धिरपि तु पूर्वाशौचं समाप्य तदुपरि पक्षिणीं क्षिपेदिति विज्ञानेश्वरः प्राह[२]। एवमेवान्यत्राप्याशौचमध्ये ह्याशौचान्तरसम्पाते यथाशास्त्रं व्यवस्था ज्ञेया।

## अशौचिनो नियमाः—

तत्राशौचमध्ये अग्निहोत्रादीन् त्यक्त्वा स्वाध्यायाध्ययनम्, तदध्यापनम्, नित्यानि च आवश्यकानि सन्ध्यावन्दनादीनि न कर्त्तव्यानीति पारस्करः प्राह[३]। याज्ञवल्क्योऽप्येनमर्थं समर्थयति[४]। एवमेव अक्षारलवणान्नमश्नीयुः, न तु क्षारलवणयुक्तम्, मांसाद्यामिषपदार्थं नाश्नीयुः, पृथक् पृथक् च क्षितौ शयीरन्[५], क्रीतमयाचितलब्धं वान्नं भुञ्जीरन् अन्यथात्वनशनमेव कुर्वीरन्नित्यादिका नियमा[६] अनुष्ठेया।

---

(१) मिताक्षरा [३/२१], पा०गृ० [३/१०/४४-४५]। अत्र पारस्करभाष्याण्यपि द्रष्टव्यानि।

(२) तत्रैव [३/२०]

(३) न स्वाध्यायमधीयीरन्। नित्यानि निवर्त्तेरन् वैतानवर्जम्॥
पा० गृ० [३/१०/३१-३२]

(४) वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्॥ या० स्मृ० [३/१७]

(५) अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ॥ म०स्मृ० [५/७३]

(६) क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्॥ या० स्मृ० [३/१६]

## पिण्डदानम्—

आशौचमध्ये पिण्डपितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपया प्रेताय दिनत्रयं पिण्डरूपमन्नं तूष्णीं क्षितावेव प्रदातव्यम्[1]। ये पुनरुपनीताः प्रेतास्तेभ्यः कुशोपरि पिण्डं दद्यात्[2]। पिण्डश्चोच्यते प्रेतावयवपूरकत्वात्[3]। तत्र प्रथमः शिरःपूरकः, द्वितीयः कर्णाक्षिनासिकापूरकः, तृतीयः गलांसभुजवक्षःपूरकः, चतुर्थः नाभिलिङ्गगुदपूरकः, पञ्चमः जानुजघनपादपूरकः, षष्ठः सर्वमर्मपूरकः, सप्तमो नाडीपूरकः, अष्टमो दन्तलोमपूरकः, नवमो वीर्यपूरकः, दशमः पुनः क्षुदभावतृप्तिपूर्णत्वपूरक[4] इति विशेषो ज्ञेयः।

## पिण्डद्रव्याणि—

पिण्डः शालिमयः, सक्तुमयः, शाकमयो वा स्यादिति शुनःपुच्छः[5]। ओदनामिषसक्तुशाकमूलफलादिभ्यो वा पिण्डो विधेय इति भविष्यपुराणम्[6]।

---

(१) मरीचिः—प्रेतपिण्डं बहिर्दद्यात् दर्भमन्त्रविवर्जितम्।
प्रागुदीच्या चरुं कृत्वा स्नातः प्रयतमानसः॥ नि॰सि॰ [पृ॰ ११९२]

(२) असंस्कृतानां भूमौ दद्यात् संस्कृतानां कुशेषु॥ प्रचेताः॥
मिताक्षरा [३/१६]

(३) पूरकेण तु पिण्डेन देहो निष्पद्यते यतः॥ नि॰ सि॰ [पृ॰ ११९५]
पिण्डमवयवपूरकं दत्त्वा—पा॰ गृ॰ ज॰ भा॰ [३/१०]

(४) ब्राह्मे—शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा।
द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः॥
गलांसभुजवक्षांसि तृतीयेन यथाक्रमम्।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च॥
जानू जंघे तथा पादौ पञ्चमेन तु सर्वदा।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः॥
दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः॥
नि॰ सि॰ [पृ॰ ११९६]

(५) शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत्।
प्रथमेऽह्नि यद् द्रव्यं तदेव स्याद्दशाहिकम्॥ मिताक्षरा [३/१६]

(६) ओदनामिषसक्तूनां शाकमूलफलादिषु॥ नि॰ सि॰ [पृ॰ ११९६]

इदं पुनः सपवित्रतिलमिश्रमेव देयं वस्तु पिण्डस्वरूपम् प्रेताय[1]।

**पिण्डपरिमाणम्—**

तत्र द्विवर्षवयस्कस्य शिशोर्मुखेऽनायासेन यावत्परिमाणः पिण्डः प्रविशेत्तावत्परिमाण एव पिण्डो निर्मातव्य इति व्यास[2] आह। अङ्गिरस्त्वाह[3] —कपित्थविल्वकुक्कुटाण्डामलकवदराणामन्यतमपरिमाणः पिण्डः श्रद्धया देयः इति। तदत्र शक्तिभेदाद् व्यवस्था ज्ञेया। मरीचिस्तु पार्वणे आर्द्रामलकपरिमाणः, एकोद्दिष्टे विल्वपरिमाणः, नवश्राद्धे तस्माद्वृहत्तरः, आशौचकालिकस्तु तस्मादपि वृहत्तरः पिण्डः कार्यं इति व्यवस्थामाह[4]।

**पिण्डसंख्या—**

तत्र दिवसे दिवसे[5] देयः इति वचनात् यावन्त्यशौचदिनानि तावन्तः पिण्डाः प्रदेया इति लभ्यते। अत एव मिताक्षरायाम् विष्णुरप्याह—"यावदाशौचं प्रेतस्योदकं पिण्डमेकं च[6] दद्युः" इति। तथा चाशौचानुसारेण ब्राह्मणस्य दश पिण्डाः, क्षत्रियस्य द्वादश, वैश्यस्य पञ्चदश, शूद्रस्य त्रिंशत् इति व्यवस्था मिताक्षरायामुक्ता। हेमाद्रिरप्येवमेवाह—

---

(१) सपवित्रैस्तिलैर्मिश्रं कृमिकेशविवर्जितम्॥ तत्रैव॥

(२) द्विहायनस्य वत्सस्य विशत्यास्ये यथासुखम्।
तथा कुर्यात्प्रमाणं तु पिण्डानां व्यासभाषितम्॥

(३) कपित्थविल्वमात्रान्वा पिण्डान् दद्यात् समाहितः।
कुक्कुटाण्डप्रमाणान्वा यदि वामलकैः समान्॥
वदरेण समान् वापि दद्याच्छ्रद्धासमन्वितः॥

(४) आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे।
एकोद्दिष्टे विल्वमात्रं पिण्डमेकं तु कारयेत्॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत्।
तस्मादपि स्थूलतरमाशौचे प्रतिवासरम्॥ श्रा० म० [पृ० ९८]

(५) दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु॥ नि० सि० [पृ० ११९४]

(६) मिताक्षरा [३/१६]

ब्राह्मणे दश पिण्डास्तु क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्त्तिताः[1] ॥ इति

पारस्करवचनात् । "आशौचे प्रतिवासरम्" इति[2] मरीचिवचनमप्यत्रैवानुकुलम् ।

एतत्तु न युक्तमवगच्छामः। पिण्डा हि पूरका इत्युक्ताः। न हि ब्राह्मणक्षत्रियादीनां शरीराङ्गानि भिद्यन्तो येन कस्यचिद्दश कस्यचिच्च द्वादश इत्येवमादिर्विकल्पः स्यात् । नापि 'शिरस्त्वाद्येन पिण्डेन' इत्यादि पूर्वोदाहृतवचने एतन्निर्दिष्टमपि यद् ब्राह्मणस्यैवैष नियम इति । तस्मात्सर्वेषामेव दशैव पिण्डा देया इति युक्तम् । अत एव—

"प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु" । इति,
देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ॥
वैश्यानां वै पञ्चदशे देयस्तु दशमस्तथा ।
शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते[3] ।। इति वचनं च

संगच्छते । तस्मात् दशैव पिण्डाः सर्ववर्णसाधारणाः । एवं च सति अनेकेषु सामान्यवचनेषु संकोचोऽपि न कर्तव्यो भवतीति लाघवमपि भवति ।

### सद्यः शौचादौ पिण्डव्यवस्था—

तत्र दशपिण्डा आशौचमात्रे प्रदेया[4] भवन्ति । अतः सद्यः शौचे त्र्यहाशौचेऽपि च दश पिण्डाः प्रदेया एवेति स्थितम् । तत्रापि सद्यः शौचे एकाहाशौचे च तस्मिन्नेव दिने सर्वेऽपि पिण्डाः प्रदेया इत्यविवादम् । त्र्यहाशौचे तु पुनः प्रथमे एकः, द्वितीये चत्वारः, तृतीये पञ्चेत्येकः पक्षः[5] ।

---

(१) नि० सि० [पृ० ११९०]
(२) श्रा० म० [पृ० ९८]
(३) नि० सि० [पृ० ११९०]
(४) आशौचस्य च ह्रासेऽपि पिण्डान् दद्याद्दशैव तु ॥
शातातपः ॥ मिताक्षरा [३/१६]
(५) सद्यः शौचे प्रदातव्या सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्यः प्रथमेऽह्नयेक एव हि ।
द्वितीयेऽहनि चत्वारः तृतीये पञ्चचैव हि ।। नि० सि० [पृ० ११९१]

प्रथमे त्रयः, द्वितीये चत्वारः, तृतीये त्रय इत्यपरः पारस्करोक्तः पक्षः[१]। तत्र यथाचारं व्यवस्था। तत्र पिण्डेन सह तिलतोयाञ्जलिभिरप्याराधनीयः प्रेतः। अञ्जलिसंख्या प्रथमे एका, द्वितीये द्वे, तृतीये तिस्र इति क्रमेण पञ्चपञ्चाशत्[२]। एवमेव धूपदीपाद्यपि दद्यादेव पिण्डेन सार्धम्।

### रात्रौ पिण्डदानविवेकः—

'दिवसे दिवसे' इत्युक्तौ दिवसपदमहोरात्रार्थकमित्याश्रित्य गौडाः। मैथिलास्तु दिवसपदाद्रात्रौ न करणीयं पिण्डदानमिति मन्वते। इयं हि स्थितिः सायं रात्रौ वा दग्धस्य प्रथमपिण्डदानविषय एव, अन्यत्र रात्र्युपस्थितिः अतो नैव सम्भवति, ततः पूर्वं दिवसे एव तत्कृत्यस्य सम्पादितत्वात्।

### पिण्डदातृविमर्शः—

पिण्डदानं पुत्रेणैव कार्यम् नान्येनोदकदानादिवत् सपिण्डेन। पुत्राभावे सपिण्डादेरधिकारश्रवणात्[३]। पुत्रेष्वपि ज्येष्ठेनैव सर्वानुमत्या, न तु पृथक् पृथक् सर्वैः[४]। यदि तु ज्येष्ठाभावे कनिष्ठो दाहकः स्यात्तर्हि तेनैव आदशाहात्

---

(१) प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसंचयनं तथा॥ मिताक्षरा [३/१६]
त्र्यहांशौचेऽपि दातव्यास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसंचयनं तथा॥
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः॥ नि० सि० [पृ० ११६४]

(२) एवं स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात्॥ तत्रैव॥

(३) पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः॥
तदभावे ऋत्विगाचार्यौ॥ गौ० ध० [२,६/१३-१४]

(४) सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत् कृतम्।
द्रव्येण वा विभक्तेन सर्वैरेव कृतं भवेत्॥
मरीचिः। मिताक्षरा [३/१६]

अत एव—निवर्त्तयति यो मोहात् क्रियामन्यनिर्वर्त्तिताम्।
विधिघ्नस्तेन भवति पितृहा चोपजायते॥
(नि० सि०—पृ० ११६५) इत्यादौ पुनःपिण्डदानं निषिद्धम्।
सांवत्सरिकादौ तु पृथक् पृथगपि दातुं शक्यम्।
"विभक्तस्तु पृथक्कुर्यात् प्रतिसांवत्सरादिकम्॥"
(बौ०पि० श०सू० ३) इति वचनात्।

कार्यम्, मध्ये समागतेऽपि ज्येष्ठे। अत एव यदि पुत्रानुपस्थितौ तदन्यः सपिण्डादिः अग्निसंस्कारकर्त्ता स्यात्तर्हि मध्ये पुत्रागमनेऽपि दशाहं यावत् दाहकेनैव पिण्डा देया इत्यपि बोध्यम्। तथा च गृह्यपरिशिष्टे—

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्[१]॥ इति।

## पिण्डोद्देश्यः—

पिण्डाः प्रेतमुद्दिश्यैव देयाः न त्वन्यानपि पूर्वजान्। प्रेतशरीरपूरकत्वात् पिण्डानाम्। यत्तु ऋग्वेदे[२] सर्वेषां पितृणामाह्वानं पिण्डाय श्रूयते तत् आशौचपिण्डदानातिरिक्तसपिण्डीकरणादिकालिकपिण्डदानविषयमेवेति मन्यामहे॥

## अस्थिसंचयनम्—

दाहानन्तरमस्थिसंचयनं विधीयते। अत्र प्राचीनाया निखातक्रियाया एवावशेषो लभ्यते। अथर्ववेदादौ शवनिखातस्योल्लेखो दृश्यते। पश्चाच्च दाहविधिर्विकसितः। तत्र दाहेऽस्थिसंचयनाभावात् निखाते एवायं क्रमः पूर्वमाश्रितः। पश्चाच्चास्थिसंचयनोपपत्तये 'निःशेषस्तु न दग्धव्यः' इति-व्यवस्थाया उद्भवः, येनावशिष्टानामस्थ्नां सञ्चयः समुपपन्नः स्यात्।

## अथ अस्थिसंचयनकालः

अस्थिसंचयनम् दाहाद्द्वितीये तृतीये चतुर्थे सप्तमे वा दिवसे विधेयम् इत्याह बौधायनः[३]। तत्रैते दिवसाः चत्वारः क्रमेण ब्राह्मणक्षत्रियवैश्यशूद्राणाम् अथवा विशेषेण यथासम्भवं सर्वेषामेव सर्वत्रेति स्पष्टं नोल्लिखितं तत्र। मन्त्रारम्भसामर्थ्यात्तु कथञ्चिन्नियममिमं द्विजातिमात्रविषयं कश्चिन्मन्यते यदि तथापि न व्यवस्था लभ्यते।

आश्वलायनेन तु 'संचयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे'[४] इत्युक्तम्। अस्यायमाशयः—कृष्णपक्षस्य दशम्याः तिथेरूर्ध्वम् अयुग्मासु तिथिषु एकादशीत्रयोदशीपञ्चदशीषु येन नाम्ना एकमेव नक्षत्रमभिधीयते तेषु नक्षत्रेषु

(१) मिताक्षरा [३/१६]
(२) ऋ० वे० [१०,१७] (समस्तं सूक्तमत्र द्रष्टव्यम्)
(३) बौ० पि० सू० [३/१०,१]
(४) आश्व० गृ० [४,५/१]

आषाढाद्वयं फल्गुनीद्वयं प्रोष्ठपदाद्वयं च विहायान्येषु नक्षत्रेषु अस्थिसंचयनं कार्यम् इति। "अन्तर्दशाहेऽतीते वा दशाहे कृष्णपक्षागमनमात्र इदं कार्यम्, नातीत एव दशाह इति नियमः। अतीते दशाह इत्ययं पक्षः संवत्सरे सपिण्डीकरणे एवोपपद्यते। द्वादशाहे सपिण्डीकरणपक्षे तु नोपपद्यते। सपिण्डीकृतस्य प्रेतस्य पृथक् पिण्डे नियोजनस्य प्रतिषेधात्।"

"यः सपिण्डीकृतं प्रेतं पृथक् पिण्डे नियोजयेत्।
विधिघ्नस्तेन भवति पितृहा चोपजायते॥" इति शातातप॥

संचित्य वैकोद्दिष्टं विधीयते श्राद्धमस्मै दद्युः इति। तस्मात्तस्मिन् पक्षे द्वितीयेऽहनि चतुर्थेऽहनि इत्यादिकालो द्रष्टव्यः इति वृत्तिकृत्प्राह। निर्णयसिन्धावप्येवमेवोक्तम्[1]।

आशौचमध्येऽस्थिसंचयने करणीये तु संवर्त्तेनोक्तम्—प्रथमे तृतीये सप्तमे नवमे वेति[2]। छन्दोगपरिशिष्टे तु द्वितीये तृतीये वेत्यभिहितम्[3]। चतुर्थे दिवसे इति विष्णुः[4]। कात्यायनोऽप्येवमेवाह[5]। आश्वलायनगृह्यपरिशिष्टे तु 'अन्तर्दशाहे षष्ठाष्टमदशमाहवर्ज्यम्'[6] इत्युक्त्वा प्रथमद्वितीयतृतीयतुर्थपञ्चमनवमदिनेष्विति प्रतिपादितम्। ब्रह्मपुराणे तु चतुर्थे ब्राह्मणानां पञ्चमेऽहनि क्षत्रियाणां नवमे वैश्यानाम् दशमे शूद्राणाम् अस्थिसंचयनं कार्यमिति निर्णयसिन्धौ[7]। अपरार्कस्तु ब्रह्मपुराणस्थवाक्यान्तरेण तृतीये ब्राह्मणानां चतुर्थे क्षत्रियाणाम् पञ्चमे वैश्यानाम् दशमे शूद्राणामित्याह[8]। हरिहरस्तु[9]

---

(१) नि० सि० [पृ० ११६८]
(२) प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा।
अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह॥ मिताक्षरा [३/१७]
(३) अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत्॥ नि० सि० [पृ० ११९६]
(४) चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात्—मिताक्षरा [३/१७]
(५) सञ्चयनं चतुर्थ्याम्—नि० सि० [पृ० ११९६]
(६) आश्व० गृ० प० [पृ० १६६]
(७) चतुर्थे ब्राह्मणानान्तु पञ्चमेऽहनि भूभृताम्।
नवमे वैश्यजातीनां शूद्राणां दशमात्परम्॥ दशमेऽहनि इति वा पाठः॥ नि० सि० [पृ० ११९६]
(८) अपरार्कटीका [३/१६]
(९) पा० गृ० ह० भा० [३/१०]

ब्राह्मणस्य चतुर्थेऽहनि क्षत्रियस्य पञ्चमे वैश्यस्य षष्ठे शूद्रस्यैकादशेऽहनि अस्थिसंचयनमिति मनुते।

तदेवं बहुविधे विकल्पे उक्तेषु दिनेष्वन्यतस्मिन् दिने स्वस्वगृह्योक्त-विधिना यथाचारं वा व्यवस्थेति विज्ञानेश्वरोऽपि प्राह[१]।

त्र्यहाशौचे पुनः द्वितीयेऽहनि विधेयमेतत्[२]। यत्त्वपरार्कोद्धृतब्राह्मे[३] तृतीयेऽस्थिसंचयनं त्र्यहाशौचे कर्त्तव्यमित्युक्तम्, तत्र युक्तिं न पश्यामः। वस्तु-तस्तु अपरार्के एवं वचनमुपलभ्यत एव नेति कमलाकरो भ्रान्तः।

सद्यः शौचे तु दाहानन्तरमेवैतत् कार्यम्[४]। एकाहाशौचेऽपि इयमेव व्यवस्था[५]। एवमेव पर्णनरदाहेऽपीयमेवानुकल्पभूता व्यवस्थेति प्राह कमलाकरः। अत्रास्थ्नामनुकल्पा दग्धावशेषाः पत्रांशा एवेति विशेष ऊह्यः।

अस्थीनि प्रधानाङ्गानामेव सञ्चेयानि। तथा चापरार्के ब्रह्मपुराणम्—
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि[६] च॥ इति।

तत्र प्रथममस्थिसंचयननिमित्तमेकोद्दिष्टश्राद्धं कृत्वा पुष्पधूपदीपनैवे-द्यादीनि समर्प्य 'ओम् क्रव्यादमुखेभ्यो देवेभ्यो नमः' इति मन्त्रेण पूजनं कुर्यात्। एतच्च श्मशानदेवपूजनमवश्यं कर्तव्यम्, अन्यथा ते देवाः अस्थिसंचयनकरं शपन्तीत्याहाङ्गिराः॥ ततो बलिदानम्। तत्र मन्त्रः—

देवा येऽस्मिन् श्मशाने स्युर्भगवन्तः सनातनाः।
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गलक्षणम्॥
प्रेतस्यास्य शुभाँल्लोकान् प्रयच्छन्त्वपि शाश्वतान्।
अस्माकं चायुरारोग्यं सुखं च ददताक्षयम्[७]॥ इति।

ततः क्षीरेणाभ्युक्ष्य सर्वांस्तान् विसर्जयेत्। तस्मादनन्तरमपसव्यं कृत्वा पलाशदण्डेनास्थीनि परिवृत्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे धारयेत्।

(१) मिताक्षरा [३/१७]
(२) पा० गृ० ह० भा० [३/१०]
(३) नि० सि० [पृ० ११९९]
(४) पा० गृ० ह० भा० [३/१०]
(५) नि० सि० [पृ० ११९९]
(६) अपरार्कटीका [३/१६]
(७) पा० गृ० ह० भा० [३/१०], अपरार्कटीका [३/१६]

तत्र शमीं च शैवालं च कर्दमं च धारयेत्। ततो घृतेन आक्तसर्वौषधीमिश्राण्यस्थीनि दक्षिणपूर्वायतान् यवाकारान् कर्षन् खात्वा तत्र कुशान् आस्तीर्य हरिद्रया पीतवस्त्रशकलमावृत्य तत्र– 'ओम् वाचा मनसा आर्त्तेन ब्रह्मणा त्रय्या विद्यया पृथिव्या मक्षिकायामपां रसेन निवपामि असौ' ( असौ इत्यस्य स्थाने प्रेतनाम ग्राह्यम् ) इति मन्त्रेण निक्षिपेत्। ततो नवे मृण्मये कुम्भे तूष्णीम् अस्थीनि निधाय तं कुम्भं भूमौ अरण्ये वृक्षमूले वा खात्वा स्थापयेत्। चितास्थितं सर्वमेव भस्म जले प्रक्षिपेत्। चिताभूमिं च गोमयेनोपलिप्य तेनैव पूर्वोक्तमन्त्रेण बलिं दद्यात्। तं च क्षीरेणाभ्यज्य देवता विसर्जयेत्। चिताभूमिसमाच्छादनाय च तत्र वृक्षं पुष्करं पट्टकं वा कारयेत्। ( सभाविश्रामार्थं काष्ठपाषाणविन्यासविशेषः पट्टकः। ) ततः समयेऽस्थीनि गंगाजले[1] प्रवाहयेत्। इयमेव संक्षेपेणास्थिसञ्चयनप्रक्रिया ब्रह्मपुराणाद्युक्ता।

## आशौचान्तदिनकृत्यम्—

आशौचान्तदिने आशौचनिवृत्यर्थं केशश्मश्रुवपनं लोमनखनिकृन्तनं च कार्यम्। तदेतत् श्राद्धकर्त्तुर्नियतमेव, अन्येषां च पुत्रादीनामत्यन्तनिकटस्थानां तदन्नभोजिनां तत्सहवासिनां च। इदं क्षौरकर्म अन्यैरपि दुःखानुभाविभिः सपिण्डैः करणीयम्। तत्राप्यल्पवयस्कैरेव। गौडास्तु पुत्रमात्रस्य वपनमिच्छन्ति। सर्वं चैतन्मिताक्षरायां[2] स्पष्टीकृतम्। ततः सचैलं स्नात्वा अहतवाससः प्रक्षालित-शुक्लवाससो वा सुवर्णदूर्वादीनि मङ्गलानि स्पृष्ट्वा विष्णुस्मरणादिना शुद्धा भवन्ति। गृहेषु आशौचमध्ये व्यवहृतानां मृण्मयादीनां च परित्यागः। वस्त्रासनखट्वादीनां प्रक्षालनम, गृहस्य सम्मार्जनलेपनादि, आबालं च सचैलस्नानम्। एवं सम्पाद्य शुद्धिं ब्राह्मणेभ्यः स्वस्तिवाचनं कारयित्वा तेभ्यो दानं दद्यात्। ततोऽभ्यङ्गस्नाताभिः सुवासिनीभिराहृतजलेन पाकं कृत्वा सर्वे सपिण्डा हविष्यान्नमद्युः।

---

(१) यावदस्थि मनुष्याणां गंगातोयेषु तिष्ठति।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते॥
गंगातोयेषु यस्यास्थि प्लवते शुभकर्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन॥
नि० सि० पृ० [१२०१], पा० गृ० ह० भा० [३ १०]

(२) मिताक्षरा [३ १७]

**अथैकादशाहकृत्यम्—**

तत्राहिताग्नेर्दाहदिनादेकादशे अनाहिताग्नेश्च मरणदिनादेकादशाहे विधिवत्स्नात्वाऽहते वाससी परिधाय विष्णुपूजनपूर्वकं विष्णुतर्पणं विधाय आद्यश्राद्धं कुर्यात्। तद्विधिस्तु अनावश्यकत्वात् प्रतिशाखं भिन्नत्वाच्च नेह विलिख्यते।

**वृषोत्सर्गः—**

अयं नित्यः काम्यश्च। अत एव मत्स्यपुराणे—
न करोति वृषोत्सर्गं तीर्थे वापि जलाञ्जलिम्।
न ददाति सुतो यस्तु पितुरुच्चार एव[1] सः॥ इति।
एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्[2]॥ इति।

ब्रह्माण्डपुराणवाक्यमपि सुप्रसिद्धमेव। अत एव च एकादशाहे वृषोत्सर्गाकरणे न प्रेतत्वविमुक्तिरित्यभिहितं[3] षट्त्रिंशन्मतेऽपि। वृषोत्सर्गस्य करणात् दश पूर्वा दश चापराः प्रेतश्चैकविंशतिः पूयन्ते[4]।

अयमेकादशाहे आद्यश्राद्धदिने कार्य इत्येकः पक्षो निर्दिष्टः षट्त्रिंशन्मतवाक्ये पूर्वम्। कालान्तराणि च कार्तिक्याम्, माघ्यां चैत्र्यां वा तृतीयायाम्, वैशाख्यां च, द्वादशेऽह्नि वेति। अयनद्वयम् आश्विनशुक्लपक्षपञ्चदश्यां वेति[5] च।

**नीलवृषः—**

अत्रोत्सृज्यो वृषो नीलः प्रशस्तः। तल्लक्षणं च—
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥ इति।

---

(१) नि० सि० [पृ० १२३०]
(२) श्रा० म० [पृ० १३३]
(३) एकादशेऽह्नि विप्रस्य यस्य नोत्सृज्यते वृषः।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि॥ नि० सि० [पृ० १२३२]
(४) यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिम्।
वृषोत्सृष्टः पुनात्येव दशातीतान् दशापरान्॥ तत्रैव।
(५) भविष्योत्तरे –कार्त्तिक्यामथवा माघ्यामयने वा युधिष्ठिर।
चैत्र्यां वापि तृतीयायां वैशाख्यां द्वादशेह्नि वा॥
श्रा० म० [पृ० १३२]
अथ वृषोत्सर्गः—कार्त्तिक्यां पौर्णमास्यां क्रियेतापि वा आश्वयुज्यां वैशाख्यां गोष्ठे गवां मध्ये॥ बौ० गृ० [३/१६/१]

ब्राह्मे[1]।

ब्रह्माण्डपुराणेऽपि—

चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णं च तं नीलमिति निर्दिशेत्[2] ॥ इति।

**वत्सतरीदानम्—**

वृषेण सह यथाशक्ति चतस्रो वत्सतर्यः[3] द्वे वा देये[4] एव। सति सम्भवेऽधिका अपि।

**वृषानुकल्पः—**

वृषाभावे मृद्भिः, पिष्टैः दर्भैर्वा निर्मितं वृषं समुत्सृजेत् इति क्वचिच्छ्रूयते। कमलाकरादयस्त्वेतन्निर्मूलमाहुः[5]।

**वृषोत्सर्गविधिः—**

सव्येन पाणिनावृषस्य पुच्छं समवलम्ब्य दक्षिणेन[6] तु कुशतिलजलान्यादाय प्रेतगोत्रनामोच्चारपूर्वकं समुत्सृजेत। ततः सुर्वणं तिलांश्च भूमौ निक्षिपेत्।

---

(१) नि० सि० [पृ० १२३२], बौधायनीये तु [३/१६/१४] पाठान्तरम् दृश्यतेऽत्र।

(२) श्रा० म० [पृ० २३३]

(३) गोभिश्चतुर्भिः सहितमुत्सृजेत्तम्—श्रा० म० [पृ० १३३]

(४) देवीपुराणे—चतस्रो वत्सिका भद्रा द्वे वा सम्भवतोऽपि वा ॥ नि० सि० [पृ० १२३३]

(५) तत्रैव [१२३३]

(६) सव्येन पाणिना पुच्छं समालम्ब्य वृषस्य तु।
दक्षिणेनाप आदाय सतिलाः सकुशास्ततः ॥
प्रेतगोत्रं समुच्चार्य अमुकस्मै इति ब्रुवन्।
वृष एष मया दत्तस्तं तारयतु सर्वदा ॥
सहेम सतिलं भूमावित्युच्चार्य विनिक्षिपेत् ॥ तत्रैव ॥

## स्त्रिया वृषोत्सर्गव्यवस्था—

वृषोत्सर्गो भवति स्त्रीप्रेतनिमित्तकोऽपि। परन्तु यदि मृता स्त्री पतिपुत्रवती स्यात् तर्हि वृषोत्सर्जनं न विधेयम्। तत्स्थाने पयस्विनीं गां दद्यात्[१]। अत्र च पतिपुत्रयोः साहित्यस्य विवक्षितत्वात् यदि पतिमती पुत्रवती वा स्त्री म्रियते तर्हि तन्निमित्तको वृषोत्सर्गः करणीय एवेति बोध्यम्।

## द्वादशाहदिनकृत्यम्—

द्वादशे च दिने तीर्थे गत्वा गोष्ठे वा विष्णुं सम्पूज्य मासिकश्राद्धं कुर्यात्। तत्र (प्रथमे प्रथमम्) मासपूर्त्तौ द्वितीयम्, ततस्तृतीये पक्षे त्रैपक्षिकं श्राद्धम, तृतीये तृतीयम्, चतुर्थे चतुर्थम्, पञ्चमे पञ्चमम्, षष्ठे मासे एकेन दिवसेनोने द्वाभ्यां वा दिवसाभ्यां त्रिभिर्वा दिवसैरूने ऊनषाण्मासिकम्,[२] षष्ठे षाण्मासिकम्, सप्तमे सप्तमम्, अष्टमे अष्टमम्, नवमे नवमम्, दशमे दशमम्, एकादशे एकादशम्, द्वादशे एकेन द्वाभ्यां त्रिभिर्वा दिनैरूने ऊनवार्षिकम्, द्वादशे वार्षिकं चेति षोडशमासिकश्राद्धानि भवन्ति सामान्यतः। परन्तु संवत्सरमध्ये यद्यधिमासपातः तर्हि एकं मासिकमधिकं कुर्यात्। एतेन स्पष्टमेवेदमवगम्यते यत् इदं मासिकश्राद्धं प्रेतपाथेयरूपमेव, यतः प्रेतो वर्षमपेक्षते स्वपितॄन् पितृलोके स्थितान् गन्तुम् इति। एतान्येव षोडशश्राद्धान्युच्यन्ते शास्त्रे।

सम्प्रति तु लाघवेन द्वादशाहेऽह्न्येव सर्वाणि मासिकश्राद्धानि विधीयन्ते। क्वचित् क्वचित् पूर्वोक्तरीत्या मासे मासेऽप्येतदनुष्ठानं दृश्यत एव। अधिमासनिमित्तमासिकैकवृद्धिश्चास्मिन् पक्षेऽपि करणीयैव भवति। मासिकश्राद्धं चैकोद्दिष्टस्वरूपमेव भवति न तु ततः कश्चिद्भेद। सङ्कल्पवाक्ये पुनः तत्तन्मासिके तत्तत्पदप्रयोगः कर्तव्यो भवति॥

---

(१) पतिपुत्रवती नारी भर्तुरग्रे मृता यदि।
वृषोत्सर्गं न कुर्वीत गां च दद्यात् पयस्विनीम॥ नि० सि० [पृ० १२३३]

(२) पा० गृ० वि० भा० [३/१०]
(अत्र ऊनमासिकमपि मृत्योः दाहात् वा सप्तविंशतिमेऽष्टाविंशतिमे एकोनविंशतिमे वा दिने कार्यम्। ततः मासपूर्वौ मृताहे द्वितीयम्॥)

## सपिण्डीकरणम्—

सपिण्डीकरणं नाम प्रेतस्य प्रेतत्वनिवृत्त्यर्थं, वसुरुद्रादित्यलोकप्राप्त्यर्थं च पित्रादिभिः सह तत्तत्पिण्डसम्मेलनमुखेन प्रेतस्य सम्मेलनम्। एतच्चावश्यमेव कार्यम्, अर्वाक् सपिण्डनात् प्रेतत्वविमोक्षाभावात्।

## सपिण्डीकरणकालः—

संवत्सरपर्यन्तं यदि क्रमेण मासिकश्राद्धानुष्ठानं तर्हि प्रथमसंवत्सरस्यान्तिमे दिने सपिण्डीकरणम्। अत एव षोडशश्राद्धसम्पादनानन्तरं सपिण्डनं शास्त्रे प्रोक्तम्। यदि च द्वादशाह एव षोडशश्राद्धसमाप्तिः तर्हि तद्दिन एव सपिण्डीकरणमपि कार्यम्। तथा चाहाश्वलायनः - 'अथ सपिण्डीकरणं संवत्सरान्ते[1] द्वादशाहे वा' इति॥ कात्यायनस्त्वाह—'ततः संवत्सरे पूर्ण सपिण्डीकरणं त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते'[2] इति। तथा च संकलनया चत्वारः पक्षा संवृत्ताः - द्वादशाहे, त्रिपक्षे, वृद्धिप्राप्तौ, संवत्सरे वेति। तत्र साग्निकेन द्वादशाहे पितुः सपिण्डनं कर्त्तव्यम्। अन्यथा पिण्डपितृयज्ञानुष्ठानासिद्धेः। निरग्निकस्तु त्रिपक्षे, वृद्धिप्राप्तौ, संवत्सरे वा कुर्यात्। सम्प्रति तु सर्वेषामेव सपिण्डनं प्रायेण द्वादशाह एव क्रियते, तस्मिन्नेव दिने षोडशश्राद्धसमाप्तेः।

अत्रेयं रीतिर्द्रष्टव्या—यदा प्राक्संवत्सरात् सपिण्डनं तदा षोडशश्राद्धानि कृत्वैव सपिण्डनं कर्तव्यम् उत स्वस्वकाले (मासि मासि) षोडशश्राद्धानि कुर्यात्, कृत्वापि संवत्सरादर्वाक् सपिण्डीकरणम् इत्यत्र वचनद्वैविध्यं[3] यद्यपि शास्त्रे दृश्यते तथापि सपिण्डीकरणं कृत्वा समये मासि मासि षोडशश्राद्धानि कुर्यादिति प्रथमः कल्पः, अप्राप्तकालत्वेन प्रागनधिकारात्। यत्तु षोडशश्राद्धानि कृत्वैव सपिण्डीकरणं कार्यमिति वचनं तदापद्विषयम्। एतादृशं च सपिण्ड-

---

(१) आश्व० श्रा० [१/३/११]

(२) कात्यायनश्रौतसूत्रम्—[३/३/११]

(३) सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश॥ श्रा० म० [पृ० १३१]
अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत्।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे॥ या० स्मृ० [१/२५५]
अत्र सोदकुम्भमन्नमित्यनेन मासिकश्राद्धं सूच्यते।

नमेकोद्दिष्टविधिनैव[1] कर्तव्यमिति विशेषः। सम्प्रति तु द्वादशाहे एव सर्वं सम्पादनीयमिति षोडशश्राद्धानन्तरमेव सर्वेषामपीत्युक्तमेव।

एतच्च सपिण्डीकरणं संविभक्तेष्वपि भ्रातृषु सत्स्वपि एकेनैव अधिकारिणा कर्तव्यम्, न तु पृथक्[2] पृथक्। तच्चेदमसन्यासिनां प्रेतत्वविमुक्त्यर्थं नियतम्। यतीनान्तु नैव कर्तव्यम्। तेषां त्रिदण्डग्रहणादेव प्रेतत्वविमुक्तिसद्भावादस्य निरर्थकत्वात्। पार्वणश्राद्धं तु तेषामपि भवत्येवेत्येतत्सर्वमुशनसा स्पष्टमेवोक्तम्[3]।

एतच्चामन्त्रकं शूद्राणामपि कर्तव्यमेव, शास्त्रप्रामाण्यात्[4] इति निर्णयः।

अत्र प्रेतपितृपितामहप्रपितामहानामर्घ्यपात्राणां प्रेतार्घ्यपात्रेण एकैकेन 'ये समानाः' इत्यादिमन्त्रद्वयेन सम्मेलनम्। प्रेतपिण्डं च त्रिधाविभज्योक्ताभ्यामेव मन्त्राभ्यामेकैकांशं क्रमशः पितृपितामहप्रपितामहपिण्डैः सह सम्मेलयति श्राद्धकर्त्ता। आदित्यलोकप्राप्तिकामना चात्र प्रेताय करणीया। एतदुत्तरं प्रेतशब्दप्रयोगो न युज्यते। अन्ते च एतत्पठेत्—

एष वोऽनुगतः प्रेतः पितरस्तं दधामि वः।
शिवमस्त्विह शेषाणां जायतां चिरजीवितम्॥
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति[5]॥ इति॥

सम्प्रत्यपवादभूतान्त्येष्टिविषयमधिकृत्य यथासम्भवं यथाशास्त्रं च विवेचनीयं संक्षेपेण—केषामन्त्येष्टिर्विलक्षणा, केषाञ्च नैवेति।

---

(१) मिताक्षरा—[१/२५५]

(२) नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥ मिताक्षरा—[१/२५५]

(३) एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा।
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते॥
सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥ नि० सि० [पृ० ११३८-३९]
(अत्र त्रिदण्डग्रहणादेकदण्डिनां सर्वं कर्तव्यमेवेति शूलपाणिप्रभृतयो मन्वते।)

(४) पा० गृ० वि० भा० [३/१०]

(५) ऋ० वे० [१०/१९१/४]

इयमन्त्येष्टिः क्वचन प्रसंगेषु वैशिष्ट्येन सम्पाद्यते। तत्र लौकिकानां क्रियमाणाया अन्त्येष्टिक्रियायाः कियान् भेदो मतः शास्त्रकाराणाम्। सम्प्रति एतमेव विषयमधिकृत्य किमपि विवेचयामः—

## आहिताग्नेरन्त्येष्टिः—

आहिताग्नेः अग्नित्रयस्थापकस्यान्त्येष्टिरितरेभ्यो भिन्नरूपेणैव सम्पाद्यते। तत्राहिताग्नेर्मृत्योः पूर्वमपि मरणासन्नं तं विज्ञाय होमः कार्यः, परस्तादपि मृत्योः[१]। स्मृतिष्वपि आहिताग्न्यनाहिताग्न्योर्दाहे भेदो वर्णित एवास्ते। वृद्धयाज्ञवल्क्येनोक्तं यत् आहिताग्नेः प्रेतं त्रिभिरग्निभिर्दाहयेत्, अनाहितस्यैकेन स्मार्त्तेनाग्निना, अन्येषान्तु लौकिकाग्निनेति[२]। अङ्गिरसाप्युक्तं यत् आहिताग्नेराशौचं तद्दाहदिनादारभ्यते, अनाहिताग्निकानां तु मृत्युदिवसादेव[३]। परन्त्वद्य प्रायेणाहिताग्नीनामभावात् लोके भेदोऽयं न व्यवह्रियते एव।

## शिशोरन्त्येष्टिः—

शिशोरन्त्येष्टिक्रियायामपि विशेषः शास्त्रेषु दृश्यते। बौधायनेन स्पष्टमत्रोक्तम्— 'यथा एतन्न प्राक् चौलात् प्रमीतानां दहनं विद्यते चानुपनीतानां कन्यकानां पितृमेध इत्युक्तम्'[४] इति। अत्र कन्यकानामनुपनीतानामित्यस्याविवाहितानामित्यर्थः, विवाहस्यैव कन्यायाः उपनयनस्थानिकत्वस्य व्यवस्थापनात्। पुराकल्पे नारीणां मौञ्जीबन्धे विहितेऽपि कलौ तस्य स्पष्टत एव पराशरादिभिर्निषिद्धत्वात्। अतश्च जननसमयमप्राप्यैव जातस्य मृतस्य

---

(१) बौ० पि० सू० [३/१/१५]

(२) आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः।
अनाहिताग्निरेकेन लौकिकेनापरो जनः॥ पा० गृ० ह० भा० [३ १०],
द्र० बौ० पि० सू० [३/१/९-१३]

(३) अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः।
शुद्धिः संचयनं दाहान्मृताहस्तु यथाविधि॥ अङ्गिराः॥
अनग्निमत उत्क्रान्तेराशौचं हि यथाविधि।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति॥ पैठीनसिः॥
मिताक्षरा—[३/२०]

(४) बौ० पि० सू० [३.६/१]

शिशोः निखननमेव, शुद्धिश्च स्नानमात्रेणेति लभ्यते। एवमेव येषामजातदन्तानां मृत्युः तेषामपि निखननमेव प्रणवोच्चारणपूर्वकं बौधायनादयो मन्यन्ते[1]। पारस्करेणापि ऊनद्विवर्षस्य शिशोर्मरणे[2] निखननमेव प्रदिष्टम्। यद्यपि मनुना—

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः।
अलंकृत्य शुचौ भूमावस्थिसंचयनादृते॥
नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च[3]॥

इत्यनेनोनद्विवार्षिकस्य शिशोः बहिः स्थापनमात्रमुक्तं तथापि मिताक्षराद्यनुरोधेन मनोरप्ययमेवाशयो मन्तव्यः परस्परं शास्त्राणां सामञ्जस्याय। जातदन्तस्य पुनरन्यत्र निखननमेव दृश्यते यद्यपि तथापि मनुनाविकल्पस्योक्तत्वात्[4] दाहोऽपि कर्त्तुं शक्यते। बौधायनोऽप्येनमर्थं स्पष्टं समर्थयत्येव[5]।

एवं सत्यपि व्यवस्थिते क्रियास्वरूपेऽद्य प्रायेण शिशूनां गंगादिनदीषु प्रवाहनमेव दृश्यते न तु निखननं वाराणस्यादिक्षेत्रेषु। क्वचिच्चाधुनापि मिथिलादिषु यथाधर्मशास्त्रं व्यवस्थाऽवलोक्यते। 'क्षपेयुस्त्र्यहमेव वा' इत्यत्र मनूक्तौ यद्वक्तव्यं तदाशौचप्रकरणे उक्तमेव।

**गर्भिण्या अन्त्येष्टिः—**

गर्भिण्यां मृतायामप्यन्त्येष्टिः कियता विशेषेण सहैव सम्पाद्यते[6]। बौधायनेनात्र निगदितं यत् मृतां गर्भिणीं श्मशानभूमिं नीत्वा तदुदरात् शिशुं

---

(१) बौ० पि० सू० [३/६/३]

(२) अद्विवर्षे प्रेते शरीरमदग्ध्वा निखनन्ति॥ पा० गृ० [३ १०,२-५]

(३) म० स्मृ० [५/६८-६९]

(४) नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया।
जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति॥ म० स्मृ० [५/७०]

(५) बौ० पि० सू० [३/६ ५]

(६) अथ गर्भिण्यामन्तर्वत्न्यां म्रियेतात ऊर्ध्वं श्मशानं नीत्वा दहनं जोषयेत्। तस्य चितामपरेण सव्येन वा प्रेतस्योदरम् लिखेत्—"हिरण्यगर्भः समवर्त्तताग्रे" इत्यनुलेखनम्। कुमारं दृष्टमनुमन्त्रयते—'जीवतु मम पुत्रो दीर्घायुत्वाय वर्चसे' इति॥ बौ० पि० सू० [३/६/१-२]

निष्कृष्य (यदि प्राप्तजीवः स स्यात्तर्हि) अष्टकातिलभूमिधेनूः प्रदाय दाहादिकं कार्यम् इति। सम्प्रत्यत्रापि नावध्यानं प्रायेण दीयते लोके इति महदमानुषमाचर्यते।

**नवप्रसूतरजस्वलयोरन्त्येष्टिः—**

नवप्रसूताया रजस्वलायाश्चान्त्येष्टौ समापन्ने पञ्चगव्यमिस्रघटोदकेन तां स्नपयीत पूर्वम्। एतावता हि सूतकादिदोषैः सा विरहिता भवति। ततश्च प्राजापत्यामाहुतिं संस्कारको दद्यात्। तदनन्तरं चाहतेन वाससा प्रेतशरीमाच्छाद्याग्निसंस्कारं कुर्यात्। परन्तु तस्याः 'निःशेषस्तु न दग्धव्य.' इत्यादिवचनात् कियदंशं परित्यज्यैव दाहो विधेयः इति निरूपितं गदाधरपद्धतौ। तत्रापि वस्त्राच्छादनं रजस्वलामात्रस्यैव[१]।

अद्यतु अस्थिसञ्चयननिमित्तं किञ्चिदवशेषयत्येव सर्वेषामपि शवानाम्, गंगादिप्रक्षेपणनिमित्तं वेति नवीनाः निबन्धकाराः उक्तं वचनं सर्वदाहविषयकमेव मन्वते।

**परिव्राजकान्त्येष्टिः—**

परिव्राजकस्य परित्यक्तलोकस्यान्त्येष्टिरपि लौकिकेतरा एव भवति। अत एव तैत्तिरीयारण्यके अस्या नाम ब्रह्ममेध इति लभ्यते न पुनर्लौकिकान्त्येष्टिवत् पितृमेध इति। अस्य विधिश्च बौधायनेनोक्तः—परिव्राजकशवं गर्त्ते 'अक्षिभ्यामोषधिभ्याम्' इति मन्त्रेण निधाय—'भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्" इति मन्त्रेण तदुदरे तत्पात्रं निदध्यात्। ततश्च तत्कमण्डलुं जलेनापूर्य तस्य दक्षिणे हस्ते निधाय मृद्भिः तमाच्छादयेत्—'अग्निनाऽग्निः समीध्यते' इति मन्त्रेण।

---

(१) सूतिकायां मृतायान्तु कथं कुर्वन्ति याज्ञिकाः।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च।
पुण्यर्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः।
तेनैव स्नापयित्वा तु दाहं कुर्याद् यथाविधि॥
पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम्।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्॥ मिताक्षरा [३/२०]

एतेन संस्कर्ता अश्वमेधफलभाग्भवति[1]। अस्य दाहोत्तरकृत्यं प्रतिषिद्धमेव[2]। आब्दिकं श्राद्धं तु पुत्रादिभि कर्त्तव्यमेव। अत एव दत्तात्रेयेणोक्तम्—

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्।
न कुर्याद्वार्षिकादन्यत् ब्रह्मीभूताय भिक्षवे॥ इति।

तथा च पूर्वोदाहृतोशनसो वचने सपिण्डनादिनिषेधानुवादेन पार्वणस्य विधानात् एकादशे दिने क्रियमाणं पार्वणं सपिण्डीक णस्थानीयमिति गम्यते। द्वादशे च दिने नारायणवलिर्दातव्यः। ततश्च द्वादशं सद्गृहस्थान् साधून् वा निमन्त्र्य तांश्च केशवाय नमः, नारायणाय नमः, माधवाय नमः, गोविन्दाय नमः, विष्णवे नमः, मधुसूदनाय नमः, त्रिविक्रमाय नम, वामनाय नमः, श्रीधराय नमः, हृषीकेशाय नमः, पद्मनाभाय नमः, अनिरुद्धाय नमः इति द्वादशनामभिरभ्यर्च्य गन्धाद्यैः हव्यान्नेन सम्भोज्य च दक्षिणां दद्यात्। एकं चापरं त्रयोदशं द्विजश्रेष्ठमात्मविदं जितेन्द्रियम् विष्णुरूपिणमभ्यर्च्य पुरुषसूक्तेन यथाशक्ति तस्यै वस्त्रालंकरणादीनि दद्यात्। तदुच्छिष्टसन्निधौ च भूमौ दर्भानास्तीर्थ ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ॐ स्वः स्वाहेति मन्त्रेण यतिनिमित्तं बलित्रयं दद्यात्। एवं यतिक्रियां कुर्वन् जनः अश्वमेधसहस्रस्य वाजपेयशतस्य च फलमश्नुते। सर्वं चैतन्निर्णयसिन्ध्वादिनिबन्धेषूपपादितं सप्रमाणम्।

**प्रोषितमृतस्यान्त्येष्टिः—**

प्रोषितमृतानामन्त्येष्टिरपि भिन्नैव। तत्राहिताग्नीनां प्रोषितमृतानां सूचनां प्राप्य तद्बान्धवाः तस्यास्थीनि शवाभावे आनयेयुः, यतः त्रिभिरग्निभिः तद्दाहं विना गत्यन्तराभावः[3]। तत्रास्थीनि त्र्यस्त्रिंशद इति

---

(१) बौ० पि० सू० [३/११/१-३]

(२) त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः।
यतेः किञ्चिन्न कर्तव्यं न चान्येषां करोति सः॥ ब्राह्मवचनम्॥
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। (एकोद्दिष्टमेकादशाहश्राद्धम्)
सपिण्डीकरण तेषां न कर्त्तव्यं सुतादिभिः।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥ उशनाः॥ नि०सि०[पृ० ११३८-३९]

(३) विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा।
दाहयेद्र्हिषाच्छाद्य पात्रन्यासादिपूर्ववत्॥
अस्थ्नामलाभे पर्णानि शकलान्युक्तमावृता।
दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम्॥ छन्दोगपरिशिष्टम्॥
नि० सि० [पृ० ११४४]

वौधायनः। अस्थीनि च घृतेनाभ्यज्य वर्हिभिराच्छाद्य यथापूर्वं तत्पात्रादि तदन्तिके निधाय विधिवद्दाहं कुर्यात्। यदि तु अस्थ्नामप्यलाभः तर्हि यस्यां दिशि प्रेतः स तदभिमुखीभूय प्रेतं नामग्राहं समाहूय कृष्णमृगाजिनोपरि एकं नराकारं निर्माय घृतेन मधुना वाभ्यज्य तत्र यज्ञपात्राणि विन्यस्य तत्र दर्भानास्तीर्य दहेत् इति। वौधायनः[१]। तत्र त्रिशतषष्टिभिः पलाशपत्रैः समिद्भिर्वा नराकारम् निर्माय दाहयेत् इत्युक्तम्। कल्पतरौ तु कृष्णाजिने षष्ट्यधिकत्रिशत-पलाशपत्रैर्नराकारं कृष्णाजिने विधायाजिनेन तं परिवेष्ट्य ऊर्णासूत्रेण वध्वा यवपिष्टैः प्रलेप्य प्रेतनाम्ना जलं समर्प्य आज्येन अनुलिप्य तं पुनर्मृद्भिर-नुलिप्य सन्दहेदिति विशेष[२] उक्तः।

यदि पुनः कृतसंस्कारः पुनरागच्छेत् तर्हि तं घृतकुण्डे निमज्ज्योत्तीर्य स्नापयित्वा जातकर्मादि संस्कारान् क्रियेरन्, द्वादशरात्राणि व्रतानि त्रिरात्रान्तानि वा कुर्यात्ततः शुध्यति[३]।

**अन्त्येष्ट्यनर्हाः—**

शास्त्रकाराणां मते सन्ति केचनैतादृशा अपि मानवाः ये नार्हन्त्य-न्त्येष्टिसंस्कारम्। एते च शस्त्रहताः, विषहताः, रज्जुहताः, वृक्षान्निपत्यहताः, पर्वतान्निपत्य निहताश्च[४]। गौतमस्त्वाह[५]—एषां मरणेऽपि शवसंस्कारम् कुर्यात्, आशौचन्त्वत्र सद्य एवेति। अत्र ब्रह्मपुराणम्—

---

(१) बौ० पि० सू० [३/७/४]

(२) अस्थीनि चेन्न लभ्यन्ते प्रोषितस्याग्निहोत्रिणः।
पलाशपत्रवृन्तानां षष्ट्यधिकशतत्रयम्॥
कृष्णाजिने नराकारं कृत्वावेष्ट्याजिनेन तम्।
ऊर्णासूत्रेण वध्वैव यवपिष्टैः प्रलेपयेत्॥
निर्दिश्य दद्यात्तत्तोयं नाम्नेत्याहाश्वलायनः।
अङ्क्त्वाज्येन दहेत् कृत्वा मृद्दिग्धं त च पार्श्वतः॥ कृत्यकल्पतरु-सं०ख०

(३) बौ० पि० सू० [३/७/४]

(४) तत्रैव [३/७,१]

(५) गौ० ध० [२/५/१०-११]

क्रोधात् प्रायं विषं वह्निः शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
ब्रह्मदण्डहता ये च ये चैव ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः ॥
पतितानां न दाहः स्यान्न च स्यादस्थिसंचयः ।
न चाश्रुपातः पिण्डो वा कार्या श्राद्धक्रिया न च[1] ॥ इति ।

मनुरप्याह—

वृथा संकरजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्ततोदकक्रिया ॥
पाखण्डमाश्रितानां च चरन्तीनां च कामतः ।
गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम्[2] ॥ इति ।

याज्ञवल्क्योऽप्येनमर्थं समर्थयति—

पाखण्ड्यनाश्रिताः स्तेनाः भर्तृघ्न्यः कामगादिकाः ।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः[3] ॥ इति ।

अत्र सुराप्य इत्यादिषु लिङ्गमविवक्षितमिति विज्ञानेश्वरः । तथा च पुंसामपि सुरापानकर्तॄणां नाशौचादिकम् इति सिध्यति । सुरापत्वं चोपलक्षणमन्येषामपि महापातकिनाम् । अत एवोक्तब्रह्मपुराणवचने 'महापातकिनो ये च' इति सामान्येनैव निषेधः कृतः । तदेतत्सर्वं ज्ञानपूर्वकत्वे आत्मघातादेर्ज्ञेयम् । यदि त्वज्ञानत एव कश्चित् पर्वतादेः पतित्वा म्रियेत तर्हि तस्याशौचादिकं कार्यमेवेति शास्त्रनिर्णयः[4] ।

इत्थं संक्षिप्यास्माभिरुपस्थापितमन्त्येष्टिस्वरूम् । सम्प्रति समाजे प्रेतभयस्येयान् प्रकर्षो दृश्यते येन सर्वतोऽधिकमवधानमत्रैव कर्मणि दीयते । परन्तु यथाविधि नानुष्ठानमधुना क्रियते । प्रायेणाव्यवस्थैव सर्वत्र प्रान्ते दृग्गोचरमायाति । क्वचित् क्वचित् साध्वनुष्ठानं दक्षिणदेशे दृश्यते ।

---

(१) गौ० ध० मि० [२/५/११]
(२) म० स्मृ० [५/८९-९०]
(३) या० स्मृ० [३/६]
(४) अङ्गिराः—यदि कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥
गौ० ध० मि० [२/५/११]

इदं चात्रावधातव्यम्—सम्प्रति समाजे अन्त्येष्टिरशुभभावनयैवं वीक्ष्यते। परन्तु शास्त्रदृष्ट्या नैतत्तथा। इयमपि वस्तुतः तथैव संस्कारत्वं भजते यथोद्वाहोपनयनादयः। यथाह बौधायनः—"जातस्य वै मनुष्यस्य ध्रुवं मरणमिति विजानीयात्, तस्माज्जाते न प्रहृष्येत् मृते च न विषीदेत्।

अकस्मादागतं भूतमकस्मादेव गच्छति।
तस्माज्जातं मृतं चैव संपश्यन्ति सुचेतसः॥

तस्माज्जातस्य वै मनुष्यस्य द्वौ संस्कारावृणभूतौ भवतः—जातसंस्कारः, मृतसंस्कारश्चेति विज्ञायते—जातसंस्कारेणेमं लोकं जयति मृतसंस्कारेणामुं लोकम्"[१] इति। अतोऽनुष्ठेयमिदमपि कर्माशोकेनैव साधु कर्त्तव्यबुध्या। यथाह भगवान्[२]—"ग ता सू न ग ता सूं श्च ना नु शो च न्ति प ण्डि ता.॥"

(१) बौ० पि० सू० [३/१/२-४]
(२) गीता [२/११]

# उपसंहारः

इयता प्रबन्धेन निरूपितमिदं यत् एते संस्काराः भारतीयानां विशेषेण द्विजन्मनां सर्वाभ्युदयार्थं तत्वदर्शिभिः मुनिभिः यथायथं स्वप्रज्ञया सर्वविद्यामयाद्वेदात्साक्षात् परम्परया वा प्रकटीकृताः। अत एव सर्वेषां संस्काराणां सम्पादनाय प्रायेण वैदिकाः तत्कल्पाः पौराणिका वा मन्त्रा विनियुक्ता दृश्यन्ते तेषु तेषु गृह्यसूत्रेषु धर्मसूत्रादिषु च।

एतेषां संस्काराणामनुष्ठानं प्रथमतो धार्मिकदृष्ट्या प्रवृत्तम्। धर्मश्च प्रयोजवान् वेदैकप्रतिपाद्यार्थं एवेति[१] मीमांसासिद्धान्तः। ततश्च विहितानां संस्काराणां यथाविध्यनुष्ठानेन धर्मार्जनं सहजमेव। येऽपि वैशेषिकादयः 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'[२] इति रीत्या धर्मं परिभाषन्ते तेऽपि नास्माकं संस्काराणां धर्मजनकत्वं निघ्नन्ति। अभ्युदया हि इहलोकसमृद्धिः परमपुरुषार्थावाप्तिश्च निःश्रेयसमभिमतं तान्त्रिकाणाम्। तत्राशेषविशेषगुणोच्छेदो वा परमपुरुषार्थः, विशुद्धविज्ञानोदयो वा, अविद्यानिवृत्तिर्वा, ब्रह्मावाप्तिर्वा यद्वा तद्वा भवतु, परं संस्कारा एते साक्षात् परम्परया वा अभ्युदयनिःश्रेयससाधनं भवन्त्येव। यथाह भगवान् मनुः—

कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च[३] ॥ इति।

अस्यायमाशयः—द्वैतवादो वा स्यादद्वैतवादो वा कर्मणा चित्तं तद्द्वारा चात्मा स्वतो वाकलुषितं भवतीति निर्विवादमेव। अत एव सर्वेऽपि कर्मानुष्ठानं मन्यन्त एव चित्तशुद्ध्यर्थम्। येऽपि अद्वैतिनः संसारं दृश्यमानमनाद्यनिर्वचनीयाविद्यापरिकल्पते निवर्त्तमात्रं सच्चिदानन्दानन्तस्य ब्रह्मणोऽपरिणामिनोऽभ्युपगच्छन्ति तेऽपि नित्यनैमित्तिककर्मानुष्ठानं पाप्मापनोदार्थं चित्तपरिशुद्ध्यर्थं मन्यन्त एव। तत्र तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन[४] इति बृहदारण्यकश्रुतिमाश्रित्य कर्मोपयोग

(१) मी० द० शा० भा० [१/१/१]
(२) वै० द० [१/१/२]
(३) म० स्मृ० [२/२६]
(४) बृ० उ० [४/४/२२]

मन्यमाना अपि शाङ्कराः विविदिषायां कर्मणामुपयोगे। वेदनं एव वेत्यत्र परस्परं विवदन्तु नाम, अस्माकं कृते त्वेतावतैव समीहितसिद्धिः यत्तु कर्मावश्यकं मन्यन्ते नित्यं नैमित्तिकं प्रायश्चित्तोपासने च। नैयायिकादीनान्दार्शनिकानान्तु कथैव नास्ति, तैः "दृष्टानां दृष्टप्रयोजनानां दृष्टप्रयोजनाभावे प्रयोगोऽभ्युदयाय[1]" इति वदद्भिः मुक्तकण्ठमेव कर्मोपयोगाधिगमात्। कर्म चात्र निष्काममेवेति तु सत्यमेव। परं नैतावताऽस्माकं विरोधः। यत्तु 'कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः' इत्यादौ कर्मनिन्दा तत्तु सकामस्यैव कर्मण इति 'द्रविणमीहमानाः' इत्यनेन स्पष्टीकृतत्वादस्यार्थस्य। अत एव भागवते प्रह्लादनृसिंहसंवादेऽप्युक्तम्—यत् सकामा भक्ता न ते वस्तुतो भक्ता अपि तु वणिजा[2] एवेति। युक्तं चैतत्, कथमन्यथा 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्'[3] इति प्रतिक्षणं क्रियमाणस्य कर्मणः सामान्यतो निन्दोचिता सत्यामपि "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं[4] समाः" इत्यादिपरश्शतायां श्रुत्याम्। अत एव भागवती गीतापि प्राह—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति[5]॥ इति,
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते[6]॥ इति च।

अत एव च विहिताननुष्ठानेन निन्दितस्य चानुष्ठानेन प्रायश्चित्तीयत्वमभिहितं ब्रह्मविद्भ्यो मन्वादिभ्योऽपि। यदि हि नाम कर्म सर्वथैव वर्ज्यं स्यात्, कथं तदननुष्ठानेन प्रायश्चित्तीयत्वमुपपन्नं स्यात्।

---

(१) वै० द० [१०/२/८]

(२) नान्यथा तेऽखिलगुरो घटेत करुणात्मनः।
यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्॥
आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः।
न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः॥
श्री० भा० [७/१० ४-५]

(३) गीता [३/५]
(४) य० सं० [४/२]
(५) गीता [३/४]
(६) तत्रैव [६/३]

तस्मात् कर्म कर्त्तव्यमात्मज्ञानिभिरपीति स्थितम्। अत एव च संस्कारा अप्यनुष्ठेया एवेति तत्र तत्र शास्त्रवचनेन असकृदेवावेदितमस्माभिरपि। अत एव ते संस्कारा निष्कामबुध्या क्रियमाणा आत्मशुद्ध्यै कल्पन्ते[1]। तदर्थं च धर्मजनकत्वमेषां संस्काराणां व्यवस्थितम्।

सामाजिकदृष्ट्यापि संस्काराः कर्तव्या एव। समाजोत्थानाश्रयीभूतं हि कर्म सामाजिकं कथ्यते। समाजस्योत्थानं हितं वा तावन्न सम्भवति यावत् कर्तव्यस्यानुष्ठानं न साधु क्रियते। कर्तव्यपरायणा एव मनुष्याः सर्वत्र समुन्नता अद्यापि दृश्यन्ते। कर्तव्यपरायणैश्च सर्वैरेवातः स्वस्य स्वसमाजस्य च हितार्थं भाव्यम्। इयमेवार्थमनुवदति भगवद्गीता—

स्वे स्वे कर्मण्यभिरतः सिद्धिं विन्दति मानवः[2] ॥ इत्यनेन।

कर्तव्यं च द्विविधम्—किञ्चिद्दृष्टफलम्, अपरमदृष्टफलम्। तत्र दृष्टफलके कर्मणि आपाततः कर्तव्यत्वप्रतीतावपि तत्र प्राप्यस्य फलस्य वास्तवमुपकारकत्वं न वेति निर्णयः, अदृष्टफलकेषु च फलस्वभावनिर्णयः शास्त्रैकसमधिगम्यः। अत एव गीतायामुक्तम्—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ॥ इति,

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ[3] ॥ इति च ॥

अत्र प्रसंगे महाकवेर्भारवेर्वचोऽप्यश्चति स्मृतिपथम्—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्[4] ॥ इति।

शास्त्रं च विधिस्वरूपमुपनीयीतेत्यादिरूपं स्पष्टमेव संस्काराणां कर्तव्यत्वमाह। लोकाश्चानुकारिणो भवन्तीति सुप्रसिद्धम्। तत् यद्यग्रजाः पुरुषा शास्त्रप्रतिपादितानेतान् नानुतिष्ठेयुस्तर्हि तदनुजायमाना जनास्तदनुकारिणोऽपि नानुति-

---

(१) इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ म० स्मृ० [१२/८९-९०]

(२) गीता [१८/४५]

(३) तत्रैव [४/१६]

(४) किरातार्जुनीयम्—[२/३३]

ष्ठ्युरेवैतान्। तथा च ये दोषाः समागच्छेयुस्ते श्रीमता भगवता श्रीकृष्णेनैव परिगणिताः—

यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः॥
उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम्।
संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम्॥
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत् सर्वकर्माणि विद्वान्युक्तः समाचरन्[1]॥ इति॥

तस्मात् समाजमप्युन्नेतुं संस्काराचरणमतीवावश्यकम्।

राजनैतिकदृष्ट्यापि संस्काराचरणं महत्त्वपूर्णमेव वर्तते। न हि स्वाधिकारपरिग्रहोऽवबोधो वा स्वाधिकारस्याध्ययनमन्तरा सम्भवति। अध्ययनं च विधिवत् क्रियमाणमेव ज्ञानाय कल्पते सौभाग्याय च। विधिवदध्ययनमपि तावन्न भवेत् शक्यं कर्त्तुं यावदुभये न संस्कृताः। अविधिपूर्वकाध्ययने यो लाभो वा हानिर्वा जन्यते तदद्य कैर्न ज्ञायते। सर्वत्र छात्रान्दोलनं पश्यामोवयम् निरन्तरम्। तद् यदि व्यवस्थितमध्ययनं स्यात् तर्हि सर्वं परिहृतं स्यात्। यद्य सर्वेऽपि शिक्षाशास्त्रविदो देशे विदेशे वा वर्तमानाः निर्द्वन्द्वमधिगच्छन्ति यत्प्राचीना भारतीया शिक्षापद्धतिरतीवोपयोगिनी शिष्येभ्यः। इयं च पद्धतिरस्माकं संस्कार एवेति प्रागेव अक्षरारम्भवेदारम्भमुखेन दर्शितमेव। यदि हि बाल्यावस्थायामेव वटुः गुरुकुलेऽधीते तर्हि गुरूपदेशात् अनुशासनाच्च तस्य तस्य श्रोत्रियस्याकामहतस्य वटुर्व्यवस्थितचित्तो विनम्रोऽभिवादनशीलो वृद्धोपसेवी च भवन् सर्वविधामुन्नतिं भजते। तदैव च सः राजनैतिकं सामाजिकं चाधिकारं स्वकीयं जानन् स्वस्य समाजस्य चाधिकारपरिपालनार्थं नेतृत्वं कर्तुं शक्तो भवेत्। अत एव सैनापत्यं राज्यं दण्डनेतृत्वादि च सर्वं वेदशास्त्रविदेवार्हति इत्युक्तम्[2]।

---

(१) गीता [३ २३-२६]
(२) सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥ [ म० स्मृ० १२/१०० ]

येऽप्याधुनिकाः मन्वादिस्मृतिमस्वीकुर्वाणाः स्वतन्त्राः सन्ति तेऽप्येनमर्थं नापलपन्ति यत् विद्वांस एवाधिकारिणः सर्वेषां प्राशासनिककार्याणाम्। अत एव तत्र तत्र तथा तथा योग्यतापरीक्षा अपि सर्वकारेण निर्धारिताः सन्ति। विद्वत्त्वं च व्यवस्थिताध्ययनमन्तरा नैव सम्भवतीत्यवोचाम। व्यवस्थिताध्ययनं च सर्वांशेन भवेन्नवेदित्यत्र विवादसम्भवेऽपि अंशतोऽस्माकं संस्कार एवेत्यत्र कः संशयः ? तस्माद् यदि सर्वात्मना संस्कारा राजनैतिकनैपुण्याय नापि समर्थास्तथापि तत्पूर्वपीठिकाधायकास्तु सन्त्येव। एतच्च वर्तमानयुगे प्रचलितां दण्डनीतिव्यवस्थामाश्रित्योक्तम्। प्राचीनकालिकीं तद्व्यवस्थामाश्रित्य कथनमपेक्ष्यते चेत्तदा सर्वविधदण्डनीत्यधिकाराः संस्कृतानामेव द्विजन्मनां विशेषेणेति भृशमुपवर्णित भारतादौ।

नैतिकदृष्टयापि संस्काराणामावश्यकता वर्तते। कदा केन कथं व्यवहरणीयमिति सर्वतः प्रथमं कृत्यम् नैतिकशास्त्रस्य। तच्च व्यवहारविधानम् नान्तरा संस्कारान्। अस्माकं सस्कारा एवास्मान् शिक्षयन्ति केन सह कथं व्यवहर्त्तव्यम्। अत्रार्थे प्रमाणतया मनूक्ता व्यवस्था स्मर्तव्या। गुरुभिः सह कथं व्यवहर्त्तव्यम्, कथं चाचार्यादयो विशिष्टा जनाः अभिवादनीयाः, कथं च अनेकेषां मान्यानां युगपदुपस्थितौ सम्मानं कुर्याद् इति सर्वमेवाह भगवान् मनुर्ब्रह्मचारिधर्मवर्णनप्रसङ्गे। अन्यत्रापि धर्मशास्त्रे शौचाचारास्तु शिक्षयेदित्यनेन संस्कारस्य आचारशिक्षणफलकत्वं कण्ठत एवोक्तम्। प्रायः सर्वा अपि शिक्षाः नैतिकशास्त्रसम्बद्धा ब्रह्मचर्यव्रतपालनप्रसंगे प्रदत्ता एव शास्त्रे। तस्मान्नैतिकदृष्ट्यापि संस्काराणामवश्यकर्त्तव्यत्वं सिध्यति।

एवमेव स्वास्थ्यदृष्ट्यापि संस्कारा अतिशायिन एव। तथाहि स्त्रीसंगातिशयात्क्षयी भवति इति सुप्रसिद्धम्। इतरेऽपि रोगाः क्षीणानाक्राम्यन्त्येवेत्यप्यनुभवसिद्धम्। तत्र गर्भाधानं हि कर्म सङ्गमादिकृत्यं तथा नियंत्रयति यथोभयोः स्त्रीपुंसयोः स्वास्थ्यं वर्त्तेत। एवमेव पुंसवने गर्भिण्या दक्षिणनासापुटे वटशुङ्गरसः प्रदीयते येन गर्भपातो मा भूत्। वटवृक्षे एतावान् गुणः यत् स गर्भकालिक्याः सकलव्यथायाः निरोधको भवति। एतच्च सुश्रुतेन सुव्यक्तमेवोक्तम् सूत्रस्थाने। तेनैवैतदप्युक्तम्—पुत्रकामायाः स्त्रिया गर्भिण्याः दक्षिणे नासापुटे वटशुङ्गस्य, सहदेव्याः, विश्वदेव्याः वा ओषधिं क्षीरेणाभिघुट्य त्रींश्चतुरो वा बिन्दून् निदध्याद् इति। एतचच शारीरस्थाने द्वितीयाध्याये दृश्यते सुश्रुतसंहितायाः। सीमन्तोन्नयनमपि शिशोर्मानसिकविकाशमभिलक्ष्यैव क्रियमाणं प्रतीयते। पञ्चमे हि मासे शिशोर्मनः प्रतिबुद्धतरं भवति। तदानीं हि स्त्रीप्रसादनं क्रियमाणं गर्भस्थस्य शिशोः गर्भिण्याश्च शरीरलाभाय

कल्पते। गर्भिणीधर्मा अपि शास्त्रोक्ताः शरीरसम्पुष्ट्यै तद्रक्षणाय वा निर्दिष्टा इति शरीरस्थानान्तर्गतैकादशाध्यायपरिशीलनेन स्पष्टमेवावगम्यते।

जातकर्माङ्गभूतं मेधाजनन प्रागुपदर्शितमेव प्रसङ्गे। तत्र घृतप्राशनमप्युक्तम्। घृतं च सौन्दर्यजनकम्, मेधावर्धकं, योषापस्मारशिरोवेदनामृगीज्वरादिविनाशकरम्, पाचनशक्तिस्मृतिबुद्धिप्रज्ञातेजोमधुरध्वनिवीर्यायुर्वर्धकम् इति सुश्रुतादिभिरुक्तमेव शरीरस्थाने ४५ अध्याये। तथा चैतस्यापि संस्कारस्य स्वास्थ्यजनकत्वमविरुद्धमेव। एवमेव नक्षत्राश्रितनामकरणेऽपीदमेव फलं यद् अन्ये तदादाय अभिचारादिप्रयोगं कर्त्तुं न पारयेयुरज्ञानात्तेषां तन्नाम्नः। अत्रापि स्वास्थ्यभावना स्फुटैव। एवमेव चूडाकरणमपि स्वास्थ्यवर्द्धकमेव। सुश्रुतः स्पष्टमाह—

पापोशमनं केशनखरोमापमार्जनम्।
हर्षलाघवसौभाग्यकरमुत्साहवर्धनम्॥ इति॥

चरकेऽप्युक्तम् -

पौष्टिकं वृष्यमायुष्यं शुचिरूपं विराजनम्।
केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम्॥ इति॥

यद्यपि केचन 'मानवशास्त्रिणोऽस्य फलं केशान् छित्वा यस्मै कस्मैचिद्देवाय समर्पणमेव'[1] मन्यन्ते तथाप्येतत् चूडाकरणविषये न प्रामाणिकम्। अस्माकं शास्त्रे प्राक्तनकालादेव चूडाकरणस्य तथाफलाऽनुल्लेखात्।

कर्णवेधविषये सुश्रुतः स्पष्टमेवाचष्टे—'रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येत्' इति,

शंखोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम्।
व्यत्यासाद्वा शिरोविध्येदन्त्रवृद्धिनिवृत्तये॥ इति च।

एतावता सिध्यत्येवैतत् यद् एते संस्काराः स्वास्थ्यदृष्ट्याऽपि अतीवावश्यकाः। धार्मिकभावना सर्वत उपरिवर्त्तते एवात्र विषये। अत एते संस्कारा अवश्यमेवानुष्ठेया द्विजातिभिः स्वेषाम् सामाजस्य च सर्वविधसमुन्नत्यै।

परन्त्वद्यतनीने युगे संस्काराः प्रायेणोपेक्षिताः। तत्र केवलं विवाहोपनयनश्राद्धसंस्कारा एव मुख्यतः कथं कथमप्यनुष्ठीयन्ते द्विजातिभिः। एषामनुष्ठानमपि न विधिवत् क्रियते, यथाकथञ्चिदनुष्ठानमात्रं दृश्यते। अन्येषां तु संस्काराणामंशतोऽप्यनुष्ठानं न दृश्यते समाजे। सन्ति सन्तः कियन्तः ये

(१) क्राफर्ड हावेल टाय :-इन्ट्रोडक्शन टु दि हिस्ट्री आफ रिलिजन्स [पृ० ८१]

समनुतिष्ठन्ति एतानपि संस्कारान् यथाशक्ति यथासमयं च। परन्तु सामान्या प्रवृत्तिस्तूपेक्षात्मिकैव दरीदृश्यते भारतीयेऽस्मिन् समाजे। इदमतीवचिन्ता-स्पदम्। वर्तमाना हि भारतीया द्विजातयः सम्प्रति ईदृशा जाता येनैते स्वोपकारकरमपि कर्म नानुतिष्ठन्तीति महदाश्चर्यकरम्।

अत्र कारणन्तु मुख्यतो द्वयमेवावगच्छामः। प्रथमं कारणं वैदेशिकः प्रभावः। एतेनाद्य भारतीयास्तथा प्रभाविताः सन्ति यत् स्वस्वकर्माणि एते निष्प्रयोजनान्येवान्धविश्वासमूलानि मन्यन्तेऽविचार्यैव तत्त्वमेतेषां संस्कारा-णाम्। भौतिकविलासपरिपूर्णेऽस्मिन् खण्डे भुवः सर्वे तत्रैवाकृष्टाः न कदा-चिदपि प्रायेण चिन्तयन्त्यपि यत् किं वयमद्य कुर्मः। क्षणभङ्गुरेऽस्मिन् विलासे समासक्ताः सर्वं कर्तव्याकर्तव्यं विस्मृतवन्त एते।

अपरं च कारणमवगच्छामो वयं शास्त्रवैविध्यम्। एकमेव विषयं प्रकृत्य एतावन्ति मतानि प्रवर्त्तितानि सन्ति येनानुष्ठातारो भ्राम्यन्ति किं कार्यं कथं च कार्यमित्यत्र। गृह्यसूत्राणां यथाकथञ्चित् शाखाभेदमादाय सामञ्जस्ये स्वीकृतेऽपि स्मृतीनां पुराणानां च वचांसि शाखाभेदाविषयकाणि परस्पर-विरुद्धानि कथमस्माभिरतीन्द्रियार्थाज्ञानिभिः संगमनीयानीति न विद्मः। येऽपि निबन्धकाराः तेषामपीयमेव दुरवस्था। तेऽपि नैकमताः क्वापि प्रसङ्गे। एकस्यैव वचनस्य एतावन्ति पाठान्तराणि लभ्यन्ते येन वयं निर्णेतुं न प्रभवामः किं मान्यं किममान्यमिति।

तस्माद्द्येयमावश्यकता वर्तते यत्सर्वे विद्वांसः परस्परं निर्दुराग्रहाः सन्तः सूक्ष्मेक्षिकया सर्वार्थान् आधिभौतिकाधिदैविकाध्यात्मिकदृष्टिभिः संशोध्य जनानां पुरतोऽसन्दिग्धरूपेण स्थापयेयुः येन समाकृष्टाः सन्तः सर्वेऽपि यथाधि-कारमनुष्ठानमेषां कर्मणां विदध्युरिति॥

अधीत्य विधिवच्छास्त्रं तदर्थमभिचिन्त्य च।
संस्कुर्युः सर्वकामाद्यैः स्वान् स्वकांश्च द्विजोत्तमाः॥

:o—o:

# आकरग्रन्थ-सूची

(क) वेदाः—

अथर्ववेदसंहिता
ऋग्वेदसंहिता
तैत्तिरीयसंहिता
यजुर्वेदसंहिता
वाजसनेयिसंहिता
सामवेदसंहिता
ऐतरेयब्राह्मणम्
गोपथब्राह्मणम्
ताण्ड्यब्राह्मणम्
तैत्तिरीयब्राह्मणम्
पञ्चविंशब्राह्मणम्
शतपथब्राह्मणम्
ऐतरेयारण्यकम्
तैत्तिरीयारण्यकम्
कठोपनिषद्
छान्दोग्योपनिषद्
तैत्तिरीयोपनिषद्
बृहदारण्यकोपनिषद्
श्वेताश्वतरोपनिषद्

(ख) श्रौतसूत्राणि—

आपस्तम्बश्रौतसूत्रम्
आश्वलायनश्रौतसूत्रम्
कात्यायनश्रौतसूत्रम्
सांख्यायनश्रौतसूत्रम्।

(ग) गृह्यसूत्राणि—

आपस्तम्बगृह्यसूत्रम्—अनाकुलातात्पर्यदर्शनाभ्यां सहितम्।
आश्वलायनगृह्यसूत्रम्— नारायणवृत्तिसमेतम्।
काठकगृह्यसूत्रम्
कौशीतकिगृह्यसूत्रम्
खादिरगृह्यसूत्रम्—रुद्रस्कन्दवृत्तिसहितम्
गोभिलगृह्यसूत्रम्—नारायणभाष्यसमेतम्
" " —तर्कालङ्कारभाष्योपेतम्
जैमिनिगृह्यसूत्रम्
द्राह्यायणगृह्यसूत्रम्—रुद्रस्कन्दवृत्तिसहितम्
पारस्करगृह्यसूत्रम्—कर्कजयरामहरिहरगदाधरविश्वनाथभाष्योपेतम्
बौधायनगृह्यसूत्रम्
भारद्वाजगृह्यसूत्रम्
मानवगृह्यसूत्रम्
लौगाक्षिगृह्यसूत्रम्—देवपालभाष्यसहितम्
वाराहगृह्यसूत्रम्
शाङ्खायनगृह्यसूत्रम्
हिरण्यकेशिगृह्यसूत्रम्

(घ) धर्मसूत्राणि—

आपस्तम्बधर्मसूत्रम्—उज्ज्वलासहितम्
गौतमधर्मसूत्रम्—मिताक्षरावृत्तिसहितम्
बौधायनधर्मसूत्रम्
बौधायनपितृमेधसूत्रम्
वसिष्ठधर्मसूत्रम्
विष्णुधर्मसूत्रम्
शङ्खलिखितधर्मसूत्रम्

(ङ) गृह्यपरिशिष्टम्—

आश्वलायनगृह्यपरिशिष्टम्
गृह्यासंग्रहः—चन्द्रकान्तभाष्योपेतः
गौतमश्राद्धकल्पः
कात्यायनश्राद्धकल्पः

(च) स्मृतयः—

अत्रिस्मृतिः
आङ्गिरसस्मृतिः
आपस्तम्बस्मृतिः
आश्वलायनस्मृतिः
कपिलस्मृतिः
कात्यायनस्मृतिः
गौतमस्मृतिः
दक्षस्मृतिः
देवलस्मृतिः
नारदस्मृतिः
पाराशरस्मृतिः (लघ्वी वृहती च)
वृहस्पतिस्मृतिः
बौधायनस्मृतिः
मनुस्मृतिः—मेधातिथिभाष्योपेता
,, —मन्वर्थमुक्तावलीसहिता
मार्कण्डेयस्मृतिः
याज्ञवल्क्यस्मृतिः—मिताक्षरोपेता
,, ,, —अपरार्कटीकायुक्ता
,, ,, —बालक्रीडोपेता
लघुहारीतस्मृतिः
वृहद्धारीतस्मृतिः
लौगाक्षिस्मृतिः
व्यासस्मृतिः
शङ्खस्मृतिः
संवर्त्तस्मृतिः

(छ) पुराणानि—

अग्निपुराणम्
पद्मपुराणम्
विष्णुपुराणम्
विष्णुधर्मोत्तरपुराणम्

भविष्यपुराणम्
ब्रह्मपुराणम्
ब्रह्माण्डपुराणम्
लिङ्गपुराणम्
श्रीमद्भागवतम्

(ज) आर्षग्रन्थाः—

वाल्मीकिरामायणम्
महाभारतम्—गीता च

(झ) गृह्यकारिका—

आश्वलायनगृह्यकारिका

(ञ) पद्धतयः—

आपस्तम्बपद्धतिः
गर्गपद्धतिः
दशकर्मपद्धतिः—रामदत्तमैथिलकृता
पारस्करगृह्यपद्धतिः—वसुदेवकृता
संस्कारपद्धतिः—दयानन्दकृता
(षोडश) संस्कारपद्धतिः—भीमसेनविरचिता
संस्कारपद्धतिः—मैथिलवीरेश्वरग्रथिता

(ट) निबन्धाः—

कर्मप्रदीपः
कृत्यकल्पतरुः—लक्ष्मीधरकृतः
कृत्यचिन्तामणिः—चण्डेश्वरविरचितः
कृत्यरत्नाकरः— " "
चतुर्वर्गचिन्तामणिः—हेमाद्रिसंग्रथितः
निर्णयसिन्धुः—कमलाकरविरचितः
पाराशरमाधवीयम्—माधवरचितः
मदनपारिजातः—मदनराजसंग्रथितः
वीरमित्रोदयः—मित्रमिश्रविरचितः
श्राद्धमयूखः—नीलकण्ठविरचितः

श्राद्धविवेकः—रुद्रधरविरचितः
संस्कारकौस्तुभः—अनन्तदेवविरचितः
संस्कारतत्त्वम्—रघुनन्दनविरचितम्
संस्कारमयूखः—नीलकण्ठविरचितः
संस्काररत्नमाला—गोपीनाथकृता
स्मृतिकौमुदी—मदनपालकृता
स्मृतिचन्द्रिका—देवणभट्टकृता
स्मृतितत्त्वम्—रघुनन्दनविरचितम्
स्मृतिमुक्ताफलम्—वैद्यनाथरचितम्

## (ठ) कोशग्रन्थाः—

अमरकोशः
मेदिनीकोशः
वाचस्पत्यम—तारानाथसंगृहीतम्
वैजयन्तीकोशः—यादवाचार्यविरचितः
शब्दकल्पद्रुमः—राधाकान्तदेवसंग्रथितः

## (ड) प्रकीर्णग्रन्थाः—

अभिज्ञानशाकुन्तलम्—कालिदासकृतम्
उत्तररामचरितम्—भवभूतिविरचितम्
काशिकावृत्तिः—वामनजयादित्यविनिर्मिता
किरातार्जुनीयम्—भारविरचितम्
कुमारसम्भवम्—कालिदासकृतम्
चरकसंहिता—चरकसंग्रथिता
न्यायकन्दली (श्रीधरकृता पदार्थधर्मसंग्रहटीका)
न्यायकुसुमाञ्जलिः—उदयनाचार्यकृता
पदमञ्जरी (हरदत्तकृता काशिकाटीका)
महाभाष्यम्—प्रदीपोद्योतसमन्वितम्
मीमांसादर्शनम् शावरभाष्यसहितम्
मीमांसान्यायप्रकाशः—आपदेवविरचितः
यास्कनिरुक्तम्—महर्षियास्कप्रणीतम्
योगवार्त्तिकम—विज्ञानभिक्षुविरचितम्

योगसूत्रम्—पतञ्जलिविरचितम्
रघुवंशम्—संजीविनीयुतम्
,, —तात्पर्यदीपिकोपस्कृतम्
वैशेषिकदर्शनम्—कणादकृतम्
व्यासभाष्यम् (यो० सू० भाष्यम् व्यासविरचितम्)
श्लोकवार्त्तिकम्—कुमारिलभट्टविरचितम्
सुश्रुतसंहिता - महर्षिसुश्रुतसंस्कृता

(ढ) नव्यग्रन्थाः—

अल्तेकर एजुकेशन इन एन्श्येण्ट इण्डिया, वाराणसी १९३४
काणे—धर्मशास्त्र का इतिहास (हिन्दी), लखनऊ
कीथ, ए० बी०—रिलीजियन एण्ड फिलासफी आफ दि वेद एण्ड दि उपनिषद्स्—कैम्ब्रिज विश्वविद्यालय
केई, एफ० एच०—एन्श्येण्ट इण्डियन एजुकेशन, आक्सफोर्ड १९१८
कौल, एम०—मैरिज, पास्ट एण्ड प्रेजेण्ट
क्राफर्ड हावेला टाय—इण्ट्रोडक्शन टु दि हिस्ट्री आफ रिलीजियन्स
चैटर्जी, हेरम्ब—मैरिज इन एन्श्येण्ट इण्डिया, कलकत्ता, १९६५
चैटर्जी, कृष्णनाथ—हिन्दू मैरिज, पास्ट एण्ड प्रेजेण्ट, वाराणसी १९७०
जायसवाल, के० पी०—मनु एण्ड याज्ञवल्क्य, कलकत्ता १९३०
जाल्ली, जे०—हिन्दू ला एण्ड कस्टम्स. कलकत्ता १९२८
दास, ए० सी०—ऋग्वेदिक कल्चर, कलकत्ता १९२५
दास, एस० के०—दि एजुकेशनल सिस्टम आफ एन्श्येण्ट हिन्दूज, कलकत्ता—१९२३
पाण्डेय, राजबली—हिन्दू संस्कार, वाराणसी १९६६
फ्रेजर, जे० सी०—गोल्डेन वाउ, लन्दन १९२५
ब्लूमफील्ड, एम०—दि रिलीजियन आफ दि वेदाज, न्यूयार्क १९०८
बोस, पी० एन०-सर्वाइमल आफ हिन्दू सिविलिजेशन, कलकत्ता १९१३
मैकडानिल—वैदिक मीथोलाजी, स्ट्रासवर्ग-१८९७
मोनियर विलियम्स—इण्डियन विज्डम, लन्दन, १९३६
राधाकृष्णन् एच०—हिन्दू व्यू आफ लाइफ, लन्दन १९२७
रिवर्स—मैरिज आफ कजिन्स इन इण्डिया, १९०७
वेस्टमार्क, ई०—हिस्ट्री आफ ह्यूमन मैरिज, लन्दन १९२१

वैद्य, सी० वी०—एपिक इण्डिया, बम्बई १९३३
श्रेडर—आर्यन रिलीजियन—इन्साइक्लोपेडिया आफ रिलीजियन एण्ड एथिक्स
स्पेंशर—पिन्सिपुल आफ सोसियोलाजी, एडिनवरा, १८९३

(ण) पत्रिकादीनि—

इण्डियन एण्टिक्वेरी
इण्डियन कल्चर, कलकत्ता
जर्नल आफ ओरियेण्टल रिसर्च, मद्रास
जर्नल आफ दि एसियाटिक सोसाइटी, कलकत्ता
प्रोसीडिंग्स आफ ओरियण्टल कान्फरेन्स
प्रोसीडिंग्स आफ दि इण्डियन हिस्ट्री कांग्रेस
कल्चरल हेरिटेज आफ इण्डिया, कलकत्ता
सत्करी मुकर्जी अभिनन्दनग्रन्थ, वाराणसी।



# सङ्केताः

| | |
|---|---|
| अ० को० | अमरकोशः |
| अ० पु० | अग्निपुराणम् |
| अ० वे० | अथर्ववेदसंहिता |
| अ० शा० | अभिज्ञानशाकुन्तलम् |
| आप० गृ० | आपस्तम्बगृह्यसूत्रम् |
| आप० सु० भा० | आपस्तम्बधर्मसूत्रसुदर्शनभाष्यम् |
| आश्व० गृ० | आश्वलायनगृह्यसूत्रम् |
| आश्व० गृ० ना० वृ० | आश्वलायनगृह्यसूत्रनारायणवृत्तिः |
| आश्व० गृ० प० | आश्वलायनगृह्यपरिशिष्टम् |
| आश्व० श्रौ० | आश्वलायनश्रौतसूत्रम् |
| उ० रा० च० | उत्तररामचरितम् |
| ऋ० भा० भू० | ऋग्वेदभाष्यभूमिका (सायणस्य) |
| ऋ० वे० | ऋग्वेदसंहिता |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| क० उ० | कठोपनिषद् |
| क० प्र० | कर्मप्रदीपः |
| का० गृ० | काठकगृह्यसूत्रम् |
| काठ० गृ० | " " |
| का० सू० | कामसूत्रम् |
| कु० स० | कुमारसम्भवम् |
| कौ० गृ० | कौशीतकिगृह्यसूत्रम् |
| खा० गृ० | खादिरगृह्यसूत्रम् |
| गृ० सं० | गृह्यासंग्रह (चन्द्रकान्त) भाष्यम् |
| गो० गृ० | गोभिलगृह्यसूत्रम् |
| गो० गृ० च० भा० | गोभिलगृह्यसूत्रचन्द्रकान्तभाष्यम् |
| गो० गृ० त० भा० | गोभिलगृह्यसूत्रतर्कालङ्कारभाष्यम् |
| गो० गृ० ना० भा० | गोभिलगृह्यसूत्रनारायणभाष्यम् |
| गो० गृ० टि० | गोभिलगृह्यसूत्रटिप्पणी । |

| | | |
|---|---|---|
| गो० ब्रा० | गोपथब्राह्मणम् | |
| गौ० ध० | गौतमधर्मसूत्रम् | |
| गौ० ध० मि० | गौतमधर्मसूत्रमिताक्षरा | |
| च० सं० | चरकसंहिता | |
| छा० उ० | छान्दोग्योपनिषद् | |
| जै० गृ० | जैमिनिगृह्यसूत्रम् | |
| ता० द० | तात्पर्यदर्शनम् (आप० ध० टीका-सुदर्शनस्य) | |
| ता० ब्रा० | ताण्ड्यब्राह्मणम् | |
| तै० उ० | तैत्तिरीयोपनिषद् | |
| तै० सं० | तैत्तिरीयसंहिता | |
| द० स्मृ० | दक्षस्मृतिः | |
| द्रा० गृ० | द्राह्यायणगृह्यसूत्रम् | |
| नि० सि० | निर्णयसिन्धुः | |
| न्या० कु० | न्यायकुसुमाञ्जलिः | |
| प० ब्रा० | पञ्चविंशब्राह्मणम् | |
| पा० गृ० | पारस्करगृह्यसूत्रम् | |
| पा० गृ० क० भा० | ,, ,, | कर्कभाष्यम् |
| पा० गृ० ग० भा० | ,, ,, | गदाधरभाष्यम् |
| पा० गृ० ज० भा० | ,, ,, | जयरामभाष्यम् |
| पा० गृ० वि० भा० | ,, ,, | विश्वनाथभाष्यम् |
| पा० गृ० ह० भा० | ,, ,, | हरिहरभाष्यम् |
| पा० सू० | पाणिनीयसूत्रम् | |
| प्र० उ० | प्रश्नोपनिषद् | |
| वा० रा० | वाल्मीकिरामायणम् | |
| बृ० उ० | बृहदारण्यकोपनिषद् | |
| बृ० यो० या० स्मृ० | बृहद्योगियाज्ञवल्क्यस्मृतिः | |
| बृ० हा० स्मृ० | बृहद्धारीतस्मृतिः | |
| बौ० गृ० | बौधायनगृह्यसूत्रम् | |
| बौ० गृ० शे० | बौधायनगृह्यशेषसूत्रम् | |
| बौ० पि० मे० सू० | बौधायनपितृमेधसूत्रम् | |
| भा० गृ० | भारद्वाजगृह्यसूत्रम् | |

| | |
|---|---|
| म० भा० | महाभारतम् |
| म० भा० प्र० | महाभाष्यप्रदीपः |
| मन्वर्थमु०, म० मु० | मन्वर्थमुक्तावली |
| म० मे० भा० | मनुस्मृतिमेधातिथिभाष्यम् |
| म० स्मृ० | मनुस्मृतिः |
| मा० गृ० | मानवगृह्यसूत्रम् |
| मा० स्मृ० | मार्कंण्डेयस्मृतिः |
| मी० द० | मीमांसादर्शनम् |
| मी० न्या० प्र० | मीमासान्यायप्रकाशः |
| मे० को० | मेदिनीकोशः |
| य० सं० | यजुर्वेदसंहिता |
| या० अप० | याज्ञवल्क्यस्मृतेरपराकंटीका |
| या० स्मृ० | याज्ञवल्क्यस्मृतिः |
| यो० वा० | योगवार्त्तिकम् |
| यो० सू० | योगसूत्रम् |
| यो० सू० व्या० भा० | योगसूत्रव्यासभाष्यम् |
| लघुहा० स्मृ० | लघुहारीतस्मृतिः |
| लि० पु० | लिङ्गपुराणम् |
| लौ० गृ० | लौगाक्षिगृह्यसूत्रम् |
| लौ० गृ० दे० भा० | लौगाक्षिगृह्यसूत्रदेवपालभाष्यम् |
| वसिष्ठ०, व० ध० सू० | वसिष्ठधर्मसूत्रम् |
| व० स्मृ० | वसिष्ठस्मृतिः |
| वा० गृ० | वाराहगृह्यसूत्रम् |
| वा० सं० | वाजसनेयिसंहिता |
| वि० ध० सू० | विष्णुधर्मसूत्रम् |
| वि० पु० | विष्णुपुराणम् |
| वै० द० | वैशेषिकदर्शनम् |
| वै० स्मा० सू० | वैखानसस्मार्तसूत्रम् |
| शा० भा० | शावरभाष्यम् |
| शां० गृ० | शांख्यायनगृह्यसूत्रम् |
| श्रा० म० | श्राद्धमयूखः |
| श्री० भा० | श्रीमद्भागवतम् |

| | |
|---|---|
| श्लो० वा० | श्लोकवार्त्तिकम् |
| श्वे० उ० | श्वेताश्वतरोपनिषद् |
| सं० त० | संस्कारतत्त्वम् |
| सं० प्र० | संस्कारप्रकाशः |
| सं० म० | संस्कारमयूखः |
| सं० र० मा० | संस्काररत्नमाला |
| सा० द० | साहित्यदर्पणः |
| साम० | सामवेदसंहिता |
| सां० गृ० | सांख्यायनगृह्यसूत्रम् |
| सि० कौ० | सिद्धान्तकौमुदी |
| सु० सं० | सुश्रुतसंहिता |
| स्मृ० च० | स्मृतिचन्द्रिका |
| स्मृ० मु० | स्मृतिमुक्ताफलम् |
| हि० गृ० | हिरण्यकेशिगृह्यसूत्रम् |

—:—:०:—:—